हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़तृतीयपुस्तकमालायाः
३
वैशेषिकविभागे (१) प्रथमपुष्पम् ।

# वैशेषिकदर्शने

महर्षिप्रवरप्रशस्तदेवाचार्यविरचितं
प्रशस्तपादभाष्यम् ।
विद्वच्चूडामणि-श्रीशङ्करमिश्रविनिर्मितः
उपस्कारश्च ।

उभयत्र
काशीस्थवेदविद्यालयाध्यापक-न्यायोपाध्याय
पं० ढुण्ढिराजशास्त्रिकृतं विवरणम् ।
सर्वमेतत्संस्कृतमुक्तशास्त्रिणैव

काशीस्थ-
चौखम्बासंस्कृतपुस्तकालयाध्यक्षेण श्रेष्ठिकुलावतंस-
हरिदासगुप्तात्मजेन जयकृष्णदासगुप्तमहो-
दयेन विद्याविलासनाम्नि यन्त्रालये
मुद्रयित्वा प्रकाशितम् ।
ई. सन् १९२३

भाष्योपस्कारसहितस्य वैशेषिकदर्शनस्य

# भूमिका ।

प्रकाश्यते कणादस्य श्रीवैशेषिकदर्शनम् ॥
प्रशस्तपादभाष्येणोपस्कारेण च संयुतम् ॥ १ ॥
श्रीमान् कश्यपवंशेऽभून्मुनिर्योगविभूतिमान् ॥
भक्षयित्वा धान्यकणांश्चक्रे यस्तप उत्तमम् ॥ २ ॥
तत एव हि काणाद इति ख्यातोऽभवद्भुवि ॥
तस्याद्भुततपश्चर्यापरितुष्टो महेश्वरः ॥ ३ ॥
कृपयाऽखिलवस्तूनां ज्ञानदृष्टिं व्यधाच्छुभाम् ।
तेनैवाखिलमर्त्यानामुपकाराय निर्मितम्- ॥ ४ ॥
दर्शनं कृत्स्नशास्त्रेषु प्रधानं युक्तिसंभृतम् ।
"योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ॥ ५ ॥
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥"
इति प्रशस्तपादीयभाष्यान्तिमवचोबलात् ॥ ६ ॥
"कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ।
गौतमेन तथा न्यायं सांख्यन्तु कपिलेन वै " ॥ ७ ॥
इति पद्मपुराणीयवाक्यजातबलादपि ।
सूत्रकारस्योक्तमुनेः कस्मिन्देशे कदा ह्यभूत् ॥ ८ ॥
स्थितिरित्यधुनाऽशक्यं निर्णेतुं चर्मचक्षुषाम् ।
मिथिलायां कश्यपस्य गोत्रेऽभूदिति केचन ॥ ९ ॥
अस्यैवाभूदुलूकेति संज्ञाऽन्या कौतुकावहा ।
यतस्तद्दर्शनम्प्रोक्तमौलूक्यापरसंज्ञया ॥ १० ॥
माधवेन स्वके ग्रन्थे सर्वदर्शनसङ्ग्रहे ।
विस्तृतानामनेकत्र सूत्राणामर्थसङ्ग्रहम् ॥ ११ ॥
कृत्वा प्रशस्तदेवस्तु व्यरचीद्भाष्यलक्षणम् ।
वैशेषिकपदार्थानां धर्मसङ्ग्रहनामकम् ॥ १२ ॥

निबन्धं सूत्रसमितं लोकानुग्रहकारकम् ।
कालाद्यनिर्णयेऽप्यस्य भाष्यकारस्य धीमतः ॥ १३ ॥
परम(१)र्षित्वमेवाहुर्वात्स्यायनमुनेरिव ।
कन्दल्यां श्रीधराचार्यैर्मुनिरित्यादिकीर्तनात् ॥ १४ ॥
मुक्तावल्यां विश्वनाथैराकरेति (२)च शंसनात् ।
सूत्रकारस्य समये भाष्यकारोऽप्यजायत ॥ १५ ॥
इत्याहुः केचन ततोऽप्यस्य प्राचीनता ध्रुवम् ।
व्याख्याश्चोदयनादीनामाचार्याणामनेकशः ॥ १६ ॥
साक्षात्परम्पराप्राप्ताः सन्ति भाष्यस्य मुद्रिताः ।
सूत्राणां त्वधुनाप्येका लभ्यते शङ्करकृतिः ॥ १७ ॥
राजकीयपरीक्षासु स्थापितोपस्कराह्वया ।
भारद्वाजकृताप्यन्या वृत्तिः, सा नोपलभ्यते ॥ १८ ॥
स चोपस्कारकृत् कस्मिन्देशे काले ह्यभूदिति ।
विचार्यतेऽधुना युक्त्या पारम्पर्यक्रमेण वै ॥ १९ ॥
श्रीमान् श्रीश्रीधराचार्यः कन्दलीं व्यदधान्मुदा ।
गजाम्बुधिखभूवर्षे किरणावलिमाश्रयन् ॥ २० ॥
कन्दलीकारतः पश्चान्मिश्रोपाधिस्तु शङ्करः ।
विदुषामग्रणीर्न्यायशास्त्रपारङ्गतः सुधीः ॥ २१ ॥
विक्रमस्य चतुर्दश्यां शताब्द्यामास इत्ययम् ।
निर्णयो बङ्गविदुषान्तत्र शास्त्रार्थलङ्घ्हः ॥ २२ ॥
कथ्यते साम्प्रतं तावत्प्रेक्षावत्कौतुकप्रदः ।
उच्चावचानां लोकेषु प्रथितानामनेकशः ॥ २३ ॥
पदार्थानान्तु कात्स्न्र्येनावगतिर्दुर्लभा भुवि ।
ततस्तान् क्रमशो बद्ध्वा ज्ञानसौकर्यहेतवे ॥ २४ ॥
दर्शयामास शास्त्रेऽस्मिन् मत्युत्कर्षबलान्मुनिः ।
शुक्लादिभेदभिन्नानां घटादीनां घटत्वतः ॥ २५ ॥

---

(१) प्रशस्तस्य ऋषित्वं प्रवररत्नग्रन्थे आंगिरसगणे गौतमगर्गे पठितत्वादपि बोध्यम् ।

(२) तन्नन्यस्ये तिशेषः । तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे इति विश्वनाथभट्टाचार्याः । आकरे भाष्ये इत्यर्थः ।

यथा ज्ञानं हि सुलभं तथा सर्वत्र बुध्यताम् ।
पदार्थतत्त्वज्ञानं वै (१) मननादिक्रमेण हि ॥ २६ ॥
शास्त्रेऽत्राङ्गीकृतं निःश्रेयसहेतुकरं परम् ।
द्रव्यं गुणाश्च कर्माणि तथा जातिविशेषकौ ॥ २७ ॥
समवाय इतीमे षट् पदार्था भावसंज्ञिताः ।
अभावः सप्तमोऽप्यस्य मुनेः सम्मतिमाश्रितः ॥ २८ ॥
प्रतियोगिकथाधीननिरूपणतया त्वसौ ।
साक्षान्नोक्तो न तुच्छत्वादित्याचार्यमतन्तथा ॥ २९ ॥
क्रियागुणेत्यादिसूत्रैर्नवमाद्याह्निकस्थितैः ।
इत्थं राद्धान्तितं श्रीमच्छिरोमणिमहाशयैः ॥ ३० ॥
कैलासचन्द्रैर्गुरुभिर्भाष्यालोचनतत्परैः ।
शक्तिसादृश्यसंख्यादिपराभिमतवस्तुषु ॥ ३१ ॥
एतेषां लक्षणायोगो व्यवच्छेद्यो मुनेर्मते ।
गौतमोक्तप्रमाणादिपदार्थानाञ्च सप्तसु ॥ ३२ ॥
अन्तर्भावस्तथा लोकप्रसिद्धानां समन्ततः ।
तत्र क्रियागुणाधारं द्रव्यं नवविधं स्मृतम् ॥ ३३ ॥
क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।
क्षितिर्गन्धवती या स्यात् गन्धस्त्वन्यत्र तद्गतः ॥ ३४ ॥
शुक्लरूपं च माधुर्यं समवेतं जले ननु ।
आश्रयोपाधिकं नीलरूपं स्याद्यमुनाजले ॥ ३५ ॥
आम्लादिजम्बीररसोऽप्येवं स्यादिति तद्विदः ।
उष्णस्पर्शाश्रयं द्रव्यं तेजो भास्वररूपवत् ॥ ३६ ॥
जलस्पर्शेनाभिभवाच्चन्द्रेंशुस्पर्शप्रत्ययः(२) ।
अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः ॥ ३७ ॥
आकाशं शब्दहेतुः स्यात्कालो (३)ज्येष्ठादिधीकरः ।
परस्मिन्परमन्यस्मिन्न परं युगपच्चिरम् ॥ ३८ ॥
क्षिप्रमेतादृशी बुद्धिः काललिङ्गमिति स्मृतम् ।
सर्वोत्पत्तिमतामेष निमित्तमिति कथ्यते ॥ ३९ ॥

---

(१) मननं युक्तिरनुमानप्रयोग इत्यर्थः । अस्मिन्नेव शास्त्रे तस्य मुख्यतया प्रतिपादितत्वात् । (२) प्रहः" ।
(३) तथा च ज्येष्ठादिनिष्ठसूर्यक्रियाघटकसम्बन्ध एव काल इत्यर्थः ।

(१)इदमस्मादितीयं धीर्दिश्यं लिङ्गमिहेष्यते ।
संयोगोपनयायैव तदेषा सिद्धिमेष्यति ॥ ४० ॥
आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ।
इन्द्रियार्थप्रसिद्धिस्तु गुणत्वात्क्वचिदाश्रिता ॥ ४१ ॥
रूपवच्चेत्यनुमितौ द्रव्यं यन्नवमं पुनः ।
प्रसिध्यति तदेवात्रात्मशब्देनोपपादितम् ॥ ४२ ॥
आत्मेन्द्रियार्थसम्बन्धाज्ज्ञानमुत्पद्यते तु यत् ।
तदन्तःकरणा(२)दन्यत् अन्यज्ञानपदेशतः ॥ ४३ ॥
ज्ञानवत्सुखदुःखेच्छाद्वेषयत्नाः पृथक्पृथक् ।
आत्मनो लिङ्गतां यान्ति मनसोऽपि गतिस्तथा ॥ ४४ ॥
शरीरादि न चात्मा स्यान्मृतादिव्यभिचारतः ।
चक्षुःश्रोत्रादिकरणं सकर्तृकमपेक्ष्यते ॥ ४५ ॥
वास्यादिवदिति व्याप्त्या तदधिष्ठातृतात्मनि ।
एवं प्राणादिभिर्लिङ्गैर्मनसः प्रेरणाच्च वै ॥ ४६ ॥
अभिप्रेतेषु विषयेष्वतिरिक्तः स देहतः ।
इन्द्रियेभ्यश्चेति सिद्धं न्यायवैशेषिके मते ॥ ४७ ॥
बन्धमोक्षादिव्यवस्थाहेतोर्नानात्वमीरितम् ।
सोऽयमात्माऽनादिमिथ्याज्ञानवासनयाऽवशः ॥ ४८ ॥
देहादीन् स्वात्मरूपांश्च मत्वा रागादिवृत्तिभिः ।
दुःखसंघातानुभवं कुर्वन् संसरति स्फुटम् ॥ ४९ ॥
वैशेषिकपदार्थानां तत्त्वज्ञानं यदा भवेत् ।
तेन मिथ्याज्ञाननाशे रागद्वेषाद्यभावतः ॥ ५० ॥
प्रवृत्त्यपाये जन्मापाय ईशानुकम्पया ।
जन्मापाये दुःखनाश आत्यन्तिक इतीरितः ॥ ५१ ॥
निःश्रेयसपदार्थस्तु शास्त्रादस्माच्च नान्यतः ।
अतोऽस्य दर्शनस्याहुरारम्भ इति तार्किकाः ॥ ५२ ॥
आत्मेन्द्रियार्थसम्बन्धे भावाभावो मतेर्मतम् ।
मनोलिङ्गं यौगपद्याभिमानो भ्रान्त इष्यते ॥ ५३ ॥

---

(१) इदमस्मात्पूर्वमिदमस्माद्दक्षिणमित्यादिबुद्धिरित्यर्थः । संयोगेति । तथा चासमवायिकारणसंयोगाश्रयतया कालवद्दिक्सिद्धिरित्यर्थः । (२) सांख्यव्यावृत्तिरनेन बोध्या ।

सुखादिप्रत्यये हेतुरणुत्वाद्युगपन्न हि।
अनेकैरिन्द्रियैर्बद्धं मनस्तस्मान्न चैकदा ॥ ५४ ॥
अनेकेषाञ्च ज्ञानानां सम्भवोऽस्ति कदाचन।
अन्धकारस्तु न द्रव्यं तेजोऽभावः स ईरितः ॥ ५५ ॥
आरोपितं रूपमिति कन्दलीकारसंमतम्।
द्रव्याश्रयी चागुणवानित्येतद्गुणलक्षणम् ॥ ५६ ॥
रूपं रसस्तथा गन्धः स्पर्शः संख्या तथैव च।
परिमाणपृथक्त्वे तु संयोगश्च विभागकः ॥ ५७ ॥
परत्वमपरत्वञ्च बुद्धयः सुखमेव च।
दुःखमिच्छा द्वेषयत्नौ मुनिकण्ठाद्विनिर्गताः ॥ ५८ ॥
चशब्देन गुरुत्वञ्च द्रवत्वं स्नेह एव च।
संस्कारश्च तथा धर्माधर्मौ शब्दः समुच्चिताः ॥ ५९ ॥
प्रसिद्धगुणभावत्वादेते नोक्तास्तु कण्ठतः।
चक्षुर्मात्रग्राह्यगुणो रूपं नीलादिभेदतः ॥ ६० ॥
भवेत्सप्तविधं तत्र चित्रं नव्यैर्न मन्यते।
रसनेन्द्रियग्राह्यस्तु गुणः स्याद्रससंज्ञकः ॥ ६१ ॥
मधुराम्लादिभेदेन षड्विधः परिकीर्तितः ॥
घ्राणग्राह्यो भवेद्गन्धोऽसुरभिः सुरभिर्द्विधा ॥ ६२ ॥
त्वगिन्द्रियग्राह्यगुणः स्पर्शः शीतादिभेदतः।
त्रिविधस्तत्र रूपं स्याच्चाक्षुषे सहकारि तु ॥ ६३ ॥
रसनादौ रसादीनामेवं हेतुत्वमिष्यताम्।
एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित् ॥ ६४ ॥
पच्यन्ते वह्निसंयोगात्स्वतन्त्राः परमाणवः।
पीलुपाकमते, नैवावयविष्वस्ति मध्यगः ॥ ६५ ॥
दुर्घटस्तन्न मन्यते इतरेऽक्षपदानुगाः।
गणनाव्यवहारस्य हेतुः संख्याऽभिधीयते ॥ ६६ ॥
सा चैकादिपरार्धान्ता नित्याऽनित्या च संमता।
मानव्यवहृतौ हेतुः परिमाणं प्रचक्षते ॥ ६७ ॥
चतुर्धाऽणु महद्दीर्घं ह्रस्वञ्चेति प्रकीर्तितम्।
अस्मात्पृथगिदं नेति वैजात्यात्प्रत्ययस्य हि ॥ ६८ ॥
पृथक्त्वमेव तद्धेतुर्भेदतोऽपि विभिद्यते।

अप्राप्तिपूर्विका प्राप्तिः संयोगस्त्रिविधः स्मृतः ॥ ६९ ॥
श्येनशैलौ यथा तेषु प्रथमस्त्वेककर्मजः ।
भवेद्द्वितीय उभयकर्मजो मेषयोरिव ॥ ७० ॥
अङ्गुलीतरुसंयोगात्संयोगस्तरुहस्तयोः ।
तृतीयस्तत्प्रतिद्वन्द्वी विभागोऽपि गुणान्तरम् ॥ ७१ ॥
एवं विभजते तस्मादित्येवं हि प्रतीयते ॥
संयोगाभावतो नास्य चरितार्थत्वसंभवः ॥ ७२ ॥
संयोगवदमुष्यापि त्रैविध्यं स्वयमूह्यताम् ।
विभागजविभागस्तु द्विविधः परिकीर्तितः ॥ ७३ ॥
हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ।
दैशिकं कालिकञ्चेति परत्वं द्विविधं मतम् ॥ ७४ ॥
तद्वदेवापरत्वं स्याद्, बुद्धिः साम्प्रतमुच्यते ।
कृत्स्नव्यवहृतेर्हेतुस्सा तावद्द्विविधा स्मृता ॥ ७५ ॥
संशयो निश्चयश्चेति कोटिद्वयकषन्तु यत् ।
अनिर्णयात्मकं स्थाणुः पुरुषो वेति जायते ॥ ७६ ॥
साधारणादिधर्माणां दर्शनात्संशयस्स तु ।
तद्विरुद्धो निर्णयः स्याज्ज्ञानं निर्धारणं परम् ॥ ७७ ॥
पुनः सा द्विविधा प्रोक्ता प्रमाप्रमेति भेदतः ।
यथार्थानुभवो यस्तु प्रमा सा द्विविधा भवेत् ॥ ७८ ॥
प्रत्यक्षमप्यनुमितिरिन्द्रियेभ्यश्च यद्भवेत् ।
तत्प्रत्यक्षं षड्विधं स्याच्चाक्षुषादिप्रभेदतः ॥ ७९ ॥
व्याप्तिज्ञानात्साहचर्यनियमाख्यात्तु यद्भवेत् ।
ज्ञानं सानुमितिः स्वार्था परार्थेति च भेदतः ॥ ८० ॥
द्विविधाऽन्त्या तु जायेत पञ्चावयवयोगतः ।
तत्र लिङ्गं तु त्रिविधमन्वयव्यतिरेकतः ॥ ८१ ॥
तदाभासः पञ्चविधो व्यभिचारादिभेदतः ।
निर्णयस्य प्रमाणत्वं खण्डितं तार्किकैः खलु ॥ ८२ ॥
शब्दादीनां प्रमाणानामन्तर्भावोऽनयो भवेत् ।
वैशेषिकमते,ऽस्यास्तु भिन्ना स्यादप्रमा द्विधा ॥ ८३ ॥
विपर्ययः संशयश्च, पूर्वं प्रोक्तस्तु संशयः ।
मिथ्याज्ञानं विपर्यासः स एव स्याद्विपर्ययः ॥ ८४ ॥

यथा शंखः पीत इति भूयो बुद्धिर्विभज्यते ।
अनुभूतिः स्मृतिश्चेति तत्रानुभव ईरितः ॥ ८५ ॥
संस्कारजन्यं ज्ञानन्तु स्मृतिधीः संप्रकीर्तिता ।
भाष्यकारमते बुद्धि विद्याविद्येति वै द्विधा ॥ ८६ ॥
विद्या चतुर्धा प्रत्यक्षलैङ्गिके स्मृतिरार्षजा ।
प्रत्यक्षलैङ्गिके प्रोक्ते स्मृतिश्चोक्तानुभूतिवत् ॥ ८७ ॥
लिङ्गादिदर्शनाज्जाता शेषानुव्यवसायकृत् ।
आर्षन्त्वाम्नायकर्तृणां ज्ञानं त्रैकालिकं हि यत् ॥ ८८ ॥
अविद्यैवं चतुर्धा तु संशयादिप्रभेदतः ।
आलोचनात्मकं ज्ञानं प्रत्यक्षेऽनुमितौ तथा ॥ ८९ ॥
स्यादनध्यवसायस्तु स्वप्नज्ञानं तु लोकवत् ।
त्रिविधं तत्र कथितः संशयश्च विपर्ययः ॥ ९० ॥
इति बुद्धि प्रपञ्चोऽयं न्यायशास्त्रे सुविस्तृतः ।
अनुकूलतया वेद्यं सुखमात्मनि जायते ॥ ९१ ॥
प्रतिकूलतया दुःखं धर्माधर्मादिहेतुकम् ।
इच्छाद्वेषावात्मगुणावात्मानुभवगोचरौ ॥ ९२ ॥
फलोपायप्रभेदेन सा त्विच्छा द्विविधा भवेत् ।
प्रवृत्तेर्हेतुरिच्छा स्यान्निवृत्तेर्द्वेष उच्यते ॥ ९३ ॥
प्रयत्नस्त्रिविधः प्रोक्तो न्यायशास्त्रविशारदैः ।
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ ९४ ॥
श्वासप्रश्वासहेतुः स्याद्यत्नो जीवनहेतुकः ।
गुरुत्वमाद्यपतनक्रियाहेतुर्गुणः स्मृतः ॥ ९५ ॥
तथाऽऽद्यस्यन्दने हेतुर्द्रवत्वमपि कीर्तितम् ।
चूर्णादिपिण्डीकरणहेतुः स्नेह उदाहृतः ॥ ९६ ॥
वेगश्च भावना चापि स्थितिस्थापक एव च ।
संस्कारस्त्रिविधः प्रोक्तो तत्राद्यो नोदनाच्छरे ॥ ९७ ॥
स्मृतिहेतुर्भावनाख्यः संस्कारश्च द्वितीयकः ।
पूर्वावस्थापादको यः स स्थितिस्थापको यथा ॥ ९८ ॥
आकृष्टद्रुमशाखादिपरित्यागे प्रदृश्यते ।
सुखस्य कारणं धर्मो जन्यते शुभकर्मभिः ॥ ९९ ॥
अन्यथा चिरनष्टेभ्यः कथं तेभ्यः फलोदयः ।

अधर्मो दुःखहेतुः स्यादसौ निन्दितकर्मजः ॥ १०० ॥
अदृष्टशब्दितावेतौ न्यायशास्त्रे प्रकीर्तितौ ।
श्रोत्रेण गृह्यते योऽर्थः स शब्दो द्विविधः स्मृतः ॥ १०१ ॥
ध्वनिवर्णविभेदेन मृदङ्गादिभवो ध्वनिः ।
कण्ठाद्यन्योन्याभिघाताज्जातो वर्ण इतीष्यते ॥ १०२ ॥
एकद्रव्यं निर्गुणं च यत्संयोगविभागयोः ।
अनपेक्षनिमित्तं तत्कर्मैतत्कर्मलक्षणम् ॥ १०३ ॥
उत्क्षेपणादिभेदेन तत्स्यात्पञ्चविधं यथा ।
ऊर्ध्वसंयोगफलकं कर्मोत्क्षेपणमुच्यते ॥ १०४ ॥
विपरीतमवक्षेपस्तद्द्वयं मुसलादिषु ।
सत्यारंभकसंयोगेऽप्यन्यसंयोगकारणम् ॥ १०५ ॥
अङ्गकौटिल्यजनकं कर्माकुञ्चनमीरितम् ।
एवमाकुञ्चिताङ्गानां यत्कर्मोत्पद्यते पुनः ॥ १०६ ॥
अनारम्भकसंयोगनाशकं तत्प्रसारणम् ।
एतच्चतुष्टयादन्यत् यत्किञ्चित्कर्म जायते ॥ १०७ ॥
तत्सर्वं गमनं प्राहुर्भ्रमणाद्येवमूह्यताम् ।
अनेकसमवेतं यन्नित्यं सा जातिरुच्यते ॥ १०८ ॥
अनुवृत्तित्वबुद्धिस्तु प्रमाणं तत्र कीर्तितम् ।
परापरादिभेदेन द्विविधा सा प्रकीर्तिता ॥ १०९ ॥
एकस्मिन्नेव सत्तावच्छिन्नो यः समवैति सः ।
विशेषः प्रोच्यते सोऽयं नानाविध इतीष्यते ॥ ११० ॥
सर्वेषां द्व्यणुकान्तानां तत्तदङ्गविभेदतः ।
भेदोऽसौ परमाणूनां विशेषादेव केवलम् ॥ १११ ॥
व्यावृत्तबुद्धिस्तत्र स्यात्प्रमाणमिति तद्विदः ।
यस्मादयुतसिद्धानामिहेदमिति धीर्भवेत् ॥ ११२ ॥
आधार्याधारभूतानां समवायस्स ईरितः ।
अभावो भावभिन्नः स्यात्स चतुर्विध उच्यते ॥ ११३ ॥
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ।
अन्योन्याभाव इत्येवं कार्योत्पत्तेः पुरस्त्विदम् ॥ ११४ ॥
कार्यं भविष्यतीत्येवं प्रत्यक्षं सार्वलौकिकम् ।
स चायं प्रागभावः स्वप्रतियोगिनि कारणम् ॥ ११५ ॥

उत्पन्नपुनरुत्पात्तिर्वार्येता कथमन्यथा।
विनाशकस्य दण्डादेर्व्यापारादप्यनन्तरम् ॥ ११६ ॥
पूर्वं सदप्यसत्कार्यं ध्वंसः सोऽयं प्रगीयते ।
ध्वस्तो घटः पटो नष्टः श्रुतपूर्वो न विद्यते ॥ ११७ ॥
गकार इत्येवमादि स्फुटं प्रत्यक्षमीक्ष्यते।
त्रैकालिको योऽभावस्तु सोऽत्यन्ताभाव इष्यते ॥ ११८ ॥
नास्तीत्येवं प्रतीत्या यत्प्रत्यक्षमुपजायते ।
सदप्यसद्भवेत्सोऽयमन्योन्याभाव उच्यते ॥ ११९ ॥
अयं तदात्मनाऽभावो नास्ति कुम्भः पटात्मना ।
अघटो गौरगौरश्व इत्यादि प्रत्ययाद्ध्रुवम् ॥ १२० ॥
सिद्ध्यतीति, पदार्थानां सङ्ग्रहोयमुदीरितः।
सङ्क्षेपतो गौतमोक्तसूत्राणां प्रतिभाकरः ॥ १२१ ॥
तत्र वैशेषिके शास्त्रे प्रशस्तेन कृतं शुभम् ।
भाष्यं श्रीशङ्करकृत उपस्कारश्च वै चिरात् ॥ १२२ ॥
राजकायपरीक्षासु स्थापितो किन्तु दुर्लभौ।
कन्दल्यादिसमेतस्य भाष्यस्य बहुमूल्यतः ॥ १२३ ॥
उपस्कारस्यापि ततो काशीस्थेन सुधीमता ।
चौखम्बासंस्कृतग्रन्थश्रेण्याः सम्पादकेन हि ॥ १२४ ॥
श्रेष्ठिवंशावतंसेन हरिदासात्मजेन वै ।
दासान्त्यजयकृष्णेन विदुषामुपकारिणा ॥ १२५ ॥
प्रोत्साहितोऽहं व्यदधां भाष्योपस्कारयोरिमाम् ।
टीकां विवरणाख्यान्तु कन्दल्यादिसमाश्रयात् ॥ १२६ ॥
विषमस्थलमात्रेषु मूलसाहाय्यकारिणीम् ।
श्रीमद्भट्टाचार्यगुरोर्न्यायतत्त्वविवेदिनः ॥ १२७ ॥
न्यायाचार्यस्य कृपया शास्त्रिणामप्यनुग्रहात् ।
अन्यथा क्व च तच्छास्त्रं क्व मेऽल्पविषया मतिः ॥ १२८ ॥
तथापि मे साहसमिदं क्षमिष्यन्ते विचक्षणाः ।
हित्वेर्ष्यां दयया चैनां करिष्यन्त्यात्मसाद्ध्रुवम् ॥ १२९ ॥
ये केचिदत्र दोषाः स्युः सूचयिष्यन्ति मामप्रति ।
येन स्यामनुकम्प्योऽहं श्रीमतां विदुषां सदा ॥ १३० ॥
छात्राणामुपकारोऽलं भविता बहुधा खलु ।

भूमिकासमाप्तिः ।

एकत्र भाष्यसूत्राणां सम्बन्धस्य प्रदर्शनात् ॥ १३१ ॥
सूत्रपाठस्य चान्यत्राङ्कसंख्यापरिदर्शनात् ।
मुद्रणेऽस्मिन्समावेशाद्भाष्योपस्कारयोरपि ॥ १३२ ॥
अल्पमूल्येन लभ्यत्वात्सुलभोयं भविष्यति ।
सङ्ग्राह्योयमतः सर्वैरन्ते च कुसुमाञ्जलिः ॥ १३३ ॥
नाथान्त्यबटुकाव्हस्य पितुः पादाम्बुजन्मनोः ।
अर्पितोऽयं सविनयं
ढुण्ढिराजेन शास्त्रिणा ॥ १३४ ॥



# भाष्यकृद्व्याख्याताना सूत्राणा सूचीपत्रम्।

अ. १ आ. २ सू. १ । २ (क)

अ. २ आ. १ सू. ५ । २० । २२ । २३ । १७ ।

अ. ३ आ. १ सू. १ ।

अ. ४ आ. २ सू. २ । ३ (ख) । ४ ।

अ. ५ आ. १ सू. ८ । १४ ।

अ. ५ आ. २ सू. ९ । १० । १९ । २० (ग)

अ. ६ आ. १ सू. ४ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ (घ)

अ. ७ आ. १ सू. १ ।

अ. ७ आ. २ सू. ६ । ७ । ८ । १७ । १८ । १९ । २० ।

अ. ८ आ. १ सू. १ । ३ । १० । ११ ।

अ. ८ आ. २ सू. १ । २ । ४ ।

अ. ९ आ. १ सू. १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० (ङ)

अ. १० आ. १ सू. ७

---

(क) कार्य्यकारणभावविचारप्रस्तावे ।

(ख) शरीराणां पञ्चात्मकत्वत्र्यात्मकत्वप्रतिषेधपरे सूत्रे परन्तुभाष्यकृता कण्ठरवेण तन्न प्रतिषिद्धमिति ।

(ग) तमसोऽभावरूपत्वबोधके द्वे सूत्रे ।

(घ) एतानि सूत्राणि धर्म्मनिरूपणप्रस्तावे उक्तानि न भाष्यकृद्भिः व्याख्यातानि ।

(ङ) अभावनिरूपणे एतानि सूत्राणि ।

॥ श्रीः ॥

# विवरणसहितस्य प्रशस्तपादभाष्यस्याकाराद्यनुक्रमेण विषयसूचीपत्रम् ।



| विषयः | पृ० | पं० |
|---|---|---|
| अकारणगुणकथनम् भाष्ये ... ... ... | ४३ | ५ |
| अकारणगुणपूर्वकगुणकथनम् भा. ... ... | ४० | १ |
| अजसंयोगमतखण्डनम् भा. ... ... ... | ६५ | १ |
| अतीन्द्रियगुणकथनम् भा. ... ... ... | ३९ | ११ |
| अधर्मनिरूपणम् भा. ... ... ... ... | १४२ | ४ |
| अधर्मसाधनकथननम् भा. ... ... ... | " | ५ |
| अनध्यवसायनिरूपणम् भा. ... ... ... | ९० | २ |
| अनाश्रितत्वनित्यत्वे चान्यत्रावयविद्रव्येभ्यः भा. ... | ७ | ६ |
| अनुमाननिरूपणम् भा. ... ... ... | ९९ | ६ |
| अनुमाननिर्णयकथनम् भा. ... ... ... | १२८ | २ |
| अनुसन्धाननिरूपणम् भा. ... ... ... | १२३ | ८ |
| अनुसन्धानोदाहरणम् भा. ... ... ... | १२४ | ४ |
| अनेकाश्रितगुणकथनम् भा. ... ... ... | ३९ | १ |
| अन्तःकरणग्राह्यगुणकथनम् भा. ... ... | " | १० |
| अपक्षेपणनिरूपणम् भा. ... ... ... | १४८ | ७ |
| अपदेशलक्षणम् भा. ... ... ... | ११५ | ८ |
| अपदेशोदाहरणम् भा. ... ... ... | ११६ | २ |
| अपरजातिकथनम् द्रव्यत्वाद्यपरमित्यादिना । टी ... | ४ | १९ |
| अपवर्गनिरूपणम् भा. ... ... ... ... | १४३ | ९ |
| अपां सांसिद्धिकंद्रवत्ववत्त्वे विप्रतिपत्तिखण्डनम् भा. | १३४ | ४ |
| अपेक्षाबुद्धिविनाशात् परत्वापरत्वविनाशस्योदाहरणम् भा. | ७८ | ७ |
| अप्रत्ययकर्मकथनम् भा. ... ... ... | १५८ | १० |

| विषयः | पृ० | पं० |
|---|---|---|
| अभावस्यानुमानेऽन्तर्भावकथनम् भा. ... ... | १११ | २ |
| अमूर्तगुणकथनम् भा. ... ... ... | ३८ | ५ |
| अयावद्द्रव्यभाविगुणकथनम् भा. ... ... | ४४ | १ |
| अयोनिजशरीरे शुक्रशोणितसम्पाताजन्यत्वस्यव्यवस्थापनम् टी. ... ... ... ... | १३ | १२ |
| अर्थापत्तेरनुमानेऽन्तर्भावकथनम् भा. ... ... | ११० | २ |
| अवयवनिरूपणम् भा. ... ... ... | ११४ | २ |
| अविदुषां प्रवर्तकधर्माधर्मकार्यकथनम् भा. ... | १४३ | २ |
| अविद्याभेदनिरूपणम् भा. ... ... ... | ८४ | ३ |
| अविनाभावस्मरणस्यानुमानाङ्गत्वप्रदर्शनम् भा. ... | १०२ | १ |
| अव्याप्यवृत्तिगुणकथनम् भा. ... ... ... | ४३ | ६ |
| असमवायिकारणगुणकथनम् भा. ... ... | ४२ | ६ |
| असमानजात्यारम्भकगुणकथनम् भा. ... ... | ४१ | ४ |
| आकाशकालदिगात्मनां साधर्म्यकथनम् भा. ... | ८ | १ |
| आकाशनिरूपणम् तद्गुणकथनम् । शब्दस्याकाशगुणत्वे युक्तिः । भा. ... ... ... ... | २३ | ४ |
| आकाशात्मनां साधर्म्यकथनम् भा. ... ... | ९ | २ |
| आकाशे प्रमाणम् भा. ... ... ... | २४ | १ |
| आकुञ्चननिरूपणम् भा. ... ... ... | १४८ | ८ |
| आत्मनिरूपणम् भा. ... ... ... ... | ३० | २ |
| आत्मसमवेतानां प्रत्यक्षे कारणकथनम् भा. ... | ९६ | ४ |
| आत्मसिद्धौ प्रमाणानि भा. ... ... ... | ३० | २ |
| आर्षज्ञाननिरूपणम् भा. ... ... ... | १२८ | १ |
| आश्रमिणां धर्महेतुनिरूपणम् भा. ... ... | १४० | ३ |
| आश्रयनाशाद्द्वित्वादिनाशः भा... ... ... | ५१ | १ |
| आश्रयव्यापिगुणकथनम् भा. ... ... ... | ४३ | ८ |
| इच्छानिरूपणम् भा. ... ... ... ... | १३१ | ८ |
| इन्द्रियकथनम् भा. ... ... ... ... | ९४ | ३ |
| ईश्वरे प्रमाणोपन्यासः टी. ... ... ... | २३ | १६ |
| उत्क्षेपणनिरूपम् भा. ... ... ... ... | १४८ | ३ |

| विषयः | पृ० | पं० |
|---|---|---|
| उत्क्षेपणादौ गमनव्यवहारस्य भाक्तत्वकथनम् भा. | १५३ | ५ |
| उपमानस्य शब्देऽन्तर्भावकथनम् भा. ... ... | १०९ | ३ |
| उभयकारणताश्रयगुणकथनम् भा. ... ... | ४३ | ३ |
| एकादिप्रत्ययस्य रूपादिविषयकत्वमतखण्डनम् टी. | ४८ | १७ |
| एकैकवृत्तिगुणकथनम् भा. ... ... ... | ३९ | २ |
| एकैकेन्द्रियग्राह्यगुणकथनम् भा. ... ... | ३९ | ७ |
| ऐतिह्यस्यानुमानेऽन्तर्भावकथनम् भा. ... ... | ११२ | ४ |
| कणादशब्दार्थकथनम् टी. ... ... ... | १ | १२ |
| कर्मजगुणकथम् भा. ... ... ... ... | ४० | ८ |
| कर्मणां जातिपञ्चकत्वव्यवस्थापने शङ्कासमाधिः भा. | १४९ | ५ |
| कर्मनिरूपणम् भा. ... ... ... ... | १४७ | ३ |
| कर्मप्रत्यक्षे विप्रतिपत्तिनिराकरणम् टी. ... ... | ९६ | १५ |
| कर्मविभागः उत्क्षेपणादिभेदेन: भा. ... ... | ३ | ९ |
| कामादीनामिच्छायामन्तर्भावकथनम् भा. ... | १३१ | १० |
| कारणगुणपूर्वकगुणकथनम् भा. ... ... | ४० | १ |
| कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः भा. ... | ६ | ६ |
| कारणवतां कार्यत्वानित्यत्वे भा... ... ... | ६ | ५ |
| कालकृतपरत्वापरत्वोत्पत्तिकथनम् भा.... ... | ७७ | ८ |
| कालनिरूपणम् । सर्वकार्याणामुत्पत्तिस्थितिविनाशहेतुत्वम् । क्षणादिव्यवहारहेतुः । तद्गुणकथनम् । भा. | २६ | ५ |
| कृतदाराविद्याव्रतस्नातकानां धर्महेतुनिरूपणम् भा. | १४० | ६ |
| क्रियाहेतुगुणकथनम् भा. ... ... ... | ४२ | ४ |
| क्रोधादीनां द्वेषान्तर्भावकथनम् भा. ... ... | १३२ | ११ |
| गन्धनिरूपणम् भा. ... ... ... ... | ४५ | ७ |
| गमनत्वस्य कर्मत्वपर्यायत्वकथनम् भा. ... ... | १५२ | ८ |
| गमनत्वस्य कर्मत्वपर्यायत्वे विशेषसञ्ज्ञया गमनग्रहणस्य फलम् भा. ... ... ... ... | १५२ | १३ |
| गमननिरूपणम् भा. ... ... ... ... | १४८ | १३ |
| गुणनिरूपणारम्भः । तेषां निर्गुणत्वं निष्क्रियत्वम् । भा. | ३८ | ३ |
| गुणविभागः रूपरसादिभेदेन भा. । ... ... | ३ | ५ |

| विषयः | पृ० | पं० |
|---|---|---|
| गुणस्य निर्गुणत्वे निष्क्रियत्वे युक्तिः टी.... ... | ३८ | १९ |
| गुणादीनां पञ्चानां निर्गुणत्वनिष्क्रियत्वे भा. ... | ६ | २ |
| गुरुत्वनिरूपणम् भा. ... ... ... ... | १३३ | ८ |
| गुरुत्वस्य त्वगिन्द्रियग्राह्यतावादिमतखण्डनम् टी० | १३३ | २४ |
| ग्रन्थोपसंहारः भा. ... ... ... ... | १७५ | ३ |
| चेष्टाया अनुमानेऽन्तर्भावकथनम् भा. ... ... | १०९ | १ |
| जलनिरूपणम् तद्गुणकथनम् । तस्य द्वैविध्यम् । अनित्यस्य त्रैविध्यम् । भा. ... ... ... | १४ | २ |
| जले द्रवत्वात् कर्मोत्पत्तिः भा. ... ... ... | १६० | ५ |
| ज्ञानपूर्वकाद्धर्मादपवर्गकथनम् भा. ... ... | १४३ | ९ |
| ज्ञानस्य शरीराद्याश्रयत्वनिरासः भा. ... ... | ३० | ७ |
| तमसो भाऽभावरूपत्वम् टी. ... ... ... | ३ | १६ |
| तर्कज्ञानस्य चतुर्विधाविद्यायामन्तर्भावविचारः टी. | ८४ | ११ |
| तेजोनिरूपणम् तत्गुणकथनम् । तस्य द्वैविध्यम् । अनित्यस्य त्रैविध्यम् । भा ... ... ... ... | १५ | ५ |
| त्वगिन्द्रियस्य वायुत्वम् टी. ... ... ... | १७ | २१ |
| दिक्कालयोः साधर्म्यकथनम् भा. ... ... | ९ | ३ |
| दिक्कृतपरत्वापरत्वोत्पत्तिकथनम् भा. ... ... | ७६ | ७ |
| दिङ्निरूपणम् तद्गुणकथनम् । तस्याः प्राच्यादिभेदाः । भा. | २८ | ५ |
| दीर्घत्वमहत्त्वयोर्ह्रस्वत्वाणुत्वयोश्च विशेषकथनम् भा. | ५९ | १ |
| दुःखनिरूपणम् भा. ... ... ... ... | १३१ | २ |
| द्रवत्वनिरूपणम् भा. ... ... ... ... | १३४ | ४ |
| द्रवत्वविभागादिः भा. ... ... ... ... | १३४ | ५ |
| द्रव्यत्वादीनामपरसामान्यत्वकथनम् भा. ... | १६५ | ८ |
| द्रव्यत्वादीनां विशेषसामान्यत्वकथनम् भा. ... | १६५ | ९ |
| द्रव्यनाशजपरत्वापरत्वनाशोदाहरणम् भा. ... | ८० | २ |
| द्रव्यविभागः पृथिव्यादिभेदेन । भा. ... ... | ३ | २ |
| द्रव्यसंयोगनाशजपरत्वनाशोदाहरणम् भा. ... | ८१ | ५ |
| द्रव्यादीनां त्रयाणां सत्तावत्त्वं सामान्यविशेषवत्त्वं स्वसमयार्थशब्दाभिधेयत्वम् धर्माधर्मकर्तृत्वम् भा. ... | ६ | ३ |

| विषयः | पृ० | पं० |
|---|---|---|
| द्रव्यादीनां पञ्चानामनेकत्वं समवायित्वं च भा. ... | ६ | १ |
| द्रव्यापेक्षाबुद्धिविनाशजपरत्वापरत्वनाशोदाहरणम् भा. | ८० | ८ |
| द्रव्याश्रितत्वमन्यत्र नित्यद्रव्येभ्यः भा. ... ... | ६ | ७ |
| द्वित्वसामान्यज्ञाने प्रमाणम् टी.... ... ... | ५० | २२ |
| द्वित्वादेरपेक्षाबुद्धिनाशनाश्यत्वे क्षणनियमः भा. ... | ४८ | ७ |
| द्वित्वादेर्बुद्धिजत्वे युक्तिः टी. ... ... ... | ४९ | १० |
| द्वीन्द्रियग्राह्यगुणकथनम् भा. ... ... ... | ३९ | ९ |
| द्वेषनिरूपणम् भा. ... ... ... ... | १३२ | ८ |
| द्व्यणुककारणनिरूपणम् टी. ... ... ... | १२ | १२ |
| धर्मनिरूपणम् भा. ... ... ... ... | १३८ | ६ |
| धर्मविनाशप्रकारः टी... ... ... ... | १३८ | १९ |
| धर्मस्य निःश्रेयसहेतुत्वकथनम् भा. ... ... | २ | ३ |
| ध्वन्यात्मकशब्दोत्पत्तिविधिः भा. ... ... | १४५ | ८ |
| नित्यद्रव्याणामनाश्रितत्वकथनम् भा. ... ... | ६ | १ |
| निदर्शननिरूपणं तद्विभागः भा.... ... ... | १२२ | २ |
| निदर्शनाभासनिरूपणम् भा. ... ... ... | १२२ | ९ |
| निमित्तकारणगुणकथनम् भा. ... ... ... | ४३ | १ |
| निर्णयनिरूपणम् भा.... ... ... ... | १२७ | ७ |
| निर्णयविभागः भा. ... ... ... ... | " | ८ |
| निष्क्रमणत्वप्रवेशनत्वयोः कर्मान्तरत्वखण्डनम् भा. | १५० | १ |
| नैमित्तिकद्रवत्वोत्पत्तिप्रकारः भा. ... ... | १३५ | २ |
| पञ्चानां कर्मणां गमनत्वकथनम् भा. ... ... | १४९ | २ |
| पदानामर्थबोधकत्वप्रकारकथनम् टी. ... ... | ११३ | २४ |
| परत्रारम्भकाणां गुणानां कथनम् भा. ... ... | ४२ | १ |
| परत्वापरत्वनिरूपणम् भा. ... ... ... | ७६ | ३ |
| परत्वापरत्वविनाशकारणनिर्वचनम् भा.... ... | ७८ | ७ |
| परत्वापरत्वविभागः भा. ... ... ... | ७६ | ४ |
| परमाणुपरिमाणस्य कारणतामतखण्डनम् टी. ... | ५८ | २१ |
| परमाणुसद्भावे युक्तिः टी. ... ... ... | १२ | १२ |
| परापरसामान्यनिरूपणम् भा. ... ... ... | १६४ | ३ |

| विषयः | पृ० | पं० |
|---|---|---|
| परार्थानुमानकथनम् भा. ... ... ... | १३१ | १ |
| परिमाणनिरूपणम् तस्य चातुर्विध्यम् । महद्द्विविधम् । अण्वपि द्विविधम् । अनित्यपरिमाणमपि चतुर्विधम् भा. | ५४ | ९ |
| परिमाणस्य द्रव्यातिरिक्तत्वव्यवस्थापनम् टी. ... | ५४ | २५ |
| पाणिमुक्तेषु गमननिरूपणम् भा. ... ... ... | १५५ | १२ |
| पिठरपाकवादनिराकरणम् टी ... ... ... | ४७ | १४ |
| पीलुपाकवादिमतपरिष्कारः टी... ... ... | ४७ | २० |
| पूर्वरूपनाशे प्रमाणोपन्यासः टी. ... ... | ४६ | २५ |
| पृथक्त्वनिरूपणम् भा ... ... ... ... | ५९ | ९ |
| पृथिवीजलयोः साधर्म्यकथनम् भा. ... ... | ८ | ६ |
| पृथिवीजलात्मनां साधर्म्यकथनम् भा. ... ... | ९ | २ |
| पृथिवीतेजसोः साधर्म्यकथनम् भा. ... ... | ९ | ५ |
| पृथिवीनिरूपणम् पृथिव्या गुणानां कथनम् । तस्या द्वैविध्यम् । अनित्यायास्त्रैविध्यम् । भा. ... ... | १० | ४ |
| पृथिवीपरमाणुरूपादीनां पाकजोत्पत्तिविधानम् भा. | ४६ | ९ |
| पृथिव्यप्तेजोवायुमनसां साधर्म्यकथनम् भा. ... | ४७ | ८ |
| पृथिव्यादीनां चतुर्णां साधर्म्यकथनम् भा. ... | ८ | ५ |
| पृथिव्यादीनां त्रयाणां साधर्म्यकथनम् भा. ... | ८ | ६ |
| पृथिव्यादीनां नवानां साधर्म्यकथनम् द्रव्यत्वयोग इत्यादिना । भा. ... ... ... ... | ७ | ४ |
| पृथिव्यादीनां पञ्चानां साधर्म्यकथनम् भा. ... | ८ | ३ |
| पृथिव्यामभिघातात् कर्मोत्पत्तिः भा. ... ... | १५९ | ३ |
| पृथिव्युदकज्वलनपवनात्ममनसां साधर्म्यकथनम् भा. | ७ | ७ |
| प्रतिज्ञाया उदाहरणम् भा. ... ... ... | ११४ | ५ |
| प्रतिज्ञालक्षणम् भा. ... ... ... ... | ११४ | ३ |
| प्रत्यक्षनिर्णयकथनम् भा. ... ... ... | १२७ | ८ |
| प्रत्यक्षनिर्णयोदाहरणम् भा. ... ... ... | १२७ | ९ |
| प्रत्यक्षनिरूपणम् भा. ... ... ... ... | ९४ | ३ |
| प्रत्यक्षप्रकारकथनम् भा. ... ... ... | ९४ | ५ |
| प्रत्यक्षे मानमितिमेयमातॄणां विभागः भा. ... | ९८ | १ |

| विषयः | पृ० | पं० |
|---|---|---|
| प्रत्याम्नायनिरूपणम् भा. ... ... ... | १२४ | ८ |
| प्रत्याम्नायावयवस्यानुमानाङ्गत्वे शङ्कासमाधाने भा. | १२५ | ५ |
| प्रत्याम्नायोदाहरणम् भा. ... ... ... | " | ४ |
| प्रयत्ननिरूपणम् भा. ... ... ... ... | १३२ | १३ |
| प्रयत्नविभागादिकथनम् भा. ... ... ... | " | १४ |
| प्रव्रजितस्य धर्महेतुनिरूपणम् भा. ... ... | १४१ | ६ |
| प्रसारणनिरूपणम् भा. ... ... ... | १४८ | ११ |
| प्राणस्य वायुत्वम् भा. ... ... ... | १९ | ३ |
| बुद्धिनिरूपणम् भा. ... ... ... ... | ८३ | ६ |
| बुद्धिभेदनिरूपणम् भा. ... ... ... | ८४ | १ |
| बुद्धिविभागः तस्याः द्वैविध्यं विद्याविद्याभेदेन। अविद्यापि चतुर्धा इत्यादिना। भा ... ... ... ... | , | २ |
| बुद्ध्यपेक्षगुणकथनम् भा. ... ... ... | ४१ | १ |
| ब्राह्मणादीनां प्रत्येकं धर्महेतुकथनम् भा.... ... | १३९ | ४ |
| भावनाख्यसंस्कारनिरूपणम् भा. ... ... | १३६ | ७ |
| भूतात्मनां साधर्म्यकथनम् भा. ... ... ... | ९ | १ |
| भ्रमणादीनां गमनेऽन्तर्भावः तानि च भ्रमणरेचनस्पन्दनोर्ध्वज्वलनातिर्यक्पतननमनोन्नमनादीनि। भा. | ४ | १ |
| मङ्गलश्लोकव्याख्या टी. ... ... ... | १ | ९ |
| मङ्गलाचरणम् भा. ... ... ... ... | १ | ३ |
| मनसि कर्मकथनम् भा. ... ... ... | १६२ | ६ |
| मनसि प्रमाणोपन्यासः भा. ... ... ... | ३५ | ६ |
| मनसो ज्ञातृत्वनिराकरणम् टी. ... ... ... | ३७ | १० |
| मनोनिरूपणम् तद्गुणनिरूपणम्। भा. ... ... | ३५ | ६ |
| मनोवहुत्वव्यवस्थापनम् टी. ... ... ... | ३६ | १६ |
| महोदयशब्दार्थः टी. ... ... ... ... | १ | १२ |
| महोदयाभिधस्यापवर्गस्य पारम्पर्येणास्मिन्निबन्धे हेतुत्वकथनम् टी. ... ... ... ... | २ | ६ |
| मूर्तगुणकथनम् भा. ... ... ... ... | ३८ | ५ |
| मूर्तामूर्तगुणकथनम् भा. ... ... ... | " | ९ |

| विषयः | पृ० | पं० |
|---|---|---|
| मोक्षक्रमनिरूपणम् टी... ... ... ... | १४२ | १२ |
| यन्त्रमुक्तेषु गमननिरूपणम् भा.... ... ... | १५६ | ११ |
| यावद्द्रव्यभाविगुणकथनम् भा. ... ... | ४३ | ९ |
| युगपत्त्रितयकारणनाशजपरत्वापरत्वनाशोदाहरणम् भा. | ८२ | ८ |
| योगिप्रत्यक्षकथनम् भा... ... ... ... | ९७ | १ |
| रसनिरूपणम् भा. ... ... ... ... | ४५ | १ |
| रूपनिरूपणम् भा. ... ... ... ... | ४४ | ५ |
| रूपादिषु प्रत्यक्षोत्पत्तिकारणकथनम् भा. ... | ९५ | ४ |
| रूपादिसञ्ज्ञायां बीजकथनम् भा. ... ... | ४४ | २ |
| लक्षणस्य प्रयोजनम् टी. ... ... ... | १० | २५ |
| लिङ्गलक्षणम् भा. ... ... ... ... | ९९ | ६ |
| लिङ्गाभासकथनम् भा. ... ... ... | १०१ | १ |
| लिङ्गाभासे सूत्रकारस्य विशेषमतोपन्यासः भा. | १०१ | ३ |
| लैङ्गिकलक्षणम् भा. ... ... ... | ९९ | ६ |
| वर्णात्मकशब्दोत्पत्तिविधिः भा. ... ... | १४५ | ४ |
| वर्णाश्रमिणां सामान्यरूपेण धर्महेतुकथनम् भा. | १३८ | ९ |
| वानप्रस्थानां धर्महेतुनिरूपणम् भा. ... ... | १४१ | ३ |
| वायुनिरूपणम् । तद्गुणकथनम् । तस्य द्वैविध्यम् । अनित्यस्य त्रैविध्यम् । भा. ... ... ... | १६ | ४ |
| वायोरप्रत्यक्षत्वकथनम् टी. ... ... ... | १८ | ६ |
| वायौ कर्मोत्पत्तिकथनम् भा. ... ... ... | १६१ | ११ |
| वाय्वनुमानप्रकारः टी. ... ... ... | १८ | १३ |
| विद्याविभागः भा. ... ... ... ... | ९४ | १ |
| विपर्ययनिरूपणम् भा. ... ... ... | ८७ | ६ |
| विपर्ययास्वीकर्तृमतम् टी. ... ... ... | ८९ | १८ |
| विपर्ययास्वीकर्तृमतखण्डनम् टी. ... ... | ,, | २० |
| विभागजगुणकथनम् भा. ... ... ... | ५० | ९ |
| विभागनिरूपणम् भा. ... ... ... | ६६ | १० |
| विभागलक्षणम् भा. ... ... ... | ६७ | १ |
| विभागविनाशः भा. ... ... ... | ७२ | १ |

| विषयः | पृ० | पं० |
|---|---|---|
| विभागविभागादिः भा. ... ... ... | ६७ | २ |
| विभुद्वयसंयोगमतखण्डनम् भा. ... ... | ६५ | ६ |
| वियुक्तप्रत्यक्षकथनम् भा. ... ... ... | ९७ | ४ |
| विशेषपदार्थनिरूपणम् भा. ... ... ... | १६८ | ३ |
| विशेषपदार्थोद्देशः भा. ... ... ... | ४ | ९ |
| विशेषस्य द्रव्याद्यतिरिक्तत्वनिरूपणम् भा. ... | १६८ | ९ |
| वेगोत्पत्तिप्रकारः भा. ... ... ... | १३६ | ३ |
| वैधर्म्यनिदर्शनलक्षणम् भा. ... ... ... | १२२ | ५ |
| वैधर्म्यनिदर्शनोदाहरणम् भा. ... ... ... | " | ६ |
| वैशेषिकगुणकथनम् भा. ... ... ... | ३९ | ३ |
| शब्दादीनामनुमानेऽन्तर्भावकथनम् भा. ... ... | १०६ | ४ |
| शब्दनिरूपणम् भा. ... ... ... | १४४ | ९ |
| शब्दविभागः भा. ... ... ... | १४५ | २ |
| शब्दस्य श्रोत्रग्राह्यत्वप्रकारः भा. ... ... | " | ९ |
| शास्त्रारम्भः भा. ... ... ... | २ | १ |
| शौर्यादीनां गुणेष्वन्तर्भावकथनम् टी. ... ... | ३ | २१ |
| श्रोत्रस्य नभोदेशत्वम् भा. ... ... ... | २६ | १ |
| षण्णां पदार्थानां साधर्म्यनिरूपणम् भा. ... | ५ | ५ |
| सत्तानिरूपणम् टी. ... ... ... | ४ | १२ |
| सत्तासामान्यव्यवस्थापनम् भा. ... ... | १६५ | २ |
| सत्प्रत्ययकर्मकथनम् भा. ... ... ... | १५३ | ११ |
| समवायनिरूपणम् भा. ... ... ... | ५ | १ |
| समवायनिरूपणम् भा. ... ... ... | १७१ | ३ |
| समवायसद्भावे प्रमाणम् भा. ... ... ... | " | ४ |
| समवायस्य द्रव्याद्यतिरिक्तत्वम् भा. ... ... | १७२ | ५ |
| समवायस्य नित्यत्वम् भा. ... ... ... | १७४ | ३ |
| समवायस्य संयोगभिन्नत्वम् भा. ... ... | १७२ | २ |
| समवायस्यानुमेयत्वम् भा. ... ... ... | १७५ | १ |
| समवायस्याप्रत्यक्षत्वम् भा. ... ... ... | १७४ | १३ |
| समवायस्यैकत्वम् भा. ... ... ... | १७२ | ९ |

| विषयः | पृ० | पं० |
|---|---|---|
| समानजात्यारम्भकगुणकथनम् भा. ... ... | ४१ | २ |
| समानाधिकरणारम्भकगुणकथनम् भा. ... ... | ” | ७ |
| समानासमानजात्यारम्भकगुणकथनम् भा. ... | ” | ५ |
| सम्भवस्यानुमानेऽन्तर्भावकथनम् भा. ... ... | १११ | १ |
| साधर्म्यनिदर्शनलक्षणम् भा. ... ... ... | १२२ | २ |
| साधर्म्यनिदर्शनोदाहरणम् भा.... ... ... | ” | ४ |
| साधर्म्यवैधर्म्यप्रकरणारम्भः भा. ... ... | ५ | ४ |
| सामान्यगुणकथनम् भा. ... ... ... | ३९ | ५ |
| सामान्यनिरूपणम् भा. ... ... ... | १६४ | ३ |
| सामान्यविभागादिः परमपरञ्चेत्यादिना । भा. ... | ४ | ४ |
| सामान्यस्य द्रव्याद्यतिरिक्तत्वव्यवस्थापनम् भा. ... | १६६ | ६ |
| सामान्यादीनां त्रयाणां साधर्म्यकथनम् स्वात्मसत्त्वं बुद्धिलक्षणत्वम् अकार्यत्वमकारणत्वमसामान्यविशेषवत्त्वं नित्यत्वमर्थशब्दानभिधेयत्वं च । भा. ... ... | ६ | ७ |
| सिद्धदर्शनस्य विद्यान्तरत्वखण्डनम् भा. ... | १२९ | ७ |
| सुखनिरूपणम् भा. ... ... ... ... | १३० | २ |
| सुखस्य दुःखाभावरूपतादिमतखण्डनम् टी. ... | १३० | २१ |
| सुवर्णादेस्तैजसत्वसाधनम् टी.... ... ... | १६ | ११ |
| सृष्टिसंहारविधिः भा. ... ... ... | १९ | ६ |
| संख्यानिरूपणम् भा. ... ... ... ... | ४८ | २ |
| संयोगजगुणकथनम् भा. ... ... ... | ४० | ५ |
| संयोगनाशकथनम् भा. ... ... ... | ६६ | २ |
| संयोगनाशजपरत्वापरत्वनाशोदाहरणम् भा. ... | ७९ | ७ |
| संयोगनिरूपणम् तस्य त्रैविध्यादिकम् । भा. ... | ६१ | २ |
| संयोगलक्षणम् भा. ... ... ... ... | ६२ | २ |
| संयोगस्यान्यतरकर्मजादिविभागादिः भा. ... | ६२ | ३ |
| संयोगापेक्षाबुद्धिनाशजपरत्वापरत्वनाशोदाहरणम् भा. | ८२ | १ |
| संयोगाभावातिरिक्तविभागकथनम् टी. ... ... | ६७ | ७ |
| संशयनिरूपणम् भा. ... ... ... ... | ८५ | ३ |
| संशयभेदकथनम् भा. ... ... ... ... | ८६ | १ |

| विषयः | पृ० | पं० |
|---|---|---|
| संस्कारनिरूपणतद्विभागः भा. ... ... ... | १३६ | २ |
| संस्कारात् संयोगविभागपूर्वककर्मोत्पत्तिः भा. ... | १६१ | ७ |
| संस्कारातिशयहेतुकथनम् भा.... ... ... | १३६ | १ |
| स्थितिस्थापकानिरूपणम् भा. ... ... ... | १३७ | ९ |
| स्पर्शनिरूपणम् भा. ... ... ... ... | ४५ | ११ |
| स्मृतिनिरूपणम् भा. ... ... ... ... | १२८ | ६ |
| स्नेहनिरूपणम् भा. ... ... ... ... | १३५ | ११ |
| स्वतन्त्रपरमाणुषु पाकजोत्पत्तौ प्रमाणम् टी. ... | ४६ | २५ |
| स्वप्ननिरूपणम् भा. ... ... ... ... | ९१ | ५ |
| स्वप्नविभागादिः भा. ... ... ... ... | ९२ | १० |
| स्वार्थानुमाननिरूपणम् भा. ... ... ... | १०६ | २ |
| स्वाश्रयसमवेततदन्योभयारम्भकगुणकथनम् भा. | ४२ | २ |
| हेत्वाभासनिरूपणम् असिद्धविरुद्धसन्दिग्धानध्यवसितभेदेन । भा.... ... ... ... ... | ११६ | ७ |

# सटीकप्रशस्तपादभाष्यस्य शुद्धिपत्रम्।

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| दिकपरं | दिक्क्रमपरं | ४ | २० |
| चाक्षुषेति | अचाक्षुषेति | १७ | १३ |
| तिशय ह्याप्त्या | तिशयाह्याप्त्या | १८ | ७ |
| चाक्षुविषत्वा | चाक्षुषत्वा | २४ | ६ |
| आहाङ्कारेणे | आहाहङ्कारेणे | " | २५ |
| णवः तेषां | णवस्तद्रूपानां | ४६ | १८ |
| प्राप्त्यभावा | व्याप्त्यभावा | ४७ | १५ |
| ति सूत्रेणेति | ति १३८ सूत्रेणेति | ५३ | १९ |
| वध्ययघातक | वध्यघातक | " | २१ |
| परिमारणस्य | परिमाणस्य | ५८ | २३ |
| नुत्दत्तौ | नुत्पत्तौ | ६९ | १३ |
| मादिपदपम् | मादिपदम् | ७० | १६ |
| समवायोः | समवायो | ७१ | २ |
| पुथग्गति | पृथग्गति | " | ५ |
| ततः, प्रदे- | तत प्रदे- | ७३ | ९ |
| स्योत्पत्ता | स्योत्पत्तौ | ८४ | २५ |
| अर्थादिति पूर्व | अधर्मादिति पूर्व | ८८ | १८ |
| मनुकमिति | मनुमिति | १०० | ११ |
| तत्रैव | तद्ग्रंथएव | १०३ | १५ |
| सत्तामत्रेण | सत्तामात्रेण | १११ | १७ |
| प्रातज्ञा | प्रतिज्ञा | १२० | १० |
| सूत्रार्थस्तु | ९८ सूत्रार्थस्तु | ११९ | १० |
| दित्यन्तम् | दित्यन्तम् १०१ | १२० | २१ |
| प्रयत्नान्तरीय | प्रयत्नानन्तरीय | १२६ | २५ |
| पूर्वते | पूर्यते | १४० | १८ |
| संवन्धिनाऽधिष्ठि- | संबन्धिनानाधिष्ठि- | १५८ | २१ |
| विनाशेप्यविना | विनाशेपि विना- | १७४ | २४ |

श्रीः ॥

# वैशेषिकदर्शनसूत्रपाठः ।

श्रीगणेशाय नमः ।

अथातो धर्मं व्याख्यास्यामः ॥ १ ॥

यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥ २ ॥

तद्वचनादाम्नायस्य प्रामाण्यम् ॥ ३ ॥

धर्मविशेषप्रसूताद्‌द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥ ४ ॥

पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥ ५ ॥

रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखेच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥ ६ ॥

उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥ ७ ॥

सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ॥ ८ ॥

द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ॥ ९ ॥

द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥ १० ॥

कर्म कर्मसाध्यं न विद्यते ॥ ११ ॥

न द्रव्यं कार्यं कारणं च भवति ॥ १२ ॥

उभयथा गुणाः ॥ १३ ॥

कार्यविरोधि कर्म ॥ १४ ॥

क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम् ॥ १५ ॥

द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् ॥ १६ ॥

एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ॥ १७ ॥

द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम् ॥ १८ ॥

तथा गुणः ॥ १९ ॥

संयोगविभागवेगानां कर्म समानम् ॥ २० ॥

न द्रव्याणां कर्म ॥ २१ ॥

व्यतिरेकात् ॥ २२ ॥

द्रव्याणां द्रव्यं कार्यं सामान्यम् ॥ २३ ॥

गुणवैधर्म्यान्न कर्मणां कर्म ॥ २४ ॥

द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च ॥ २५ ॥

असमवायात् सामान्यकार्यं कर्म न विद्यते ॥ २६ ॥

संयोगानां द्रव्यम् ॥ २७ ॥

रूपाणां रूपम् ॥ २८ ॥

गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥ २९ ॥

संयोगविभागाश्च कर्मणाम् ॥ ३० ॥

कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ॥ ३१ ॥

इति प्रथमाध्यायस्य प्रथममाह्निकम् ॥

—:o:—

कारणाभावात् कार्य्याभावः ॥ ३२ ॥

न तु कार्य्याभावात् कारणाभावः ॥ ३३ ॥

सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥ ३४ ॥

भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव ॥ ३५ ॥

द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च ॥ ३६ ॥

अन्यत्राऽन्त्येभ्यो विशेषेभ्यः ॥ ३७ ॥

सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥ ३८ ॥

द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता ॥ ३९ ॥

गुणकर्मसु च भावान्न कर्म न गुणः ॥ ४० ॥

सामान्यविशेषाभावेन च ॥ ४१ ॥

अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥ ४२ ॥

सामान्यविशेषाभावेन च ॥ ४३ ॥

तथा गुणेषु भावाद्गुणत्वमुक्तम् ॥ ४४ ॥

सामान्यविशेषाभावेन च ॥ ४५ ॥

कर्मसु भावात् कर्मत्वमुक्तम् ॥ ४६ ॥

सामान्यविशेषाभावेन च ॥ ४७ ॥

सदिति लिङ्गाविशेषाद् विशेषलिङ्गाभावाच्चैको-
भावः ॥ ४८ ॥

इति प्रथमाध्यायस्य द्वितीयमाह्निकम् ॥

—:o:—

रूपरसगन्धस्पर्शवती पृथिवी ॥ ४९ ॥

रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ॥ ५० ॥

तेजो रूपस्पर्शवत् ॥ ५१ ॥

स्पर्शवान् वायुः ॥ ५२ ॥

त आकाशे न विद्यन्ते ॥ ५३ ॥

सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद् द्रवत्वमद्भिः सा-
मान्यम् ॥ ५४ ॥

त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद् द्रवत्वमद्भिः
सामान्यम् ॥ ५५ ॥

विषाणी ककुद्मान् प्रान्तेबालधिः सास्नावान् इति
गोत्वे दृष्टं लिङ्गम् ॥५६ ॥

स्पर्शश्च वायोः ॥ ५७ ॥

न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥ ५८ ॥

अद्रव्यवत्त्वेन द्रव्यम् ॥ ५९ ॥

क्रियावत्त्वाद् गुणवत्त्वाच्च ॥ ६० ॥

अद्रव्यत्वेन नित्यत्वमुक्तम् ॥ ६१ ॥

वायोर्वायुसंमूर्च्छनं नानात्वलिङ्गम् ॥ ६२ ॥

वायुसन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥ ६३ ॥

सामान्यतो दृष्टाच्चाविशेषः ॥ ६४ ॥

तस्मादागमिकम् ॥ ६५ ॥

संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् ॥ ६६ ॥

प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः ॥ ६७ ॥

निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥ ६८ ॥

तदलिङ्गमेकद्रव्यत्वात् कर्मणः ॥ ६९ ॥

कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥ ७० ॥

संयोगादभावः कर्मणः ॥ ७१ ॥

कारणगुणपूर्वकः कार्य्यगुणो दृष्टः ॥ ७२ ॥

कार्य्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥ ७३ ॥

परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥ ७४ ॥

परिशेषाल्लिङ्गमाकाशस्य ॥ ७५ ॥

द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ७६ ॥

तत्त्वम्भावेन ॥ ७७ ॥

शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च ॥ ७८ ॥

तदनुविधानादेकपृथक्त्वं चेति ॥ ७९ ॥

इति द्वितीयाध्यायस्य प्रथममाह्निकम् ॥

—:०:—

पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् ॥ ८० ॥

व्यवस्थितः पृथिव्यां गन्धः ॥ ८१ ॥

एतेनोष्णता व्याख्याता ॥ ८२ ॥

तेजस उष्णता ॥ ८३ ॥

अप्सु शीतता ॥ ८४ ॥

अपरस्मिन्नपरं युगपत् चिरं क्षिप्रमिति काललिङ्गानि ॥ ८५ ॥

द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ८६ ॥

तत्त्वम्भावेन ॥ ८७ ॥

नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति ॥ ८८ ॥

इत इदमिति यतस्तद्दिश्यं लिङ्गम् ॥ ८९ ॥

द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ९० ॥

तत्त्वम्भावेन ॥ ९१ ॥

कार्य्यविशेषेण नानात्वम् ॥ ९२ ॥

आदित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताच्च प्राची ॥ ९३ ॥

तथा दक्षिणा प्रतीची उदीची च ॥ ९४ ॥
एतेन दिगन्तरालानि व्याख्यातानि ॥ ९५ ॥
सामान्यप्रत्यक्षाद्विशेषस्मृतेश्च संशयः ॥ ९६ ॥
दृष्टश्च दृष्टवत ॥ ९७ ॥
यथादृष्टमयथादृष्टत्वाच्च ॥ ९८ ॥
विद्याऽविद्यातश्च संशयः ॥ ९९ ॥
श्रोत्रग्रहणो योऽर्थः स शब्दः ॥ १०० ॥
तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्य उभयथा दृष्टत्वात् ॥ १०१ ॥
एकद्रव्यत्वान्न द्रव्यम् ॥ १०२ ॥
नापि कर्माऽचाक्षुषत्वात् ॥ १०३ ॥
गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् ॥ १०४ ॥
सतो लिङ्गाभावात ॥ १०५ ॥
नित्यवैधर्म्यात ॥ १०६ ॥
अनित्यश्चायं कारणतः ॥ १०७ ॥
न चासिद्धं विकारात ॥ १०८ ॥
अभिव्यक्तौ दोषात् ॥ १०९ ॥
संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः ॥ ११० ॥
लिङ्गाच्चानित्यः शब्दः ॥ १११ ॥
द्वयोस्तु प्रवृत्त्योरभावात ॥ ११२ ॥

प्रथमाशब्दात् ॥ ११३ ॥

सम्प्रतिपत्तिभावाच्च ॥ ११४ ॥

सन्दिग्धाः सति बहुत्वे ॥ ११५ ॥

संख्याभावः सामान्यतः ॥ ११६ ॥

इति द्वितीयाध्यायस्य द्वितीयमाह्निकम् ॥

प्रसिद्धा इन्द्रियार्थाः ॥ ११७ ॥

इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥ ११८ ॥

सोऽनपदेशः ॥ ११९ ॥

कारणाज्ञानात् ॥ १२० ॥

कार्य्येषु ज्ञानात् ॥ १२१ ॥

अज्ञानाच्च ॥ १२२ ॥

अन्यदेव हेतुरित्यनपदेशः ॥ १२३ ॥

अर्थान्तरं ह्यर्थान्तरस्याऽनपदेशः ॥ १२४ ॥

संयोगि समवाय्येकार्थसमवायि विरोधि च ॥ १२५ ॥

कार्यं कार्यान्तरस्य ॥ १२६ ॥

विरोध्यभूतं भूतस्य ॥ १२७ ॥

भूतमभूतस्य ॥ १२८ ॥

भूतो भूतस्य ॥ १२९ ॥

प्रसिद्धिपूर्वकत्वादपदेशस्य ॥ १३० ॥

अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः ॥ १३१ ॥

यस्माद्विषाणी तस्मादश्वः ॥ १३२ ॥

यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम् ॥ १३३ ॥

आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥ १३४ ॥

प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ॥ १३५ ॥

इति तृतीयाध्यायस्य प्रथमाह्निकम् ॥

—:०:—

आत्मेन्द्रियार्थसन्निकर्षज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥ १३६ ॥

तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ १३७ ॥

प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ॥ १३८ ॥

प्राणाऽपानानिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ॥ १३९ ॥

तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ १४० ॥

यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥ १४१ ॥

सामान्यतो दृष्टाच्चाविशेषः ॥ १४२ ॥

तस्मादागमिकः ॥ १४३ ॥

अहमिति शब्दस्य व्यतिरेकान्नागमिकम् ॥ १४४ ॥

यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति १४५

दृष्ट्यात्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः ॥ १४६ ॥

देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः ॥ १४७ ॥

सन्दिग्धास्तूपचाराः ॥ १४८ ॥

अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः ॥ १४९ ॥

देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहङ्कारः ॥ १५० ॥

सन्दिग्धस्तूपचारः ॥ १५१ ॥

न तु शरीरविशेषाद्यज्ञदत्तविष्णुमित्रयोर्ज्ञानविषयः १५२ ॥

अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः ॥ १५३ ॥

सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ १५४ ॥

व्यवस्थातो नाना ॥ १५५ ॥

शास्त्रसामर्थ्याच्च ॥ १५६ ॥

इति तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥

—:०:—

सदकारणवन्नित्यम् ॥ १५७ ॥

तस्य कार्य्यं लिङ्गम् ॥ १५८ ॥

कारणाभावात् कार्य्याभावः ॥ १५९ ॥

अनित्य इति विशेषतः प्रतिषेधभावः ॥ १६० ॥

अविद्या ॥ १६१ ॥

महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः ॥ १६२ ॥

सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वायोरनुपलब्धिः ॥ १६३ ॥

अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः १६४

तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥ १६५ ॥

तस्याभावादव्यभिचारः ॥ १६६ ॥

सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वाऽपरत्वे कर्म च रूपद्रव्यसमवायात् चाक्षुषाणि ॥१६७॥

अरूपिष्वचाक्षुषाणि ॥ १६८ ॥

एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम् १६९

इति चतुर्थाध्यायस्य प्रथममाह्निकम् ॥

—:०:—

तत्पुनः पृथिव्यादिकार्य्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् ॥ १७० ॥

प्रत्यक्षाऽप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न

विद्यते ॥ १७१ ॥

गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥ १७२ ॥

अणुसंयोगस्त्वप्रतिषिद्धः ॥ १७३ ॥

तत्र शरीरं द्विविधं योनिजमयोनिजं च ॥ १७४ ॥

अनियतदिग्देशपूर्वकत्वात् ॥ १७५ ॥

धर्मविशेषाच्च ॥ १७६ ॥

समाख्याभावाच्च ॥ १७७ ॥

संज्ञाया आदित्वात् ॥ १७८ ॥

सन्त्ययोनिजाः ॥ १७९ ॥

वेदलिङ्गाच्च ॥ १८० ॥

इति चतुर्थाध्यायस्य द्वितीयमाह्निकम् ॥

आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥ १८१ ॥

तथा हस्तसंयोगाच्च मुसले कर्म ॥ १८२ ॥

अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥ १८३ ॥

तथात्मसंयोगो हस्तकर्मणि ॥ १८४ ॥

अभिघातान्मुसलसंयोगाद्धस्ते कर्म ॥ १८५ ॥

आत्मकर्म हस्तसंयोगाच्च ॥ १८६ ॥

संयोगाभावे गुरुत्वात् पतनम् ॥ १८७ ॥

नोदनविशेषाभावान्नोर्ध्वं न तिर्यग्गमनम् ॥ १८८ ॥

प्रयत्नविशेषान्नोदनविशेषः ॥ १८९ ॥

नोदनविशेषादुदसनविशेषः ॥ १९० ॥

हस्तकर्मणा दारककर्म व्याख्यातम् ॥ १९१ ॥

तथा दग्धस्य विस्फोटने ॥ १९२ ॥

यत्नाभावे प्रसुप्तस्य चलनम् ॥ १९३ ॥

तृणे कर्म वायुसंयोगात् ॥ १९४ ॥

मणिगमनं सूच्यभिसर्पणमदृष्टकारणम् ॥ १९५ ॥

इषावयुगपत् संयोगविशेषाः कर्मान्यत्वे हेतुः ॥ १९६ ॥

नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ॥ १९७ ॥

संस्काराभावे गुरुत्वात् पतनम् ॥ १९८ ॥

इति पञ्चमाध्यायस्य प्रथममाह्निकम् ॥

—:०:—

नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म ॥ १९९ ॥

तद्विशेषेणादृष्टकारितम् ॥ २०० ॥

अपां संयोगाभावे गुरुत्वात् पतनम् ॥ २०१ ॥

द्रवत्वात् स्यन्दनम् ॥ २०२ ॥

नाड्या वायुसंयोगादारोहणम् ॥ २०३ ॥

नोदनापीडनात् संयुक्तसंयोगाच्च ॥ २०४ ॥

वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥ २०५ ॥

अपां सङ्घातो विलयनं च तेजःसंयोगात् ॥ २०६ ॥

तत्रविस्फूर्जथुर्लिङ्गम् ॥ २०७ ॥

वैदिकं च ॥ २०८ ॥

अपां संयोगाद्विभागाच्च स्तनयित्नोः ॥ २०९ ॥

पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ॥ २१० ॥

अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम् ॥ २११ ॥

हस्तकर्मणा मनसः कर्म व्याख्यातम् ॥ २१२ ॥

आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे ॥ २१३ ॥

तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः संयोगः ॥ २१४ ॥

अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चेत्यदृष्टकारितानि ॥ २१५ ॥

तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः ॥ २१६ ॥

द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ॥ २१७ ॥

तेजसो द्रव्यान्तरेणावरणाच्च ॥ २१८ ॥

दिक्कालावाकाशं च क्रियावद्वैधर्म्यान्निष्क्रियाणि ॥ २१९ ॥

एतेन कर्माणि गुणाश्च व्याख्याताः ॥ २२० ॥

निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः ॥ २२१ ॥

कारणं त्वसमवायिनो गुणाः ॥ २२२ ॥

गुणैर्दिग् व्याख्याता ॥ २२३ ॥

कारणेन कालः ॥२२४ ॥

इति पञ्चमाध्यायस्य द्वितीयमाह्निकम् ।

—:०:—

बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ २२५ ॥

ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम् ॥ २२६ ॥

बुद्धिपूर्वो ददातिः ॥ २२७ ॥

तथा प्रतिग्रहः ॥ २२८ ॥

आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् ॥ २२९ ॥

तद्दुष्टभोजने न विद्यते ॥ २३० ॥

दुष्टं हिंसायाम् ॥ २३१ ॥

तस्य समभिव्याहारतो दोषः ॥ २३२ ॥

तददुष्टे न विद्यते ॥ २३३ ॥

पुनर्विशिष्टे प्रवृत्तिः ॥ २३४ ॥

समे हीने वा प्रवृत्तिः ॥ २३५ ॥

एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ॥ २३६ ॥

तथा विरुद्धानां त्यागः ॥ २३७ ॥

हीने परे त्यागः ॥ २३८ ॥

समे आत्मत्यागः परत्यागो वा ॥ २३९ ॥

विशिष्टे आत्मत्याग इति ॥ २४० ॥

इति षष्ठाध्यायस्य प्रथममाह्निकम् ॥

—:o:—

दृष्टादृष्टप्रयोजनाना दृष्टाभावे प्रयोजनमभ्युदयाय १४१॥

अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥ २४२ ॥

चातुराश्रम्यमुपधा अनुपधाश्च ॥ २४३ ॥

भावदोष उपधाऽदोषोऽनुपधा ॥ २४४ ॥

यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि ॥ २४५ ॥

अशुचीति शुचिप्रतिषेधः ॥ २४६ ॥

अर्थान्तरं च ॥२४७ ॥

अयतस्य शुचि भोजनादभ्युदयो न विद्यते नियमाभावाद् विद्यते वाऽर्थान्तरत्वाद् यमस्य ॥ २४८ ॥

असति चाभावात् ॥ २४९ ॥

सुखाद्रागः ॥ २५० ॥

तन्मयत्वाच्च ॥ २५१ ॥

अदृष्टाच्च ॥ २५२ ॥

जातिविशेषाच्च ॥ २५३ ॥

इच्छाद्वेषपूर्विका धर्माऽधर्मप्रवृत्तिः ॥ २५४ ॥

तत्संयोगो विभागः ॥ २५५ ॥

आत्मकर्मसु मोक्षो व्याख्यातः २५६ ॥

इति षष्ठाध्यायस्य द्वितीयमाह्निकम् ॥

—:०:—

उक्ता गुणाः ॥ २५७ ॥

पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च २५८

एतेन नित्येषु नित्यत्वमुक्तम् ॥ २५९ ॥

अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् ॥२६०॥

अनित्येष्वनित्या द्रव्यानित्यत्वात् ॥ २६१ ॥

कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥ २६२ ॥

एकद्रव्यत्वात् ॥ २६३ ॥

अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥२६४॥

कारणबहुत्वाच्च ॥ २६५ ॥

अतो विपरीतमणु ॥ २६६ ॥

अणु महदिति तस्मिन् विशेषभावात् विशेषाभावाच्च २६७

एककालत्वात् ॥ २६८ ॥

दृष्टान्ताच्च ॥ २६९ ॥

अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥ २७० ॥

कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः ॥२७१॥

२

अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥२७२॥

एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ॥ २७३ ॥

अनित्येऽनित्यम् ॥ २७४ ॥

नित्ये नित्यम् ॥ २७५ ॥

नित्यं परिमण्डलम् ॥ २७६ ॥

अविद्या च विद्यालिङ्गम् ॥ २७७ ॥

विभवान्महानाकाशस्तथा चात्मा ॥ २७८ ॥

तदभावादणु मनः ॥ २७९ ॥

गुणैर्दिग्व्याख्याता ॥ २८० ॥

कारणे कालः ॥ २८१ ॥

इति सप्तमाध्यायस्य प्रथममाह्निकम् ॥

———:०:———

रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥२८२॥

तथा पृथक्त्वम् ॥ २८३ ॥

एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्या व्याख्यातः ॥ २८४ ॥

निःसंख्यत्वात् कर्मगुणानां सर्वैकत्वं न विद्यते॥२८५॥

भ्रान्तं तत् ॥ २८६ ॥

एकत्वाभावाद्भक्तिस्तु न विद्यते ॥ २८७ ॥

कार्य्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ॥ २८८ ॥

एतदनित्ययोर्व्याख्यातम् ॥ २८९ ॥

अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः॥ २९०॥

एतेन विभागो व्याख्यातः ॥ २९१ ॥

संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ २९२ ॥

कर्मभिः कर्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति २९३

युतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते ॥ २९४ ॥

गुणत्वात् ॥ २९५ ॥

गुणोऽपि विभाव्यते ॥ २९६ ॥

निष्क्रियत्वात् ॥ २९७ ॥

असति नास्तीति च प्रयोगात् ॥ २९८ ॥

शब्दार्थावसम्बन्धौ ॥ २९९ ॥

संयोगिनो दण्डात् समवायिनो विशेषाच्च ॥ ३०० ॥

सामयिकः शब्दादर्थप्रत्ययः ॥ ३०१ ॥

एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च ॥ ३०२ ॥

कारणपरत्वात् कारणापरत्वाच्च ॥ ३०३ ॥

परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ३०४ ॥

कर्मभिः कर्माणि ॥ ३०५ ॥

गुणैर्गुणाः ॥ ३०६ ॥

इहेदमिति यतः कार्य्यकारणयोः स समवायः ॥३०७॥

द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः ॥ ३०८ ॥

तत्त्वम्भावेन ॥ ३०९ ॥

इति सप्तमाध्यायस्य द्वितीयमाह्निकम् ॥

——:o:——

द्रव्येषु ज्ञानं व्याख्यातम् ॥ ३१० ॥

तत्रात्मा मनश्चाप्रत्यक्षे ॥ ३११ ॥

ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥ ३१२ ॥

गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम्॥३१३॥

सामान्यविशेषेषु सामान्यविशेषाभावात्तदेव ज्ञानम् ॥ ३१४ ॥

सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥ ३१५ ॥

द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥ ३१६ ॥

गुणकर्मसु गुणकर्माभावाद्गुणकर्मापेक्षं न विद्यते॥३१७॥

समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते एते कार्यकारणभूते ॥ ३१८ ॥

द्रव्येष्वनितरेतरकारणाः ॥ ३१९ ॥

कारणायौगपद्यात् कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥ ३२० ॥

इति अष्टमाध्यायस्य प्रथममाह्निकम् ॥

अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम् ॥ ३२१ ॥

दृष्टेषु भावाददृष्टेष्वभावात् ॥ ३२२ ॥

अर्थ इति द्रव्यगुणकर्मसु ॥ ३२३ ॥

द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् ॥ ३२४ ॥

भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥ ३२५ ॥

तथापस्तेजो वायुश्च रसरूपस्पर्शाविशेषात् ॥ ३२६ ॥

इति अष्टमाध्यायस्य द्वितीयमाह्निकम् ॥

—:०:—

क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ ३२७ ॥

सदसत् ॥ ३२८ ॥

असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३२९ ॥

सच्चासत् ॥ ३३० ॥

यच्चान्यदसदतस्तदसत् ॥ ३३१ ॥

असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधिप्रत्यक्षवत् ॥ ३३२ ॥

तथाऽभावे भावप्रत्यक्षत्वाच्च ॥ ३३३ ॥

एतेनाघटोऽगौरधर्मश्च व्याख्यातः ॥ ३३४ ॥

अभूतं नास्तीत्यनर्थान्तरम् ॥ ३३५ ॥

नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः ॥ ३३६ ॥

आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् ॥ ३३७ ॥

तथा द्रव्यान्तरेषु प्रत्यक्षम् ॥ ३३८ ॥

असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषाञ्च ॥ ३३९ ॥

तत्समवायात् कर्मगुणेषु ॥ ३४० ॥

आत्मसमवायादात्मगुणेषु ॥ ३४१ ॥

इति नवमाध्यायस्य प्रथममाह्निकम् ॥

—:०:—

अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥ ३४२ ॥

अस्येदं कार्यकारणसम्बन्धश्चावयवाद्भवति ॥ ३४३ ॥

एतेन शाब्दं व्याख्यातम् ॥ ३४४ ॥

हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ॥ ३४५ ॥

अस्येदमिति बुद्ध्यपेक्षितत्वात् ॥ ३४६ ॥

आत्मनः संयोगविशेषात् संस्काराच्च स्मृतिः ॥ ३४७ ॥

तथा स्वप्नः ॥ ३४८ ॥

स्वप्नान्तिकम् ॥ ३४९ ॥

धर्माच्च ॥ ३५० ॥

इन्द्रियदोषात् संस्कारदोषाच्चाविद्या ॥ ३५१ ॥

तद्दुष्टज्ञानम् ॥ ३५२ ॥

अदुष्टं विद्या ॥ ३५३ ॥

आर्षं सिद्धदर्शनं च धर्मेभ्यः ॥ ३५४ ॥

इति नवमाध्यायस्य द्वितीयमाह्निकम् ॥

इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः ॥ ३५५ ॥

संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥३५६॥

तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ॥ ३५७ ॥

अभूदित्यपि ॥ ३५८ ॥

सति च कार्यादर्शनात् ॥ ३५९ ॥

एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ॥ ३६० ॥

एकदेशे इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः ॥ ३६१ ॥

इति दशमाध्यायस्य प्रथममाह्निकम् ॥

कारणमिति द्रव्ये कार्यसमवायात् ॥ ३६२ ॥

संयोगाद्वा ॥ ३६३ ॥

कारणे समवायात् कर्माणि ॥ ३६४ ॥

तथा रूपे कारणैकार्थसमवायाच्च ॥ ३६५ ॥

कारणसमवायात् संयोगः पटस्य ॥ ३६६ ॥

कारणाकारणसमवायाच्च ॥ ३६७ ॥

संयुक्तसमवायादग्नेर्वैशेषिकम् ॥ ३६८ ॥

दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ३६९

तद्वचनादाम्नायस्य प्रामाण्यमिति ॥ ३७० ॥

इति दशमाध्यायस्य द्वितियमाह्निकम् ।

समाप्तं च वैशेषिकदर्शनम् ॥

# प्रशस्तपादभाष्यम् ।

## (१) ग्रन्थप्रयोजनप्रकरणम् ।

(१)प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।
पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदयः ॥

---

श्रीकृष्णाय नमः ।

### (१) ग्रन्थप्रयोजनप्रकरणम्

(१)गुरून् पर्यायतो नत्वा विषमस्थलटिप्पणीम् ॥
कुर्वे प्रशस्तपादस्य यथामति समासतः ॥ १ ॥

शास्त्रारम्भे सदाचारपरिप्राप्ततया कायादिकृतं परापरगुरुनमस्कारं शिष्यशिक्षार्थमादौ निबध्नाति प्रणम्येति । हेतुं सर्वोत्पत्तिमतां निमित्तकारणभूतमीश्वरं भक्तिश्रद्धातिशयपूर्वकं नत्वाऽतः ईश्वरप्रणामादनु पश्चात् कापोतीं वृत्तिमनुतिष्ठन्तं कणादं मुनिं च प्रणम्य महोदयः महान् उदयो ज्ञानं यतः स पदार्थधर्मसंग्रहः पदार्थानां द्रव्यादीनां धर्माः साधर्म्यवैधर्म्यरूपास्तेषां सङ्ग्रहः सङ्कलय्य कथनं यत्र स तन्नामा भाष्यग्रन्थ इत्यर्थः, प्रवक्ष्यते प्रकृष्टो वक्ष्यत इत्यभिप्रायः । अत्र प्रेक्षावत्प्रवृत्त्यङ्गमनुबन्धचतुष्टयमपि सूचितं भाष्यकारैः । तथाहि पदार्थधर्मसङ्ग्रह इत्यनेनाभिधेयं द्रव्यादि, महोदय इत्यनेन ज्ञानरूपं प्रयोजनं, सङ्ग्रहपदार्थधर्मयोर्वाच्यवाचकभावस्तत्प्रतिपत्त्या महोदयेन सह साध्यसाधनभावश्च सम्बन्धः, पदार्थधर्मज्ञानद्वारा निःश्रेयसेच्छुश्चाधिकारीति ।

अनेन भाष्येण 'अथातो धर्मं व्याख्यास्यामः' इति (१)प्रथमं सूत्रं व्याख्यातम् । अग्रे सर्वत्र टिप्पण्यामस्मिन्नेव पुस्तके मुद्रितसूत्रपाठानां सङ्कलनाङ्को ग्राह्यः ।

(१)द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः ।
(२)तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेव ॥

(२) उद्देशप्रकरणम् ।

(३)अथ के द्रव्यादयः पदार्थाः किञ्च तेषां सा-

---

(१)ननु पदार्थधर्मसङ्ग्रहरूपोऽयं ग्रन्थो महोदयहेतुरित्यनुपपन्नम्, शब्दानामर्थप्रतिपादनव्यतिरेकेण फलान्तराभावात् इत्याशङ्क्य पदार्थधर्मप्रतीतिहेतोः सङ्ग्रहस्य पारम्पर्येण महोदयहेतुत्वमित्याशयेनाह द्रव्येति । यस्य वस्तुनो यो भावस्तत्तस्य तत्त्वं, साधर्म्यवैधर्म्ये एव तत्त्वं तस्य ज्ञानं निःश्रेयसहेतुरित्यर्थः । केषां साधर्म्यवैधर्म्यतत्त्वपरिज्ञानं निःश्रेयसहेतुरित्यपेक्षायां द्रव्यादीनामिति । यद्वा पदार्थधर्मसङ्ग्रह इत्यत्र के पदार्थाः के च तेषां धर्माः ? इत्यत आह द्रव्येति । द्रव्यादयः षट् पदार्थाः, साधर्म्यवैधर्म्यरूपा अनुवृत्तव्यावृत्तरूपाश्च धर्मा इत्यर्थः ।

(२) ननु यदि तत्त्वज्ञानं निःश्रेयसहेतुस्तर्हि धर्मो न कारणं ततश्च "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म" इति सूत्रविरोध इत्यत आह तच्चेति । तन्निःश्रेयसं धर्मादेव भवति द्रव्यादितत्त्वज्ञानं धर्महेतुत्वान्निःश्रेयससाधनमिति भावः । केवलधर्मस्य निःश्रेयसाजनकतया धर्मे विशेषणमाहेश्वरेति । ईश्वरचोदना ईश्वरेच्छाविशेषः तेन अभिव्यक्तात्कार्यारम्भाभिमुखीकृताद्धर्मादेव निःश्रेयसं भवति इति यावत् । उदयानाचार्यास्तु ईश्वरनोदना वेदस्तत्प्रतिपादिताद्धर्मात् निःश्रेयसमिति भाष्यार्थं वदन्ति । तेषामयमाशयः शास्त्रेण पदार्थान् विविच्य श्रुतिस्मृतीतिहासपुराणोपदिष्टयोगविधिना दीर्घकालादरनैरन्तर्यसेवितान्निवृत्तिलक्षणात् धर्मादेव तत्त्वज्ञानमुत्पद्यते यतोऽपवर्गान्मुक्तिर्भवतीति ।

एतेन (२)-(३)-(४) सूत्राणि व्याख्यातानि ।

(२) उद्देशप्रकरणम् ।

(३) एवं षटपदार्थज्ञानस्य पुरुषार्थोपायत्वमवगम्य तेषां प्रत्येकं

धर्म्यं वैधर्म्यञ्चेति ? ॥

(१)तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि सामान्यविशेषसञ्ज्ञयोक्तानि नवैवेति । तद्व्यतिरेकेणान्यस्य सञ्ज्ञानभिधानात् ॥

गुणाश्च रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्चेति कण्ठोक्ताः सप्तदश । चशब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दाः (२)सप्तैवेत्येवं चतुर्विंशतिर्गुणाः ॥

(३)उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव

---

भेदजिज्ञासार्थं पृच्छति अथेति । कानि द्रव्याणि के गुणा इत्यादि योजनीयम् । धर्मिज्ञाने जातेऽवश्यं धर्मा ज्ञायन्त एवेत्यनियमात्, धर्मेषु पृथक् प्रश्नमाह किञ्च तेषामिति ।

(१) उत्तरयति तत्रेति । द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा द्रव्यसामान्यलक्षणं बोध्यम् । द्रव्यत्वं च कार्यसमवायिकारणतावच्छेदकतया सिद्धम् । सामान्येति । सामान्यसंज्ञा द्रव्यसंज्ञा विशेषसंज्ञा पृथिव्यबादिसंज्ञा तयोक्तानि सूत्रकारेणेति शेषः । नवैवेति । तम आदीनामभावादिरूपत्वेन द्रव्यान्तरत्वस्य विरुद्धत्वात्, इदमेवाह तद्व्यतिरेकेणेति ।

अनेन (५)सूत्रं व्याख्यातम् ।

(२) सप्तैवेति । गुणादिलक्षणं तत्तत्प्रकरणे वक्ष्यते एवं चतुर्विंशतिगुणा इत्यर्थः । शौर्योदार्यादीनामत्रैवान्तर्भावात् । स्वसजातीयोत्पादकत्वरूपानुगतसंस्कारत्वस्य त्रिविधसंस्कारवृत्तित्वात्, धर्माधर्मसाधारणानुगतादृष्टत्वजात्यभावाच्च न चतुर्विंशतित्वव्याघात इति ध्येयम् ।

अत्र (६) सूत्रं व्याख्यातम् ।

(३) अनेन भाष्येण (७) सूत्रं व्याख्यातम् ।

कर्माणि । गमनग्रहणाद्भ्रमणरेचनस्पन्दनोर्ध्वज्वलनतिर्यक्पतननमनोन्नमनादयो गमनविशेषा न जात्यन्तराणि ॥

सामान्यं द्विविधं परमपरं चानुवृत्तिप्रत्ययकारणम्। तत्र परं सत्ता महाविषयत्वात् सा चा(१)नुवृत्तेरेव हेतुत्वात् सामान्यमेव । (२)द्रव्यत्वाद्यपरमल्पविषयत्वात् । तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यं सद्विशेषाख्यामपि लभते ॥

(३)नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । ते खल्वत्यन्तव्यावृत्तिहेतुत्वाद्विशेषा एव ॥

---

(१) अनुवृत्तेरेवेति। द्रव्यत्वादिकन्तु स्वाश्रयस्य विजातीयेभ्योपि व्यावृत्तेरपि हेतुत्वात् विशेषोपीति । यद्यपि सत्ता सामान्यादिभ्यो व्यावर्तते तथापि तेभ्यः स्वाश्रयं व्यावर्तयितुं न शक्नोति तेषामपि स्वरूपसत्तासंबुद्धिसंवेद्यत्वादिति श्रीधराचार्याः। ननु सामान्यादिभ्यो व्यावर्तमानापि सत्ता यदि स्वाश्रयं ततो न व्यावर्तयेत् तर्हि द्रव्यत्वादिकमपि न व्यावर्तयेत् अविशेषात् इति चेन्न सत्ताया व्यक्तिस्वरूपमात्रव्यङ्ग्यतया व्यक्त्यैक्यनियमाभावात् इति किरणावलीकृतः ।

(२) द्रव्यत्वादीति। गुणत्वं कर्मत्वं चादिपदार्थः, तथा द्रव्यत्वाद्यपेक्षया पृथिवीत्वादि तदपेक्षया च घटत्वादिकपरं बोध्यम् ।

अत्र (३४) (३५) सूत्रे ।

(३) नित्यद्रव्येति । नित्यद्रव्येतरावृत्तित्वे सति नित्यद्रव्यवृत्तित्वम् विशेषत्वम् । द्रव्यगुणकर्मसामान्येषु नित्यद्रव्यवृत्तित्वात् अतिव्याप्तिवारणाय विशेषणम् । द्रव्यगुणकर्मसु द्रव्यवृत्तित्वादतिव्याप्तिवारणाय नित्यपदम् । विशेषा एवेति । न तु सामान्या-

(१)अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः ॥

(२)एवं धर्मैर्विना धर्मिणामुद्देशः कृतः ॥

(३) साधर्म्यवैधर्म्यप्रकरणम् ।

(३)षण्णामपि पदार्थानामस्तित्वाभिधेयत्वज्ञेय-

---

न्यपि सर्वदा व्यावृत्तिमात्रहेतुत्वादिति शेषः ।

अत्र (३६) सूत्रम् ।

(१) अयुतेति । अयुताः प्राप्ताश्च ते सिद्धाश्चेत्ययुतसिद्धाः प्राप्ता एव सन्ति न वियुक्ता इत्यर्थः, तेषां सम्बन्धः प्राप्तिलक्षणः समवायः यथा तन्तुपटयोः । एतेन संयोगो व्यवच्छिन्नस्तस्याप्राप्तिपूर्वकत्वात् । तथा च नित्या प्राप्तिः समवाय इति लक्षणं सूचितम् । नित्यसंयोगानङ्गीकारान्न तत्रातिव्याप्तिः । प्राप्तिपदेन वाच्यवाचकरूपसम्बन्धो निवारितस्तदेव स्पष्टयति आधार्याधारभूतानामिति । स्वभावत आधार्याधाराणां न त्वागन्तुकेन धर्मेणेति तदर्थः । उक्तसम्बन्धश्चागन्तुक एवेति तद्व्युदासः । तत्र प्रमाणमाह इहेति । इह तन्तुषु पट इत्यादिप्रत्ययाः सम्बन्धं विनाऽनुपपद्यमानास्तं व्यवस्थापयन्तीत्यर्थः ।

अत्र (३०७) सूत्रम् ।

(२) अनुद्दिष्टेषु धर्मिषु धर्मनिर्वचनमयुक्तमिति धर्मोद्देशं प्रक्रमयितुं सङ्गतिं प्रदर्शयति एवमिति । एतावता ग्रन्थेनोद्देशप्रकरणं समाप्तमित्यर्थः । अस्य न सूत्रम् ।

(३) साधर्म्यवैधर्म्यप्रकरणम् ।

(३) यद्यपि धर्मा न षट्पदार्थातिरिक्ताः किन्तु अन्योन्यापेक्षया त एव धर्मा धर्मिणश्च भवन्ति तथापि तेषां धर्मिरूपतया परिज्ञानार्थं पृथगुद्देशमाह षण्णामिति । अस्तित्वं स्वरूपवत्त्वम् । अभिधेयत्वमभिधानयोग्यता ज्ञेयत्वं ज्ञानविषयता । न चैतान्यभावेपि सन्तीति वाच्यम् न हि तदपेक्षयैतानि वैधर्म्यं विवक्षितमपि तु षडपेक्षया साधर्म्यम् ।

त्वानि। आश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः। द्रव्यादीनां पञ्चानां समवायित्वमनेकत्वं च। गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे। (१)द्रव्यादीनां त्रयाणामपि सत्तासम्बन्धः सामान्यविशेषवत्त्वं स्वसमयार्थशब्दाभिधेयत्वं धर्माधर्मकर्तृत्वं च। कार्यत्वानित्यत्वे कारणवतामेव। (२)कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः। द्रव्याश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः। (३)सामा-

---

गुणादीनामित्यनेन(१६)(१७)(४०)(२७१) सूत्राणि व्याख्यातानि।

(१)द्रव्यादीनामिति। सत्तासम्बन्धः समवायलक्षणः। सामान्यविशेषा द्रव्यत्वादयस्तद्वत्त्वम्। स्वसमयो वैशेषिकसङ्केतितो योऽर्थशब्दास्त्रिषु प्रसिद्धस्तदभिधेयत्वं, धर्माधर्मकर्तृत्वञ्च त्रयाणां साधर्म्यम्। यथा एकैव गौर्दानापहरणरूपकर्मभेदेन धर्माधर्मयोर्निमित्तमिति कन्दलीकारः। धर्मकर्तृत्वमधर्मकर्तृत्वं चेति साधर्म्यद्वयञ्चकारेण सूचितम् धर्मकर्तृत्वमधर्मं विहायाधर्मकर्तृत्वं धर्मं विहायेति आचार्याः।

अत्र (८) (३२३) (३८) सूत्राणि

(२) कारणत्वं चेति। पारिमाण्डल्यमणुपरिमाणम् आदिशब्देन द्व्यणुकपरिमाणं महत्परिमाणमन्त्यावयवपरिमाणमन्त्यशब्दमनःपरिमाणं परत्वापरत्वे द्विपृथक्त्वं च ग्राह्यमिति कन्दली। अन्त्यावयविगतरूपरसगन्धस्पर्शपरिमाणानि द्वित्वद्विपृथक्त्वपरत्वापरत्वानि विनश्यदवस्थद्रव्ये संयोगविभागवेगकर्माणि अन्त्यः शब्दः चरमः संस्कारो ज्ञानं चादिपदेन गृह्यते इति किरणावली।

इदञ्च साधर्म्यं भाष्यकारेण स्वतन्त्रमुक्तम्।

(३) सामान्यादीनां साधर्म्यमाह सामान्यादीनामिति। स्वात्मसत्त्वं सत्ताविरहः। बुद्धिलक्षणत्वं बुद्धिमात्रममीषां लक्षणं प्रमाणं न तु द्रव्यादौ तत्कार्यमिवान्यदपि प्रमाणमित्यर्थः। अनुवृत्तिबुद्धिर्व्यावृत्तिबुद्धिरिहेतिबुद्धिरित्येव सामान्यादित्रये प्रमाणमिति भावः। अ-

न्यादीनां त्रयाणां स्वात्मसत्त्वं बुद्धिलक्षणत्वमकार्यत्वमकारणत्वमसामान्यविशेषवत्त्वं नित्यत्वमर्थशब्दानभिधेयत्वं चेति ॥

(१)पृथिव्यादीनां नवानामपि द्रव्यत्वयोगः स्वात्मन्यारम्भकत्वं गुणवत्त्वं कार्यकारणाविरोधित्वमन्त्यविशेषवत्त्वम् । अनाश्रितत्वनित्यत्वे चान्यत्रावयविद्रव्येभ्यः । पृथिव्युदकज्वलनपवनात्ममनसामनेकत्वा(२)परजातिमत्त्वे । क्षितिजलज्योतिरानिलमनसां

---

कार्यत्वं कारणानपेक्षस्वभावत्वम् । अकारणत्वं समवाय्यसमवायित्वाभावः न तु निमित्तकारणत्वाभावः बुद्धिनिमित्तत्वाभ्युपगमात् । असामान्यविशेषवत्त्वमपरजातिराहित्यमित्यर्थः । सामान्यादिष्वनवस्थानान्नापरं सामान्यम् । कथं तर्हि तेषु प्रत्ययानुवृत्तिरिति चेत्, अनेकव्यक्तिसमवायोपाधिवशात् विशेषेष्वप्येकशब्दप्रवृत्तिरत्यन्तव्यावृत्तिबुद्धिजनकत्वस्य सर्वत्र सम्भवादिति कन्दली । अर्थेति । स्वसङ्केतितार्थशब्दानभिधेयत्वमित्यर्थः ।

अत्र (३४) (४१) (४३) (४५) (४७) (३०७) सूत्राणि ।

(१) द्रव्याणामेव विशिष्य साधर्म्यं निरूपयति पृथिव्यादीनामिति । द्रव्यत्वयोग इति । अनेन द्रव्याणामितरभेदलक्षणमुक्तम् । स्वात्मन्यारम्भकत्वं स्वसमवेतकार्यजनकत्वमित्यर्थः । कार्येति । द्रव्यजातीयं शब्दकर्मादिवत् कार्यकारणयोरन्यतरेण न विरुध्यते । यथा शब्दो गुणः कार्यशब्देन नाश्यते कर्म चोत्तरसंयोगेन यथा वान्त्यः शब्द उपान्त्येन नैवं द्रव्यं तस्य क्वचित्समवायिकारणनाशेन क्वचिदसमवायिकारणनाशेन नाशादित्यर्थः ।

एतत्तु (९) (१०) (१२) (१५) (१८) सूत्रेषु व्याख्यातम् । अनाश्रितत्वेतिभाष्यं स्वतन्त्रम् ।

(२) अपरेति । सा च पृथिवीत्वादिः तत्समवायः पृथिव्यादावित्य-

(१)क्रियावत्त्वमूर्तत्वपरत्वापरत्ववेगवत्त्वानि। (२)आकाशकालदिगात्मनां सर्वगतत्वं परममहत्त्वं सर्वसंयोगिसमानदेशत्वं च। पृथिव्यादीनां पञ्चानामपि (३)भूतत्वेन्द्रियप्रकृतित्वं बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वानि। चतुर्णां द्रव्यारम्भकत्वस्पर्शवत्त्वे(४)। (५)त्रयाणां प्रत्यक्षत्वरूपवत्त्वद्रवत्वानि। द्वयोर्गुरुत्वं

---

र्थः। संस्कारवत्ता चैतेषामिति आचार्याः। न सूत्रम्।

(१) क्रियावत्त्वं क्रियावद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम् तेन नोत्पन्नविनष्टेऽतिव्याप्तिः। एवमग्रेऽपि।

इदन्तु (१९९) सूत्रात् (२०५) पर्यन्तं (२१०) (२११) (२१२) (१९७) (३०२) सूत्रेष्वपि द्रष्टव्यम्।

(२) आकाशेति। सर्वगतत्वं सर्वमूर्तसंयोगित्वं न तु सर्वत्र गमनमाकाशादीनां निष्क्रियत्वात्। परममहत्त्वमियत्तानवच्छिन्नपरिमाणवत्त्वम्। सर्वेति। सर्वेषां संयोगिनां मूर्तानां संयोगेन समाना आकाशादयो देशास्तेषां भावस्तत्त्वम्। पूर्वमाकाशादयो सर्वमूर्तेषु वर्तन्त इत्युक्तम् सम्प्रति त एवाकाशादिषु वर्तन्ते इत्यपौनरुक्तम्। पूर्वं संयोगमात्रं मूर्तद्रव्यैः सहोक्तमत्राधारत्वमिति कन्दलीकाराः।

अत्र (२७८) (२८०) (२८१) सूत्राणि।

(३) भूतत्वेति। तत्तु संस्कारत्वान्यबहिरिन्द्रियग्राह्यगुणत्वव्याप्यजातिमद्विशेषगुणवत्त्वमित्यर्थः। इन्द्रियप्रकृतित्वमिन्द्रियोपादानत्वम् तच्च नभसोऽवच्छिन्नानवच्छिन्नभेदकल्पनयोपपादनीयमिति किरणावली। बाह्येति। बाह्यैकैकेन्द्रियेण चक्षुरादिना ग्राह्या ये विशेषगुणा रूपादयस्तद्वत्ता पृथिव्यादीनामित्यर्थः। अन्तःकरणग्राह्यत्वस्यैतेषु सत्त्वादैकैकेत्यसिद्धमतो बाह्यपदम् इति कन्दली।

अत्र (३२५) (३२६)सूत्रे व्याख्याते।

(४) अत्र (४९) (५०) (५१) (५२) (२३) सूत्राणि व्याख्यातानि।

(५) त्रयाणामिति। अत्र प्रत्यक्षं बाह्येन्द्रियविषयं ग्राह्यमन्यथा-

रसवत्त्वं च(१) । भूतात्मनां वैशेषिकगुणवत्त्वम् । क्षित्युदकात्मनां चतुर्दशगुणवत्त्वम्(२) । (३)आकाशात्मनां क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वम् । दिक्कालयोः (४)पञ्चगुणवत्त्वं सर्वोत्पत्तिमतां निमित्तकारणत्वम् च । क्षितितेजसोर्नैमित्तिकद्रवत्वयोगः ।

(५)एवं सर्वत्र साधर्म्यं विपर्ययाद्वैधर्म्यं च वाच्य-

---

त्मन्यतिव्याप्त्यापत्तेः ।

एतत् (४९) (५०) (५१) (५४) (५५) सूत्रेषु व्याख्यातम् ।

(१) अत्र (४९) (५०) (१८७) (१९८) (२०१) सूत्राणि द्रष्टव्यानि ।

(२) चतुर्दशेति । ते च यथा—

स्पर्शादयोऽष्टौ वेगश्च गुरुत्वञ्च द्रवत्वकम् ।
रूपं रसस्तथा स्नेहो वारण्येते चतुर्दश ॥
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥
धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश ।

अत्र (४९) (५०) (५४) (८४) (१३९) (१५५) (१५६) (१६७) (१८७) (१९७) (१९८) (१९९) (२०१) (२०२) (२०३) (२०४) (२०६) (२०९) (२२६) (२७८) (३४७) सूत्राणि द्रष्टव्यानि ।

(३) आकाशात्मनामिति । पृथिव्यादीनान्निरासायैकदेशवृत्तीति । आकाशजीवात्मनामव्याप्यवृत्तयो ये विशेषगुणाः शब्दज्ञानादयस्तेषामाशुतरविनाशित्वस्वरूपज्ञानाय क्षणिकपदम् । अर्थस्तु स्पष्टः । स्वतन्त्रं भाष्यम् ।

(४)पञ्चेति । संख्यादिसामान्यगुणवत्त्वमित्यर्थः । अत्र (७९) (८७) (८८) (९१) (२८०) (२८१) (३०३) (५४) (५५) । सूत्राणि क्रमेण द्रष्टव्यानि ।

(५) एवमिति । अनेन न्यायेन सर्वत्र यत्साधर्म्यं तदेव विपर्ययाद्वैधर्म्यमितरस्य, यदेव च वैधर्म्यन्तद्विपर्ययात्साधर्म्यमन्यस्य वा-

मिति द्रव्यासङ्करः ।

## (४) पृथिवीनिरूपणप्रकरणम् ।

(१) इहेदानीमेकैकशो वैधर्म्यमुच्यते ।

(२) पृथिवीत्वाभिसम्बन्धात् पृथिवी । रूपरसग-

---

च्यमित्यर्थः । अत्राचार्याः—साधर्म्यविपर्ययोऽप्यन्यस्मात्साधर्म्यं वैधर्म्यविपर्ययाद्वैधर्म्यञ्च स्वयमूहित्वा वाच्यमध्यापकेन, ग्राह्यञ्च शिष्यैरिति । तद्यथा—गन्धवती पृथिवीति वैधर्म्यं वक्ष्यति । तद्विपर्ययान्निर्गन्धत्वमबादीनां साधर्म्यमुक्तम्, जलभूम्योर्गुरुत्वं रसवत्त्वञ्च साधर्म्यं तद्विपर्ययादितरेषां वैधर्म्यम्, विपर्ययास्त्वितरेषां तेजआदीनां साधर्म्यमगुरुत्वं नीरसत्वञ्च । एवमात्मानं विहाय परार्थत्वमचेतनत्वं च मनो विहायानन्तःकरणत्वमनष्टगुणवत्त्वञ्च । अम्भो विहाय निःस्नेहत्वमक्लेदत्वञ्च । तेजो विहायानुष्णत्वमदाहकत्वम् । जलज्योतिरनिलानामपाकजस्पर्शवत्त्वम् । जलज्योतिषोरपाकजरूपवत्त्वम् । दिक्कालमनसां वैशेषिकगुणविरहः । वाय्वाकाशदिक्कालमनसामतीन्द्रियत्वम् । आत्ममनसोः शरीरावच्छेदेन वृत्तिलाभः । वाय्वादीनां नीरूपत्वम् । आकाशादीनां स्पर्शशून्यत्वम् । कालादीनामभूतत्वमित्यादीत्यर्थान्तरमाहुः ।

अत्र (१३) (१४) (२१९) सूत्राणि वैधर्म्यपराणि द्रष्टव्यानि ।

(१) इहेति । अनेन पूर्वं द्वयोर्बहूनां परस्परापेक्षया वैधर्म्योक्तेरनन्तरमेकैकशस्तन्निरूपणे अवसरसङ्गतिः सूचिता ।

इदं भाष्यं स्वतन्त्रम् ।

(४) पृथिवीनिरूपणप्रकरणम् ।

(२) पृथिवीत्वेति । पृथिवीत्वं जातिविशेषस्तेनाभिमतः संबन्धः समवायस्तस्मात्, न तु एकार्थसमवायसंयुक्तसमवायादेरित्यर्थः । नन्विदं लक्षणमनुपपन्नम् स्वरूपतः सिद्धस्य पृथिवीपदार्थस्य लक्षणकरणे प्रयोजनाभावात्, अप्रसिद्धस्य चाश्रयासिद्ध्या व्यवहारेतरभेदान्यतरसाधनफलकलक्षणस्य सुतराम्, इति चेत् सत्यम् स्वरूपतोऽवगतस्यापि व्यवहारविशेषप्रतिपादनार्थं सामा-

न्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्व-गुरुत्वद्रवत्वसंस्कार १४ वती। एते च गुणविनिवेशाधिकारे रूपादयो गुणविशेषाः सिद्धाः । चाक्षुषवचनात् सप्त सङ्ख्यादयः । पतनोपदेशाद्गुरुत्वम् । अद्भिः सामान्यवचनाद् द्रवत्वम् । उत्तरकर्मवचनात् संस्कारः ।

(१)क्षितावेव गन्धः । रूपमनेकप्रकारं शुक्लादि । रसः षड्विधो मधुरादिः । गन्धो द्विविधः सुरभिरसुरभिश्च । स्पर्शोऽस्या अनुष्णाशीतत्वे सति पाकजः ।

---

न्यतः प्रसिद्धस्य विशेषावगमार्थश्च लक्षणप्रवृत्तेः । गन्धसहितचतुर्दशगुणवत्त्वं पृथिव्या इतरेभ्यो वैधर्म्यमित्याह रूपेत्यादिना । एवमग्रेपि । एते चेति । गुणविनिवेशाधिकारे—गुणानां द्रव्येषु विनिवेशो यत्र तस्मिन्द्वितीयाध्याये इत्यर्थः । तथाच—रूपरसगन्धस्पर्शवती पृथिवीत्यादि (४९) (८१) सूत्रद्वयेन रूपादिस्पर्शान्ता गुणाः पृथिव्यां सिद्धा इति भावः । एवमग्रेप्यन्वयः । चाक्षुषेति । संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणीति (१६७) सूत्रे चाक्षुषवचनमित्यर्थः । पतनेति । संयोगविभागप्रयत्नवेगाभावे गुरुत्वात्पतनमिति (१८७) पतने गुरुत्वस्य हेतोरुद्देशात् पृथिव्यां गुरुत्वं सिद्धमिति भावः । अद्भिरिति । सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यमिति(५४) अद्भिः सामान्यवचनसूत्रम् । उत्तरेति । नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं चेत्यादि (१९६) (१९७) (१९८) (१९९) सूत्रेषु इषुकर्मोपदेशेन पार्थिवद्रव्यस्योत्तरकर्मणि संस्कारः कारणतयोक्तोऽतः सोपि सिद्ध इत्यर्थः ।

(१)पृथिवीत्वव्यवस्थापकान् गुणविशेषानाकृष्य दर्शयति क्षितावेवेति ।

सा तु द्विविधा—नित्या चानित्या च। (१)परमाणुलक्षणा नित्या। कार्यलक्षणा त्वनित्या। सा च स्थैर्याद्यवयवसन्निवेशविशिष्टाऽपरजातिबहुत्वोपेता शयनासनाद्यनेकोपकारकरी च। त्रिविधं चास्याः कार्यम्—शरीरेन्द्रियविषयसंज्ञकम्। शरीरं द्विविधम्—योनिजमयोनिजं(२) च।

तत्रायोनिजमनपेक्ष्य शुक्रशोणितं (३)देवर्षीणां

---

अत्र (८०) सूत्रम्।

अनुष्णाशीतत्वे सतीति विशेषणं पृथिवीस्पर्शस्वरूपज्ञानार्थं नतु लक्षणघटकं पाकजत्वमात्रस्य लक्षणत्वात्।

अत्र (२६२) सूत्रम्।

(१)परमाणुलक्षणेति। परमाणुस्वभावपृथिवीसत्त्वे किं मानमिति चेत्, अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वान्महत्परिमाणतारतम्यवदिति अनुमानं विद्धि, यत्रेदं विश्रान्तं स परमाणुरिति भावः। कार्यलक्षणपृथिव्या अनित्यत्ववत् धर्मान्तरं प्रदर्शयन्नाह साचेति। स्थैर्यं निबिडता। आदिना शिथिलतादिर्ग्राह्यः। अवयवानां सन्निवेशोऽवयवसंयोगविभागविशेषः। स्थैर्यादिभिरवयवसंनिवेशैर्विशिष्टा अपरजातिबहुत्वोपेता घटत्वादिजातिभूयस्त्वयुक्तेत्यर्थः। भावमात्रसृष्टेरदृष्टकारित्वात्पृथ्व्या अर्थक्रियां पुरुषादृष्टोपकारिणीमाह शयनासनेति।

अत्र (१५७)।(१५८)(१५९)(१६०)(१६१)(१७६)(२७७) सूत्राणि।

(२)अयोनिजञ्चेति। शुक्रशोणितसन्निपातो योनिस्तस्माज्जातं योनिजन्तद्भिन्नमयोनिजमित्यर्थः।

अत्र (१७०) (१७४) सूत्राणि।

(३)तत्केषामित्यत आह देवर्षीणामिति। शुक्रशोणिताद्युपादानकारणाभावात्कथं कार्यमत आह धर्मविशेषसहितेभ्य इति। तथाच

शरीरं धर्मविशेषसहितेभ्योऽणुभ्यो जायते । क्षुद्रजन्तूनां यातनाशरीराण्यधर्मविशेषसहितेभ्योऽणुभ्यो जायन्ते । शुक्रशोणितसन्निपातजं योनिजम् । तद्द्विविधं—जरायुजमण्डजं च । मानुषपशुमृगाणां जरायुजम् । पक्षिसरीसृपाणामण्डजम् ।

इन्द्रियं गन्धव्यञ्जकं सर्वप्राणिनां जलाद्यनभिभूतैः पार्थिवावयवैरारब्धं(१) घ्राणम् ।

विषयस्तु द्व्यणुकादिक्रमेणारब्धस्त्रिविधो—मृत्पाषाणस्थावरलक्षणः । तत्र भूप्रदेशाः—प्राकारेष्टकादयो मृत्प्रकाराः । पाषाणा—उपलमणिवज्रादयः । स्थावरास्तृणौषधिवृक्षलतावतानवनस्पतय इति ।

---

परमाणव एव देहोत्पादे कारणं न शुक्रशोणितसङ्घातः क्रियाविभागादिन्यायेन तयोर्विनाशे सत्युत्पन्नपाकजैः परमाणुभिरारम्भात् तेषाञ्च न कश्चिद्विशेषः पार्थिवत्वाविशेषात् जातिनियमे त्वदृष्टमेव हेतुरिति न धर्मविशेषानुगृहीताणुभ्योऽयोनिजदेहोत्पत्तिरनुपपन्ना इति कन्दलीकारः । अधर्मविशेषसहितेभ्य इति । इदमिहलोकप्रसिद्धमेवेति भावः । मृगाणामिति । उपलक्षणञ्चतुष्पदमात्राणाम । पक्षीति । इदमपि मत्स्याद्युपलक्षकम् ।

(१७६) सूत्रात् (१८०) सूत्रपर्यन्तमयोनिजशरीरे प्रमाणसूत्राणि ।

(१)आरब्धमिति । विशिष्टोत्पादाद्घ्राणमेव गन्धव्यञ्जकं नान्यदित्यर्थः । एवमग्रेऽपि । वृक्षेति । सफलपुष्पा वृक्षाः । लताः प्रसिद्धाः । अवताना विटपा केतक्यादयः । वनस्पतय औदुम्बरादयः ।

अत्र (३२५) (१७०) सूत्रे ।

## (५) जलनिरूपणप्रकरणम् ।

(१)अप्त्वाभिसम्बन्धादापः । रूपरसस्पर्शद्रवत्व-स्नेहसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वसंस्कार १४वत्यः । पूर्ववदेषां सिद्धिः । शुक्लमधुरशीता एव रूपरसस्पर्शाः । स्नेहोऽम्भस्येव सांसिद्धिकं च द्रवत्वम् ।

ताश्च पूर्ववद् द्विविधाः नित्यानित्यभावात् । तासां तु कार्यं त्रिविधं—शरीरेन्द्रियविषयसञ्ज्ञकम् । तत्र शरीरमयोनिजमेव वरुणलोके (२)पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् ।

---

(५) जलनिरूपणम् ।

(१) आप इति । अत्रापि पूर्ववत् लक्षणार्थोऽवसेयः एवमग्रे । पूर्ववदिति । सूत्रकारवचनेनैषां सिद्धिः पृथिवीवद्बोध्येत्यर्थः । तथाच सूत्रं रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाश्चेति(५०) । एवं चाक्षुषवचनात्संख्यादयोऽपि अत्र ग्राह्याः । पतनोपदेशोत्तरकर्मवचनाद्गुरुत्वसंस्कारौ एवमग्रे । एवं गुणवत्त्वेन द्रव्यत्वे सिद्धे स्वादिव्यवहृत्तिहेतून् गुणानाह शुक्लेति । एवमग्रे ।

अत्र (५०) (८४) (१६८) (१९७) (२०१) (२०२) (२०३) (२०४) (२०६) (२०९) सूत्राणि ।

(२) जलस्वभावत्वाविशेषादपां जलबुद्बुदप्रायं शरीरं कथं व्यवहारोचितोपभोगसमर्थं भवेदत आह पार्थिवावयवेति । तथा च अवयवानां निमित्तकारणत्वेन द्रवत्वप्रतिरोधाद्बुद्बुदप्रायं शरीरन्तेषां न भवतीत्यर्थः । एवमग्रेपीति ।

अत्र (१५७)सूत्रात् (१६१) सूत्रान्तं, (१७०) (१७५) (१७६) (१७७) (१७८) (१७९) (१८०) (२७६) (२७७) सूत्राणि च द्रष्टव्यानि ।

इन्द्रियं सर्वप्राणिनां रसव्यञ्जकं विजात्यनभिभूतैर्जलावयवैरारब्धं रसनम् । विषयस्तु सरित्समुद्रहिमकरकादिः(१) ।

## (६) तेजोनिरूपणप्रकरणम् ।

तेजस्त्वाभिसम्बन्धात् तेजः । रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कार-११वत् । (२)पूर्ववदेषां सिद्धिः । तत्र शुक्लं भास्वरं च रूपम् । उष्ण एव स्पर्शः ।

तदपि द्विविधमणुकार्यभावात् । कार्यं च शरीरादित्रयम् । शरीरमयोनिजमेवादित्यलोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् ।

इन्द्रियं सर्वप्राणिनां रूपव्यञ्जकमन्यावयवानभिभूतैस्तेजोवयवैरारब्धं चक्षुः ।

विषयसञ्ज्ञकं चतुर्विधम्—भौमं दिव्यमुदर्यमाकरजञ्च । तत्र भौमं काष्ठेन्धनप्रभवमूर्ध्वज्वलनस्वभावं पचनदहनस्वेदनादिसमर्थम् । दिव्यमबिन्धनं सौरविद्युदादि ।

---

(१) अत्र (३२६) (२०६) (१७०) सूत्राणि ।

(६) तेजोनिरूपणम् ।

(२) पूर्ववदिति । तेजो रूपस्पर्शवदिति(५१) सूत्रम् । भास्वरमिति । कदाचिल्लोहितादिप्रतीतिरौपाधिकी तद्धीनस्य शुक्लताप्रतीतेः प्रदीपप्रभाचान्द्रसौराद्यालोकवादित्यर्थः । उष्ण एवेति । एवकारेण पृथिव्युदकवायुभ्यो वैधर्म्योक्तिः ।

भुक्तस्याहारस्य रसादिपरिणामार्थमुदर्यम् । आकरजं च सुवर्णादि(१) । तत्र संयुक्तसमवायाद्रसाद्युपलब्धिरिति ।

(७) वायुनिरूपणप्रकरणम् ।

(२)वायुत्वाभिसम्बन्धाद्वायुः । स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारवान् ।

---

अत्र (५५) (८३) (१६७) (१९७) (२०६) सूत्राणि ।

(१)सुवर्णादीति । यदि सुवर्णन्तैजसन्तर्हि कथं तत्र गन्धरसाद्युपलब्धिरत आह तत्रेति । प्राणिनामदृष्टवशात्तत्र पार्थिवभागोपष्टम्भादनुद्भूतरूपस्पर्शं पिण्डीभावयोग्यं सुवर्णाद्यारभ्यते तथाच पार्थिवद्रव्यसमवेतानां गन्धादीनामुपलब्धिरिति । सुवर्णस्य तैजसत्वस्थापनप्रकारस्तु—रूपवत्तया त्रितयान्तर्भूतमिदं न जलं सांसिद्धिकद्रवत्वशैत्ययोरभावात्स्नेहाविनाभूतद्रव्यान्तरासङ्ग्रहाच्च । न च नैमित्तिकद्रवत्ववत्त्वात्पार्थिवम्, विपक्षे बाधकाभावात् । न च निमित्ताद् द्रव्यान्तरे द्रवत्वोत्पत्तिं किञ्चिद्रुणद्धि । न चोर्ध्वज्वलनादिवज्जातिनियतमेतत्, एकदेशवृत्तित्वात् । न च तद्विशेषनियतं, सर्पिरादीनां भिन्नजातीयत्वात् । तस्मात्तत्तद्भोगहेतुनियतादृष्टसहकार्यग्निसंयोगजन्यं द्रवत्वमुत्पद्यमानं कम्पवन्न पार्थिवत्वादिव्यवस्थाहेतुः । एवम् असति विरोध्यन्तरे पार्थिवरूपपरावृत्तिरग्निसंयोगेन दृश्यते नतु ध्मायमानसुवर्णादेरिति जलवदपार्थिवत्वमवधार्यते । प्रयोगश्च सुवर्णं न पार्थिवम् अत्यन्तानलसंयोगेऽप्यपरावर्तमानरूपवत्त्वाज्जलवत् । तैजसं चैतत् पार्थिवाप्यान्यत्वे सति रूपवत्त्वात्सौर्यालोकवदित्यादिः किरणावल्यादौ विस्तरेण द्रष्टव्यः । तदपीत्यारभ्य उपलब्धिरित्यन्तं (१५७) सूत्रात् (१६१) सूत्रान्तं, (२७६) (२७७) (१७०) (१८६) सूत्राणि च क्रमशो व्याख्यातानि ।

(७)वायुनिरूपणप्रकरणम् ।

(२) प्रत्यक्षं पृथिव्यादित्रयं व्याख्यायाप्रत्यक्षद्रव्यव्याख्यावसरे

स्पर्शोऽस्यानुष्णाशीतत्वे सत्यपाकजः, गुणविनिवेशात् सिद्धः । अरूपिष्वचाक्षुषवचनात् सप्त संख्यादयः । तृणकर्मवचनात् संस्कारः ।

(१)स चायं द्विविधोऽणुकार्यभावात् । तत्र कार्यलक्षणश्चतुर्विधः—शरीरमिन्द्रियं विषयः प्राण इति ।

तत्रायोनिजमेव शरीरं मरुतां लोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम्(२) ।

इन्द्रियं सर्वप्राणिनां स्पर्शोपलम्भकं पृथिव्याद्यनभिभूतैर्वाय्ववयवै(३)रारब्धं सर्वशरीरव्यापि त्वगिन्द्रियम् ।

---

नित्यानित्योभयस्वभावद्रव्यनिरूपणस्य प्रकृतत्वाद्वायुं व्याचष्टे वायुत्वेति । व्याख्या पूर्ववत् । गुणविनिवेशादिति,—"स्पर्शवान् वायुः" इति (५२) सूत्रं सूचयति । चाक्षुषेति । अरूपिष्वचाक्षुषाणि(१६८) सूत्रं । संख्यादीनीत्यर्थः । तृणे कर्म वायुसंयोगा(१९४)दित्येतैः,—सूत्रैः स्पर्शादयः संस्कारान्ता वायौ सिद्धा इत्यर्थः ।

(१)सचेति । चोप्यर्थे । तथाच न केवलं पृथिव्यादयो द्विविधाः किन्त्वयमपीत्यर्थः ।

अत्र (१५७) सूत्रात् (१६१) सूत्रपर्यन्तं, (५९) (६०) (६१) (१७०) (२७६) (२७७) सूत्राणि च द्रष्टव्यानि ।

(२)अत्र (१७५) सूत्रात् (१८०) पर्यन्तं सूत्राणि ।

(३)आरब्धमिति । ननु त्वगिन्द्रियस्य वायवीयत्वे किं मानमिति चेत्, इदं वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वादङ्गसङ्गिसलिलशैत्याभिव्यञ्जकसमीरणवदिति अनुमानमेव विद्धि । अत्र (३२६) सूत्रम् ।

विषयस्तूपलभ्य(१)मानस्पर्शाधिष्ठानभूतः स्पर्शशब्दधृतिकम्पलिङ्गस्तिर्यग्गमनस्वभावो मेघादिप्रेरणधारणादिसमर्थः । (२)तस्याप्रत्यक्षस्यापि नानात्वं सम्मूर्च्छनेनानुमीयते । सम्मूर्च्छनं पुनः समानज-

---

(१)उपलभ्यमानेति। प्रत्यक्षस्पर्शाश्रयो वायुर्न स्वतोऽध्यक्ष इति भावः। वायुर्वातीति स्पार्शनप्रत्यक्षात्स प्रत्यक्ष इत्यपरे। तन्न स्पर्शस्यैव प्रत्यक्षाद्वायुर्वातीति ज्ञानन्त्वभ्यासपाटवातिशयाद्व्याप्त्याद्यनपेक्षं स्पार्शनमनुमानमेव चक्षुषा वृक्षादिगतक्रियोपलब्धिवत्। स्पार्शनप्रत्यक्षो वायुरुपलभ्यमानस्पर्शाधिष्ठानत्वात् घटवदित्यनुमानं तु शशादौ पशुत्वेन शृङ्गानुमानवदाश्रयासिद्धम् । वायुर्न स्पार्शनप्रत्यक्षविषयो चाक्षुषत्वाभावात्, यन्नैवं तन्नैवं घटवदिति सत्प्रतिपक्षितश्चेत्यसाधकमेवेति न वायुः प्रत्यक्ष इति सिद्धम । लिङ्ग इति । अत्रायं प्रयोगः—योऽयं रूपवद्द्रव्यासमवेतः स्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीस्पर्शवत् १ असति रूपवद्द्रव्याभिघाते योऽयं पर्णादिशब्दसमूहः स स्पर्शवद्वेगवद्द्रव्यसंयोगजः अविभज्यमानावयवद्रव्यसम्बन्धित्वे सति शब्दसमूहत्वात् दण्डाभिहतभेरीशब्दसमूहवत् २ नभसि तृणादिधृतिः स्पर्शवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवत् ३ वृक्षादिकम्प उक्तविधद्रव्यसंयोगजो विलक्षणकम्पत्वात् नदीपूराहतकाशादिकम्पवत् ४,—इत्येतैरनुमानैस्तादृशस्पर्शादीनां पृथिव्याद्यनाधेयतयाऽतिरिक्ततदाश्रयद्रव्यस्य वायोः सिद्धिरित्यर्थः। न चैतैरनुमानैः प्रतिलिङ्गन्द्रव्यान्तरासिद्धिः कुतो न स्यादिति वाच्यम स्पर्शानुमितद्रव्यकार्यत्वेन शब्दादीनामुपपत्तौ द्रव्यान्तरकल्पनावैयर्थ्यात् । मेघादीति । आदिना विमानयानपात्रपांसुपटलादिपरिग्रहः । धारणादीत्यत्र स्पर्शाभिव्यक्तिदीपनिर्वापणादिरादिपदार्थो बोध्यः ।

अत्र (५७) (५८) (६४) सूत्राणि ।

(२)अनुमीयमानेषु आकाशादिषु एकानेकत्वोपलब्ध्या संशयव्युदासायाह तस्याप्रत्यक्षस्य नानात्वमिति। अनुमीयत इति। तृणा-

वयोर्वाय्वोर्विरुद्धदिक्क्रिययोः सन्निपातः । सोऽपि सावयविनोर्वाय्वोरूर्ध्वगमनेनानुमीयते तदपि तृणादिगमनेनेति । प्राणोऽन्तःशरीरे रसमलधातूनां (१)प्रेरणादिहेतुरेकः सन् क्रियाभेदादपानादिसञ्ज्ञां लभते ।

## (८)सृष्टिसंहारप्रकरणम् ।

(२)इहेदानीं चतुर्णां महाभूतानां सृष्टिसंहारविधिरुच्यते । ब्राह्मेण मानेन वर्षशतान्ते वर्तमानस्य

---

दूयूर्ध्वगमनं स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यम् अनूर्ध्वगमनशीलस्य प्रयत्नाद्यसम्भवे सत्यूर्ध्वगमनत्वात् ज्वलदग्निप्रेरिततूलाद्यूर्ध्वगमनवदित्यनुमितेन तृणाद्यूर्ध्वगमनेन वायुरूर्ध्वगतिमान् तृणाद्यूर्ध्वगमनासमवायिकारणसंयोगाश्रयत्वात् तदसमवायिकारणसंयोगाश्रयज्वलदग्निवत् इति वायोरूर्ध्वगतेः सिद्धौ वाय्वोरूर्ध्वगमनमन्योन्याहतिपूर्वकं प्रयत्नाद्यसम्भवे ऊर्ध्वगतिमत्त्वात् परस्पराभिहतनदीजलपूरवत्, इत्यनुमानेनान्योन्यं वायूनां सन्निपातेन-संमूर्च्छनेन वायोर्नानात्वं सिद्धमिति भावः ।

अत्र (१६३) (६२) (६३) सूत्राणि ।

(१)प्रेरणादीति । धारणविकारौ आदिपदग्राह्यौ । क्रियेति । मुखनासाभ्यां निष्क्रमणप्रवेशनाभ्यां प्राणः, अधोनयनादपानः, समंनयनात्समानः, ऊर्ध्वं नयनादुदानः, नाडीषु विततनात् व्यान,-इति क्रियाभेदात्संज्ञाभेदा भवन्ति न तु संज्ञाभेदात् संज्ञी भिद्यत इति भावः ।

स्वतन्त्रमिदम्भाष्यम् ।

(८)सृष्टिसंहारप्रकरणम् ।

(२)ग्रन्थविस्तारभयात् समानन्यायेनैकत्र पृथिव्याद्युत्पत्तिविनाशौ निरूपयति चतुर्णामिति । पृथिव्यादयः शरीरादीनारभमाणा अदृष्टमपेक्षन्त एव तच्च केनाप्यधिष्ठितमेव वृत्तिं लभते अनधि-

ब्रह्मणोऽपवर्गकाले संसारखिन्नानां सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य संजिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतानामदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः, तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाशः, ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते धर्माधर्मसंस्कारानुविद्धा आत्मानस्तावन्तमेव कालम् ।

---

ष्ठानेऽचैतन्यानुपपत्तिः प्रवृत्त्यनुपपत्तिर्वा अचेतनप्रवृत्तेः पराधिष्ठानकार्यत्वनियमात्, । अधिष्ठातृत्वं च नास्मदादीनामनभिज्ञत्वात् नेतरस्य प्रयोजनाभावादिति व्यग्रान् अन्तेवासिनः समाश्वासयन्नाह चतुर्णामिति इत्याचार्याः । विधिरिति । द्व्यणुकादिक्रमेण सृष्टिः क्रियाविभागादिन्यायेनापरमाण्वन्तः प्रलयश्च कथ्यत इत्यर्थः । ब्राह्मेणेति ।

मानवस्य तु वर्षस्य दैवमेकं दिनं भवेत् ।
तद्द्वादशसहस्राणि चतुर्युगमुदीरितम् ॥
चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते ।
रात्रिश्चैतावती तस्य ताभ्यां पक्षादिकल्पना ॥

इति ब्राह्ममानम् । उपनिबन्धकानामिति । आरम्भकाणामित्यर्थः । सर्वात्मेति । आत्मगतानामात्मसमवेतानाम् अदृष्टानां वृत्तिनिरोधे शक्तिप्रतिबन्धेऽनागतशरीराद्यनुत्पत्तिः, उत्पन्नसंहारार्थं च महेश्वरसञ्जिहीर्षात्माणुसंयोगेभ्यः कर्माणि तेभ्यश्च शरीरेन्द्रियकारणीभूताणुषु विभागास्ततः पूर्वसंयोगनिवृत्तौ शरीरे-

(१)ततः पुनः प्राणिनां भोगभूतये महेश्वरसिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिप्रक्रमेण महान् वायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति ।

तदनन्तरं (२)तस्मिन्नेव वायावाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति ।

---

न्द्रियाणां द्व्यणुकादिनाशक्रमेण यावत्परमाणुर्विनाशो भवतीत्यर्थः । उत्तरस्मिन्निति । जले तिष्ठति पृथिव्याः, तेजसि तिष्ठति जलस्येत्येवमुत्तरोत्तरस्मिन् विद्यमाने पूर्वपूर्वविनाश इति भावः । तावन्तमिति । ब्रह्मशतवर्षपर्यन्तमित्यर्थः । आत्मान इति दिगाद्युपलक्षणं तेषामपि नित्यत्वात् ।

अत्र (६६) (६७) (१९९) (२१०) (२९१) सूत्राणि पृथिवीकर्महेतुबोधकानि विभागस्य कर्मादिजन्यत्वप्रतिपादकानि च द्रष्टव्यानि ।

(१)अर्थप्रतिपादनमात्रस्य विवक्षितत्वात्पूर्वं वक्तुमुचितस्यापि सर्गस्य पश्चान्निर्देशमाह ततः पुनरिति । सृष्टिसंहारयोरनादित्वप्रथमतां प्रतिपादयितुम्पूर्वं संहारप्रक्रमनिर्देश इति आचार्याः । सृष्टिसंहारयोरनादित्वेत्याचार्याशयः । भूतये-निष्पत्तये । वृत्तिलब्धाः-लब्धवृत्तयो ये अदृष्टविशेषास्तदपेक्षेभ्य आत्माणुसंयोगेभ्यः क्रियादिन्यायेन द्व्यणुकादिक्रमेणोत्पन्नो वायुर्नभसि भृशं कम्पमान आस्ते, द्रव्यान्तरानुत्पत्तेरप्रतिहतवेगत्वात् पवनजातिनियतत्वाच्च तिर्यग्गमनस्वभावस्येति शेषः ।

अत्र (२१०) (२९०) (३६३) सूत्राणि ।

(२)तस्मिन्नेवेति । स्पर्शवद्वेगवत्तया गुरुत्वप्रतिबन्धकत्वादाधारभूत इत्यर्थः । पोप्लूयमानः-प्रतिबन्धकाभावात् सर्वत्र प्लवमान इति

तदनन्तरं तस्मिन्नेव पार्थिवेभ्यः परमाणुभ्यो महापृथिवी (१)संहताऽवतिष्ठते। तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिप्रक्रमेणोत्पन्नो महांस्तेजोराशिः केनाचिदनभिभूतत्वा(२)द्देदीप्यमानस्तिष्ठति।

(३)एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्याभिध्यानमात्रात् तैजसेभ्योऽणुभ्यः पार्थिवपरमाणुसहितेभ्यो महदण्डमारभ्यते। तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते। स च महेश्वरेण विनियुक्तो ब्रह्माऽतिशयज्ञानवैराग्यैश्वर्यसम्पन्नः प्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानभोगायुषः सुतान् प्रजापतीन् मानसान् मनुदेवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो व-

भावः।

(१)संहता—निबिडावयवा अविशीर्णतयेत्यर्थः। अत्र (२९०) (३६३) सूत्रे।

(२) देदीप्यमानो—अनभिभवादतिशयेन दीप्यमान इति भावः। अत्र (१९९) (३६३) (२९०) (२१०) सूत्राणि द्रष्टव्यानि।

(३) एवमिति। अभिध्यानेति। अभिध्यानञ्च सङ्कल्पस्तन्मात्रात् न तु कुलालादिवत् व्यापारात्कायस्येत्यर्थः। अण्डमिति। पार्थिवाणुसाहित्येन तैजसपरमाणूत्पन्नत्वादस्य हिरण्मयत्वं विवक्षितम्। विनियुङ्क्त इति। महेश्वर इति शेषः। विदित्वेति। एतावदस्य कर्मफलमिति ज्ञात्वेत्यर्थः। सुतानिति। अस्य प्रत्येकमन्वयः। मानसान् प्रजापतीन्दक्षादीन्, मनून् स्वायम्भुवादीन्, देवानादित्यादीन्, ऋषीन् गौतमादीन्, पितॄन् कव्यवा-

र्णानन्यानि चोच्चावचानि च सृष्ट्वाऽऽशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयतीति ।

(९)आकाशप्रकरणम् ।

(१)आकाशकालदिशामेकैकत्वादपरजात्यभावे पारिभाषिक्यस्तिस्रः सञ्ज्ञा भवन्ति । आकाशः कालो दिगिति ।

तत्राकाशस्य गुणाः शब्दसंख्यापरिमाणपृथक्त्व-

---

इनादीन्, गणान् कूष्माण्डादीन्, गणशब्दस्य प्रत्येकं वाऽन्वयः । आशयेति । फलज्ञानपर्यन्तमाशेरत इत्याशयाः कर्मज्ञानवासनारूपाः तदनुरूपैर्धर्मज्ञानादिभिः संयोजयति मात्रयाऽप्यन्यथा न करोतीत्यर्थः । धर्मादिभिरधर्मादीनामपि ग्रहणमत्र बोध्यम् । तदेवं प्रबन्धेन परमेश्वराधिष्ठितैः पृथिव्यादिपरमाणुभिर्विश्वमारभ्यत इति वदताऽन्तेवासिनां सर्वे आक्षेपाः परिहृतास्तथाहि अदृष्टापेक्षया सृष्टेर्विचित्रता, मानससृष्ट्याऽऽद्यव्यवहारः परमेश्वराधिष्ठानेनाचैतन्यप्रवृत्तिचैतन्यप्रवृत्तिनियमौ चेति । ननु ईश्वरसद्भावे सर्वमिदं सम्भवेत्तत्रैव किं मानमिति चेत् शरीरानपेक्षोत्पत्तिमद् बुद्धिपूर्वकं कारणवत्त्वात्, यत्कारणवत्तद्बुद्धिपूर्वकं यथा रथः, तथा चैतत्तस्माद् बुद्धिपूर्वकमिति पञ्चावयवोपपन्नमनुमानमागमश्चेति । अत्र किरणावल्यादौ विस्तरो द्रष्टव्यः ।

स्वतन्त्रमिदम्भाष्यम् ।

(९ आकाशप्रकरणम् ।

(१)संक्षेपत आकाशादित्रयमेकग्रन्थेनाहाकाशेति । अपरजात्यभाव इति । व्यक्त्यभेद आकाशत्वादिजातिबाधक इत्यर्थः । संज्ञा इति । शृङ्गग्राहिकया निमित्तं विना साङ्केतिकं नाम तेषामिति भावः । तेष्वाकाशे द्रव्यत्वव्यवस्थापकगुणान्प्रदर्शयति तत्रेति ।

अत्र (७५) (७७) (७८) (७९) (२७८) सूत्राणि ।

संयोगाद्विभागाः । (१)शब्दः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादयावद्द्रव्यभावित्वादाश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः । बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादात्मन्यसमवायादहङ्कारेण विभक्तग्रहणाच्च नात्मगु-

---

(१)नन्वाकाशसद्भावे किं प्रमाणम्? इहायं पक्षी प्राप्त इति नियतदेशाधिकरणप्रत्यक्षप्रतीतिरेव मानमिति, न युक्तमरूपद्रव्यस्य चाक्षुषत्वाभावात् अधिकरणप्रत्ययस्तु विततालोकमण्डलं विना न किञ्चिद्विषयीकरोतीति तत्सद्भावे परिशेषानुमानमुपन्यस्यञ् शब्दस्यान्यद्रव्यगुणत्वं प्रतिषेधति शब्द इति । अत्रायं प्रयोगः—शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात् सुखवत् । परमाणुरूपादौ व्यभिचारवारणाय सत्यन्तम् । पिठरपाकाभ्युपगमान्न तद्विशेषगुणैर्विरोधः । हेत्वन्तरमयावद्द्रव्यभावित्वादिति । यावद्द्रव्यं शब्दो न भवति शङ्खाद्याश्रयसत्त्वे एव तद्विनाशात् । अत्रापि परमाणुरूपादौ व्यभिचारनिरासार्थं प्रत्यक्षत्वे सतीत्यनुवर्तनीयम् । पूर्ववत्प्रयोगो द्रष्टव्यः । अनयोस्तर्कमाहाश्रयादन्यत्रोपलब्धेरिति । आश्रयाभिमताच्छङ्खादेरन्यत्र कर्णशष्कुल्यवच्छिन्ने नभस्युपलब्धेः । यदि शङ्खाश्रयः शब्दः स्यात् तत्पिधाने नोपलभ्येत कर्णविवरापिधान इव सर्वदैवाप्राप्तेः, अप्राप्तग्रहणे च सर्वत्र सर्वदा सर्वैः सर्वशब्दोपलब्धिप्रसङ्ग इत्याचार्याः । हेत्वन्तरमाह आश्रयादन्यत्रोपलब्धेरिति कन्दलीकाराः । नात्मगुण इति । शब्दो नात्मगुणः बाह्येन्द्रियप्रत्यक्षाद्रूपवत् । न च स्वरूपासिद्धोऽयमिति वाच्यम् श्रोत्रं बाह्येन्द्रियं प्रतिनियतविषयत्वाच्चक्षुर्वदिति तन्निरासात् । हेत्वन्तरमाह आत्मान्तरग्राह्यत्वादिति । आत्मगुणास्तु ग्राहकस्था एव गृह्यन्ते यथा सुखादयः नैवं शब्दः । इदं कुतः? अत आह आत्मन्यसमवायात्—ग्राहकासमवायादित्यर्थः । इदमप्यलिङ्गमत आहाहङ्कारेणेत्याचार्याः । रूपादिवच्छब्दो नात्मगुण आत्मन्यसमवायादिति हेत्वन्तरमिति कन्दली । अहङ्कारेणेति । विभक्तस्य—व्यधिकर-

णः । श्रोत्रग्राह्यत्वाद्वैशेषिकगुणभावाच्च न दिक्कालमनसाम् । परिशेषाद् गुणो भूत्वा आकाशस्याधिगमे लिङ्गम् ।

(१)शब्दलिङ्गाविशेषादेकत्वं सिद्धम् । तदनुविधानादेकपृथक्त्वम् । विभववचनात् परममहत्परिमाणम् । शब्दकारणत्ववचनात् संयोगविभागाविति । अतो गुणवत्त्वादनाश्रितत्वाच्च द्रव्यम् । समानासमानजातीयकारणाभावाच्च नित्यम्, सर्वप्राणिनां च शब्दोपलब्धौ

---

णस्य ग्रहणाच्चेत्यर्थः, य आत्मगुणः सोऽहङ्कारसमानाधिकरणो गृह्यते यथा सुख्यहमिति नैवं शब्दस्य ग्रहणम् अतो नात्मगुण इति भावः । श्रोत्रेति । शब्दो न दिक्कालमनोगुणः श्रोत्रग्राह्यत्वात् । अत्र श्रोत्रेत्युपलक्षणं ग्राह्यत्वादित्येव हेतुर्गन्धवदिति दृष्टान्तः । एवं शब्दो न दिक्कालमनोगुणः विशेषगुणभावात्सुखवदिति प्रयोगः परिशेषादिति । शब्दो द्रव्यसमवेतो गुणत्वाद्रूपवदित्यनेन द्रव्यसमवेतत्वे सिद्धे पूर्वोक्तानुमानैः क्लृप्तद्रव्यानाश्रितत्वे च सिद्धे शब्द आकाशद्रव्यगुणः गुणत्वे सति पृथिव्याद्यष्टद्रव्यानाश्रितत्वादित्यनेन परिशेषानुमानेनाकाशसिद्धिरिति भावः ।

अत्र (७२) (७३) (७४) सूत्राणि ।

(१)शब्दलिङ्गेति । अत्र परिशेषाल्लिङ्गमाकाशस्येत्यादि (७५) (७७) (७८)सूत्राणि । तथाच सर्वत्राविशिष्टस्सन् एकः शब्द आकाशलिङ्गमिति आकाशमप्येकमित्यर्थः । तदन्विति । अत्र (७९) सूत्रम् । विभवेति । विभवान्महानाकाश इति (२७८) सूत्रम् । शब्देति । संयोगाद्विभागाच्छब्दाच्च शब्दस्य निष्पत्तिरिति (२१०) सूत्रेणाकाशगुणं शब्दं प्रति संयोगविभागयोः कारणत्वमुक्तं तेनाकाशे तयोः सिद्धिरित्यर्थः । गुणवत्त्वादित्यत्र घटोऽनाश्रितत्वादित्यत्र च परमाणुर्दृष्टान्तो बोध्यः । समानेति । समानजातीयं समवायिकारणमसमानजातीयमसमवायिकारणं निष्प्रत्य-

निमित्तं श्रोत्रभावेन । श्रोत्रं पुनः श्रवणविवरसञ्ज्ञको नभोदेशः शब्दनिमित्तोपभोगप्रापकधर्माधर्मोपनिबद्धस्तस्य च नित्यत्वे सत्युपनिबन्धकवैकल्याद्बाधिर्यमिति ॥

## (१०)कालप्रकरणम् ।

(१) कालः परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गम् । तेषा विषयेषु पूर्वप्रत्ययविलक्षणा-

---

कारणं च तेषामभावान्नित्यासत्यर्थः । श्रोत्रभावेनेति । अन्यथा सर्वेषां सर्वशब्दोपलब्धिराकाशस्य सर्वत्राविशेषात्स्यादिति । उपनिबद्ध इति । तथा चाकाशस्य व्यापकत्वेऽपि न सर्वत्र शब्दोपलब्धिः प्राण्यदृष्टवशेन कर्णशष्कुल्यवच्छिन्नस्यैव तस्येन्द्रियत्वात् शरीरावच्छेदेनात्मनो ज्ञातृत्वादित्यभिप्रायः । उपनिबन्धकमदृष्टन्तदभावाद्बाधिरस्य न शब्दोपलब्धिरित्यर्थः ।

(१०)कालप्रकरणम् ।

अत्र (७६) (१००) सूत्रे द्रष्टव्ये ।

(१)काललक्षणमाह काल इति । परापरेति भावप्रधानो निर्देशः । तयोर्व्यतिकरः दिक्कृतपरत्वापरत्वविपरीते परत्वापरत्वे इत्यर्थः । ते यौगपद्यादिप्रत्ययाश्च काललिङ्गमिति भावः । अत्रायं प्रयोगप्रकारः—स्थविरादौ परत्वं सूर्यपरिस्पन्दप्रकर्षबुद्धिजन्यं तदनुविधायित्वात्पटकुविन्दवत् । ते च सूर्यपरिस्पन्दाः स्थविरदेहप्रत्यासत्तिमपेक्षन्ते स्वभावतोऽप्रत्यासन्नत्वे सति तदवच्छेदकत्वात् पटावच्छेदकमहारजनरागवत् । सा च प्रत्यासत्तिः द्रव्यकृताऽन्यप्रकारासम्भवे सति प्रत्यासत्तित्वात् पटे महारजनप्रत्यासत्तिवत् तदभावे सन्निकर्षविप्रकर्षयोरसम्भवेनापेक्षणीयानुपपत्तौ परत्वाद्युत्पत्त्या तद्व्यवहारविलोपः स्यात् । तच्च द्रव्यं कालाख्यमितरभिन्नं विशिष्टपरत्वाद्यनुमेयत्वाद्यन्नैवं तन्नैवं यथा पृथिवीति । एतेनापरत्वादि लिङ्गतया व्याख्यातं बोध्यम् । ननु कालस्याप्रत्यक्षतया तेन सह परादिप्रत्ययानां व्याप्त्यभावात् कुतो लिङ्गत्वमत आह तेषामिति ।

नामुत्पत्तावन्यनिमित्ताभावाद्यदत्र निमित्तं स कालः । सर्वकार्याणां चोत्पत्तिस्थितिविनाशहेतुस्तद्व्यपदेशात् । क्षणलवनिमेषकाष्ठाकलामुहूर्तयामाहोरात्रार्धमासमासर्त्वयनसंवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुः ।

(१)तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः ५ । काललिङ्गाविशेषादेकत्वं सिद्धम् । तदनुविधानात् पृथक्त्वम् । कारणे काल इतिवचनात् परममहत्परिमाणम् । कारणपरत्वादिवचनात् संयोगः । तद्विनाशकत्वाद्विभाग इति । तस्या(२)काशवद्द्रव्यत्वनित्यत्वे सिद्धे

---

तेषां युगपदादिप्रत्ययानां विषयेषु द्रव्यादिषु पूर्वप्रत्ययविलक्षणानां द्रव्यादिप्रत्ययविलक्षणानामुत्पत्तौ अन्यस्य निमित्तस्याभावात्, कालं विनेति शेषः । द्रव्यादिषु युगपज्जायन्त इत्यादिप्रत्ययानां निमित्तं विनोत्पत्त्यभावात्तन्निमित्तं काल इति भावः । तद्व्यपदेशादिति । तेन कालेनोत्पत्त्यादीनां व्यपदेशात् उत्पत्तिकालो विनाशकाल-इत्यादिव्यवहारात् कालस्य तत्र हेतुतेत्यर्थः । अत्र (८७ सूत्रम्)

(१)आकाशादिव्यावृत्तिहेतुविशेषगुणाभावमाविष्कर्तुं तस्य सामान्यगुणानाह तस्येति । काललिङ्गेति । काललिङ्गानां युगपदादिप्रत्ययानामविशेषादेकत्वं कालस्येत्यर्थः । कारणे काल इति । कारणे कालाख्या इति (८८) सूत्रम् । अनेनास्य व्यापकत्वं लभ्यते । कारणपरत्वादिति । कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे इति (३०२) सूत्रात्तस्य संयोग इत्यर्थः । अत्र (८७) (७९) सूत्राणि च द्रष्टव्यानि ।

(२)आकाशवदिति । आकाशवद्गुणवत्त्वादनाश्रितत्वाच्च द्रव्यत्वनित्यत्वे कालस्याप्यूह्ये इति भावः । ननु कालस्यैकत्वे कथमतीतादिव्यवहार अत आह काललिङ्गेति । काललिङ्गं परापरादिप्रत्यया-

काललिङ्गाविशेषादञ्जसैकत्वेऽपि सर्वकार्याणामारम्भक्रियाभिनिर्वृत्तिस्थितिनिरोधोपाधिभेदान्मणिवत्पाचकवद्वा नानात्वोपचार इति ॥

(११)दिक्प्रकरणम् ।

दिक् (१)पूर्वापरादिप्रत्ययलिङ्गा । मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येष्वेतस्मादिदं पूर्वेण दक्षिणेन पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणापरेण अपरोत्तरेण उत्तरपूर्वेण चाधस्तादुपरिष्टाच्चेति दश प्रत्यया यतो भवन्ति सा दिगिति, अन्यनिमित्तासम्भवात् ।

---

स्तेषामञ्जसा मुख्यया वृत्त्यैकत्वेपि कालस्य नानात्वोपचारान्नानात्वव्यपदेश इति भावः । कुतः ? इत्यत आह सर्वेति । आरम्भ उपक्रमः । अभिनिर्वृत्तिः परिसमाप्तिः । स्थितिः स्वरूपावस्थानम् । निरोधो विनाशः । अन्यत्स्पष्टम् ।

अत्र (८६) (८७) सूत्रे ।

(११)दिक्प्रकरणम् ।

(१)पूर्वेति । पूर्वमपरमित्यादिप्रत्ययो लिङ्गं यस्याः सा दिगित्यर्थः । अमूर्तस्यावधित्वं पूर्वादिप्रत्ययविषयत्वं चानवच्छिन्नपरिमाणत्वान्न सम्भवत्यत उक्तं मूर्तद्रव्यमवधिं कृत्वेति । मूर्तद्रव्येष्वेव यतः इदमस्मात्पूर्वेणेत्यादिप्रत्यया भवन्ति सा दिगित्यर्थः । ननु तादृषप्रतीतिबलात्किमपि निमित्तमन्यत्स्यात्कुतो दिगेवेत्याशङ्क्याह अन्यनिमित्तासम्भवादिति । तथाचायं प्रयोगः–दिगितरेभ्यो भिद्यते उपाध्युपनयनद्वारा पूर्वापरादिप्रत्ययहेतुत्वात् यन्नैवं तन्नैवं यथा पृथिवीत्वादि । उपाध्युपनयनद्वारा तादृशप्रत्ययहेतुत्वं च क्रियामात्रोपाध्यादिनिबन्धनव्यपदेशहेतुकालादौ न सम्भवति । प्रत्ययश्च स प्रथमचरमादित्यसंयोगनिमित्त एव, न च द्रव्यान्तरवर्तिनो संयोगस्य द्रव्यान्तरसंक्रमणं विना विशिष्टप्रत्ययोत्पादकत्वं, ततो भवितव्यं

तस्यास्तु गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः ५ (१)कालवदेते सिद्धाः । दिग्लिङ्गाविशेषादञ्जसैकत्वेऽपि दिशः परममहर्षिभिः श्रुतिस्मृतिलोकसंव्यवहारार्थं मेरुं प्रदक्षिणमावर्तमानस्य भगवतः सवितुर्ये संयोगविशेषाः लोकपालपरिगृहीतदिक्प्रदेशाना(२)मन्वर्थाः प्राच्यादिभेदेन दशविधाः सञ्ज्ञाः कृताः अतो भक्त्या दश दिशः सिद्धाः । तासामेव देवतापरिग्रहात् पुनर्दश सञ्ज्ञा भवन्ति-माहेन्द्री वैश्वानरी याम्या नैर्ऋती वारुणी वायव्या कौबेरी ऐशानी ब्राह्मी नागी चेति ॥

---

विभुना द्रव्यान्तरेण सा च दिगेवेति किरणावल्यादौ विस्तरोऽनुसन्धेयः ।

अत्र ( ८९. ) सूत्रम् ।

(१)कालवदिति । काललिङ्गाविशेषादेकत्वादिवद्दिग्लिङ्गाविशेषादेकत्वादिसिद्धिरित्यर्थः ।

अत्र (९१) (७९) (२८०) (३०३) सूत्राणि ।

(२)अन्वर्था इति । अनुगतोऽर्थो यासामिति अन्वर्थाः । केषामर्थस्तास्वनुगतः ? लोकपालैरिन्द्रादिभिः परिगृहीतानां दिक्प्रदेशानां सवितुर्ये संयोगविभागास्तेषामित्यध्याहारः । तथा च प्रथममस्यामञ्चति सवितेति प्राचीत्यादिव्यवहारो बोध्यः । किमर्थं ताः संज्ञा अत आह श्रुतीति । न प्रतीचीशिराः शयीतेति श्रौतः, आयुष्यं प्राङ्मुखो भुंक्ते इत्यादिः स्मार्तः, पूर्वं गच्छ दक्षिणमवलोकयेत्यादिलौकिकश्च व्यवहारो बोध्यः ।

अत्र ( ९२ ) ( ९३ ) (९४ ) ( ९५ ) सूत्राणि ।

## (१२)आत्मप्रकरणम् ।

(१) आत्मत्वाभिसम्बन्धादात्मा । तस्य सौक्ष्म्यादप्रत्यक्षत्वे सति करणैः शब्दाद्युपलब्ध्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते,—वास्यादीनां करणानां कर्तृप्रयोज्यत्वदर्शनात्, शब्दादिषु प्रसिद्ध्या च प्रसाधको(२)ऽनुमीयते ।

(३)न शरीरेन्द्रियमनसामज्ञत्वात् । न शरीर-

---

### (१२) आत्मप्रकरणम् ।

(१)उद्देशक्रमानुसारेणात्मलक्षणमाहात्मत्वेति । आत्मत्वमेव तस्येतरभेदानुमितिहेतुरित्यर्थः । नन्वात्मनोऽनुपलब्ध्या तदभाव एव सिद्ध्येत्कुतस्तद्धर्मनिरूपणमित्याशंक्य तत्सद्भावे बाधकप्रमाणाभावादनुपलब्धेश्चान्यथासिद्धत्वात्साधकप्रमाणसद्भावाच्च तत्सिद्धिरित्याह तस्येति । ननु आत्मनोऽहंममेति प्रत्ययान्मानसप्रत्यक्षविषयताऽस्त्येवेति कथमप्रत्यक्षत्वोक्तिः सङ्गच्छत इति चेन्न बाह्येन्द्रियाभिप्रायेण तदुक्तेः । अनुमितैरिति । अत्रायं प्रयोगः—शब्दाद्युपलब्धिः करणसाध्या क्रियात्वात् छिदादिवत्, इत्यनुमितैः श्रोत्रादिभिरात्मा समधिगम्यते । कथमत आह वास्यादीनामिति । श्रोत्रादीनि कर्तृव्यापारवन्ति करणत्वाद्वासीवदित्यनुमानेन तादृशव्यापारप्रयोजक आत्मेति भावः । अत्र तेषां कर्त्रनपेक्षत्वे तत्कर्मप्रतिसंधानानुपपत्तेस्तदधिष्ठातृत्वेनात्मसिद्धिरिति उदयनाचार्याः ।

अत्र (३११) (११८) सूत्रे ।

(२)अनुमीयत इति । शब्दादिज्ञानं क्वचिदाश्रितं कार्यत्वात् गन्धवत् इति । कार्यस्यानाश्रितत्वे कारणव्यावृत्तावकारणत्वप्रसङ्गः स्यात् इति भावः ।

(३)ननु शरीरमिन्द्रियं वा मनो वा भविष्यति ज्ञानाधिकरणमत आह न शरीरेति । मनसामिति षष्ठ्यन्तमुत्तरवाक्यस्थचैतन्यमित्यत्रान्वेतव्यम् । अज्ञत्वादिति । ज्ञानासमवायिकारणकत्वात् इत्यर्थः ।

स्य चैतन्यं घटादिवद्भूतकार्यत्वात् मृते चासम्भवात्। (१)नेन्द्रियाणां करणत्वात्, उपहतेषु विषयासान्निध्ये चानुस्मृतिदर्शनात्। नापि मनसः करणान्तरानपेक्षित्वे युगपदालोचनस्मृतिप्रसङ्गात्, स्वयं करणभावाच्च। परिशे-

---

तदेव कुत इत्यत आह न शरीरस्येति। तथा च शरीरं न चेतनं भूतत्वात् कार्यत्वाच्च घटवत् इत्यनेन देहचैतन्या सिद्धिरित्यर्थः। युक्त्यन्तरमाह मृते चेति। असम्भवादित्यनेन विशेषगुणस्य यावद्द्रव्यभावित्वं लक्षितम् तथाच चैतन्यं न शरीरगुणोऽयावद्द्रव्यभावित्वात्संयोगवदित्यनेनापि शरीरस्यानात्मत्वसिद्धिरित्यभिप्रायः।

(१)नेन्द्रियाणामिति। अत्र इन्द्रियाण्यचेतनानि करणत्वात्कुठारवदित्यनुमानप्रयोगः। युक्त्यन्तरमाह उपहतेष्विति। तथाच अनुभवस्मरणयोः सामानाधिकरण्येनानुभवादनुभवकर्तरि नष्टे स्मरणस्यायुक्तत्वान्नेन्द्रियगुणो ज्ञानमित्यर्थः। हेत्वन्तरमाह विषयासान्निध्येपीति। इन्द्रियाणां प्राप्यकारित्वाद्विषयासांनिध्ये स्मृतिर्न स्यात् तदभावाच्चानुभवोपि नेति कन्दलीकृतः। आचार्यास्तु विषयाणामचैतन्येऽयं हेतुरित्याहुः तथाच यदि विषयाश्चेतयेरंस्तदा तदसांनिध्येऽनुस्मृतिर्न स्यान्न ह्यसत्यनुभवितरि स्मरणमुपपद्यते कारणाभावादिति तेषामभिप्रायः। कन्दलीकारेण चोपघात एव विषयाचैतन्ये हेतुर्दत्तः। वयन्तु यद्यत्र विषयाणां चैतन्यमपि सन्दिग्धन्तदोभयत्रापि हेतुद्वयमपि सम्भवति इति टीकाकारव्याख्यानस्वरसादुपलभ्यते इति ब्रूमः। वस्तुतस्तु भाष्यकारस्य विषयचैतन्याक्षेपे स्वरस एव नेति मन्यामहेऽन्यथाऽन्तरा तन्निराकरणे शरीरेन्द्रियमनसामित्यत्र क्रमव्याघातः स्यात् शरीरेणैव तत्सम्भवाच्चेति विभावनीयम्। ननु सर्वविषयं नित्यं च मन एव चेतनमस्तु अत आह नापि मनस इति। तथाच ज्ञानाश्रयतयाऽनुमीयमानं मनो कर्तृ स्यान्न करणम् एवं चैकदाऽनेकविषयसांनिध्येऽनेकचक्षुराद्यधिष्ठानतया युगपदनेकेऽनुभवाः स्मृतयश्च स्युः नहि करणवत् कर्ताप्येकामेव क्रियां करोति त-

षादात्मकार्यत्वात् तेनात्मा समधिगम्यते। (१)शरीरसमवायिनीभ्यां च हिताहितप्राप्तिपरिहारयोग्याभ्यां प्रवृत्तिनिवृत्तिभ्यां रथकर्मणा सारथिवत् प्रयत्नवान् विग्रहस्याधिष्ठाताऽनुमीयते, प्राणादिभिश्चेति। कथं? शरीरपरिगृहीते

---

थात्वे व्यासंगो न स्यात् करणान्तरापेक्षायां च संज्ञाभेदमात्रम्। अथ करणतयाऽनुमितमेव ज्ञानाश्रयतयाप्यनुमास्यते अत आह स्वयं करणभावाच्चेति। सिद्धे हि चैतन्याश्रये कर्तरि करणं मनोऽनुमीयते तथाच धर्मिग्राहकप्रमाणबाध इति आचार्याः। कन्दलीकृतस्तु इतोपि ज्ञानं मनोगुणो न भवति तस्य स्वयं करणत्वादित्याह स्वयंकरणभावाच्चेति। मनो न चेतनं करणत्वात् घटवदिति वदन्ति। परिशेषादिति। प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणतयाऽऽत्मकार्यत्वात्पृथिव्याद्यसमवायित्वे सति कार्यत्वादित्यर्थः। तेन—ज्ञानेनात्मा समधिगम्यतेऽनुमीयते। तत्प्रयोगश्च—ज्ञानं पृथिव्याद्यतिरिक्तद्रव्याश्रितं तदनाश्रितत्वे सति कार्यत्वात् यन्न पृथिव्याद्यतिरिक्तद्रव्याश्रितं तत्तदनाश्रितत्वे सति कार्यमपि न भवति यथा गन्धादिरिति।

अत्र (१३५) सूत्रं।

(१)आत्मासिद्धौ प्रमाणान्तरमाह शरीरेति। शरीरतदवयवसमवायिन्यावेव प्रवृत्तिनिवृत्ती प्रायेण भवत इति तत्स्वरूपपरं विशेषणम्। जलप्रवाहपतितमृतशरीरप्रवृत्तिनिवृत्तिव्यवच्छेदार्थं हिताहितेति द्वितीयं विशेषणम्, बुद्धिपूर्वकचेष्टेति तदर्थः। अत्रायं प्रयोगः—शरीरं प्रयत्नवदधिष्ठितं विशिष्टक्रियत्वाद्रथवदिति। हिताहितप्राप्तिपरिहारसमर्था चेष्टा प्रयत्नपूर्विका विशिष्टक्रियात्वाद्रथक्रियावदिति वा।।

अत्र (११८) (११९) (१२०) (१२१) (१३४) सूत्राणि।

हेत्वन्तरमाह प्राणादिभिश्चेति। अनेन प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानीति सूत्रोक्तसमस्तलिङ्गपरिग्रहः। प्रश्नपूर्वकं प्राणापानादीनां लिङ्गत्वं दर्शयति कथं शरीरपरिगृहीतेति। शरीरसहचारिणि

वायौ विकृतकर्मदर्शनाद्भस्त्राध्मापयितेव, निमेषोन्मेषकर्मणा नियतेन दारुयन्त्रप्रयोक्तेव, देहस्य वृद्धिक्षतभग्नसंरोहणादिनिमित्तत्वात् गृहपतिरिव, अभिमतविषयग्राहककरणसम्बन्धनिमित्तेन मनःकर्मणा गृहकोणेषु पेलकप्रेरक इव दारकः, नयनविषयालोचनानन्तरं रसानुस्मृतिक्रमेण रसनविक्रियादर्शनादनेकगवाक्षान्तर्गतप्रेक्षकवदुभयदर्शी कश्चिदेको विज्ञायते। सुखदुःखे-

---

प्राणापानाख्ये वायौ विकृतमूर्ध्वाधोगमनरूपं यत्कर्म तद्दर्शनात् भस्त्राध्मापयितेव तत्प्रेरक आत्माऽनुमीयत इत्यर्थः। प्रयोगस्तु—जीवच्छरीरं भोक्तृप्रयत्नवदधिष्ठितं संमूर्छनाभावे सति विकृतक्रियपवनाश्रयत्वात् भस्त्रादिवदिति। निमेषेति। शरीरं प्रयत्नवदधिष्ठितमिच्छाधीननिमेषोन्मेषवदवयवयोगित्वाद्दारुयन्त्रवदित्यनुमानेन निमेषोन्मेषकर्मणा दारुयन्त्रप्रयोक्तेव विग्रहस्य प्रयत्नवानात्माऽनुमीयत इत्यर्थः। जीवनलिङ्गकमनुमानमाह—देहस्येति। अनुमानं तु—शरीरवृद्ध्यादि प्रयत्नवत्कृतं वृद्धिक्षतसंरोहणवत्त्वात् गृहवृद्ध्यादिवत् इति। मनोगतिलिङ्गकमनुमानमुपन्यस्यति—अभिमतेत्यादिना। विषयग्राहककरणसम्बन्धश्चक्षुरादिमनःसम्बन्धस्तन्निमित्तेनेत्यर्थः। पेलको जतुगोलकः। मनः प्रयत्नवत्प्रेर्यमभिमतविषयसम्बन्धनिमित्तक्रियाश्रयत्वाद्दारकहस्तगतपेलकवत् इत्यनुमानरीतिः। वाय्वादिप्रेरितस्यानभिमतेनापि सम्बन्धो भवतीति प्रयत्नवानात्मा सिध्यति। नयनविषयेति। इदमत्राभिप्रेतम्—कस्यचिदिष्टफलस्य रूपं दृष्ट्वा तत्सहचरितपूर्वानुभूतरसस्मरणात् तत्रेच्छा भवति ततः प्रयत्न आत्ममनःसंयोगापेक्षो रसनेन्द्रिये विकारम् जनयति, दन्तोदकसंप्लवानुमितस्स विकार इन्द्रियचैतन्ये न स्यात् नियतचक्षूरसनाभ्यां रूपरसयोः साहचर्यप्रतीतौ रूपदर्शनेन रसस्मरणासम्भवात्, तथा च तादृग्विकारादिन्द्रियव्यतिरिक्तः कोऽप्युभयदर्शी सिध्य-

च्छाद्वेषप्रयत्नैश्च गुणैर्गुण्यनुमीयते । ते च न शरीरेन्द्रियगुणाः, कस्मात्? अहङ्कारेणैकवाक्यताभावात् प्रदेशवृत्तित्वादयावद्द्रव्यभावित्वाद् बाह्येन्द्रियाप्रत्यक्षत्वाच्च तथाऽहंशब्देनापि पृथिव्यादिशब्दव्यतिरेकादिति ।

तस्य गुणाः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाः १४ ।(१)आत्मलिङ्गाधिकारे बुद्ध्यादयः प्रयत्नान्ताः सिद्धाः । धर्माधर्मावात्मान्तरगुणानामकारणत्ववचनात् । संस्कारः स्मृत्यु-

---

ति यो रूपं दृष्ट्वा रसं स्मरति, शरीरस्योपचयापचयाभ्यामन्यत्वेनान्यदाऽस्मरणप्रसङ्गाच्चोभयदर्शितेति । प्रदेशेति । अत्रेदमनुमानम्—सुखादयो न शरीरेन्द्रियविषयगुणाः अव्याप्यवृत्तित्वात्, अयावद्द्रव्यभावित्वाच्च यन्नैवं तन्नैवं यथा रूपादय इति, तथा सुखादयो न शरीरेन्द्रियगुणा बाह्येन्द्रियाप्रत्यक्षत्वात् इति च व्यतिरेक्यनुमानम् । द्विविधाः शरीरेन्द्रियगुणाः केचिदप्रत्यक्षाः यथा गुरुत्वादि केचिद्बाह्येन्द्रियग्राह्या यथा रूपादि । सुखादयस्तु नैवम् अतो न तद्गुणाः परिशेषात्तैरात्माऽनुमीयत इति भावः । अहंशब्देनापीति । अनुमीयत इति सम्बन्धः । लोके वेदे च प्रयुज्यमानोऽहंशब्दो न तावन्निरभिधेयः किन्त्वात्मवाचक इत्यर्थः । ननु पृथिव्यादिवाचको भविष्यतीत्यत आह पृथिव्यादिशब्देति । अहंशब्दस्य पृथिव्यादिवाचकैः शब्दैः सह सामानाधिकरण्याभावान्न तद्वाचकतेत्यर्थः अन्यथा द्रव्यं पृथिवीतिवत् अहं पृथिवीत्यपि प्रयोगः स्यात् ।

अत्र (१३९)सूत्रात्-(१५३)पर्यन्तं सूत्राणि द्रष्टव्यानि ।

(१)आत्मलिङ्गाधिकार इत्यनेन प्राणापानादि सूत्रं(१३९) लक्षयति । आत्मान्तरगुणानामकारणत्ववचनादिति (२२९)सूत्रम् । एतेन धर्माधर्मयोरात्मगुणत्वं कथितमन्यथा तयोः सुखादिसाधर्म्यकथने-

त्पत्तौ कारणवचनात् । व्यवस्थावचनात् सङ्ख्या पृथक्त्व-मप्यत एव । तथा चात्मेतिवचनात् परममहत्परिमाणम् । सन्निकर्षजत्वात् सुखादीनां संयोगः । तद्विनाशकत्वा-द्विभाग इति ।

## (१३)मनःप्रकरणम् ।

(१)मनस्त्वयोगान्मनः । सत्यप्यात्मेन्द्रियार्थसान्नि-ध्ये ज्ञानसुखादीनामभूत्वोत्पत्तिदर्शनात् करणान्तरमनु-

---

नारम्भकत्वसमर्थनं न स्यात् । स्मृत्युत्पत्ताविति । आत्ममनसोः संयोगविशेषात्संस्काराच्च स्मृतिः (३४७)सूत्रम । व्यवस्थेति । नानात्मानो व्यवस्थातः इत्यादि(१५५)(१५६)सूत्राभ्यामात्मनानात्व-प्रतिपादनाद्बहुत्वसंख्याऽऽत्मनि सिद्धेत्यर्थः । अतएव—उक्तवचनादेव संख्यानुविधायित्वात्पृथक्त्वस्येत्यर्थः । तथाचात्मेति । विभवा-न्महानाकाशस्तथा चात्मेति (२७८)सूत्रादाकाशवदात्मनोऽपि विभुत्वात्परममहत्परिमाणम् सिद्धमित्यर्थः । सन्निकर्षजत्वा-दिति । सुखाद्यात्मगुणानां मनःसंयोगजत्वादात्मनि संयोगः व्यधिकरणस्यासमवायिकारणत्वाभावादिति भावः । तद्विनाश-कत्वादिति । आत्ममनसोर्नित्यत्वेनाश्रयविनाशस्य तद्धेतुत्वासम्भ-वाद्विभागोऽप्यात्मन्यङ्गीकार्यं इत्यर्थः ।

(१३)मनःप्रकरणम् ।

(१) प्रधानतया प्रथममात्मानमुक्त्वाऽनन्तरं मनोनिरूपणा-र्थमाह मनस्त्वयोगादिति । पूर्ववद्व्याख्यानम् । समानगुणकार्ये-षु घटादिषु घटत्वादिवत् तथाभूतेषु मनःस्वपि मनस्त्वजा-तिरित्यभिप्रायः । मनःसद्भावे प्रमाणं दर्शयति—सत्यप्यात्मे-न्द्रियेति । आत्मनः सर्वेन्द्रियैर्युगपत्सम्बन्धे इन्द्रियाणाञ्चार्थसं-निकर्षे सत्यपि एकप्रतीतिकाले नान्यत्र सुखादय इति करणान्त-रमनुमीयत इत्यर्थः । आत्मेन्द्रियार्थसंनिकर्षाः कार्योत्पत्तौ कार-

मीयते। श्रोत्राद्यव्यापारे स्मृत्युत्पत्तिदर्शनात् बाह्येन्द्रियैरगृहीतसुखादिग्राह्यान्तरभावाच्चान्तःकरणम्।

तस्य गुणाः—संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा:। (१)प्रयत्नज्ञानायौगपद्यवचनात् प्रतिशरीरमेकत्वं सिद्धम्। पृथक्त्वमप्यत एव। तदभाववचनादणुपरिमाणम्। अपसर्पणोपसर्पणवचनात् संयोगविभागौ। मूर्तत्वात् परत्वापरत्वे संस्कारश्च।

---

णान्तरसापेक्षाः सत्यपि सद्भावे कार्यानुत्पादकत्वात् तन्त्वादिवत् इतिप्रयोगः। प्रमाणान्तरमाह—श्रोत्राद्यव्यापारे स्मृत्युत्पत्तिदर्शनादिति। स्मृतिरिन्द्रियजा ज्ञानत्वाद्गन्धादिज्ञानवत् इतिप्रयोगः, न च श्रोत्रादीन्यत्र करणानि बधिरादीनां तदभावेऽपि स्मृतिदर्शनात् यदस्याः करणन्तन्मन इति। बाह्येन्द्रियैरिति। सुखादिप्रतीतिरिन्द्रियजा अपरोक्षप्रतीतित्वाद्रूपादिप्रतीतिवद् इत्यत्रानुमानप्रयोगो द्रष्टव्यः।

अत्र (१२६)सूत्रम्।

(१)प्रयत्नेत्यादि। अनेन मनसि एकत्वसंख्यासूचिता। तथा च सूत्रम्—प्रयत्नायौगपद्याज् ज्ञानायौगपद्याच्चैकम्(१३८)। मनोबहुत्वे ह्यात्ममनःसंयोगानां बहुत्वाद्युगपज्ज्ञानानि प्रयत्नाश्च भवेयुरिति भावः। अत एवेति। संख्यानुविधानादेव पृथक्त्वमपीति भावः। तदभाववचनादिति। तदभावादणु मनः(३७९) इति सूत्रम्। नित्यद्रव्ये विभवाभावस्याणुपरिमाणत्वाव्यभिचारात् युगपज्ज्ञानानुपपत्त्यैव च विभवाभाव इत्यभिप्रायः। अपसर्पणेति। अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चादृष्टकारितानीति (२१५)सूत्रेण मनसः पूर्वदेहादपसर्पणं शरीरान्तरे चोपसर्पणं चादृष्टकारितमित्युक्तं ततश्चास्य संयोगविभागौ सिद्धौ। मूर्तत्वादिति। विभुत्वाभावान्मूर्तत्वन्ते-

अस्पर्शवत्त्वादद्रव्यानारम्भकत्वम् । क्रियावत्त्वान्मूर्तत्वम् । साधारणविग्रहवत्त्वप्रसङ्गादज्ञत्वम् । करणभावात् परार्थम् । गुणवत्त्वाद्द्रव्यम् । प्रयत्नादृष्टपरिग्रहवशादाशुसञ्चारि चेति ॥

इतिप्रशस्तपादभाष्ये
द्रव्यपदार्थः ॥

---

न घटादिवत् परत्वापरत्ववेगाः सिद्धा इत्यर्थः । अस्पर्शवत्त्वादिति । अस्पर्शवत्त्वं च देहान्यत्वे सति सर्वविषयज्ञानोत्पादकत्वादात्मवदस्य सिद्ध्यति तस्मात्सजातीयद्रव्यानारम्भकत्वं चेत्यर्थः । साधारणेति । यदि मनो ज्ञं स्याच्छरीरमिदं साधारणमुपभोगस्थानं भवेत्, नचैवम् एकाभिप्रायेणैव तस्य प्रवृत्तिनिवृत्तिदर्शनात् । परार्थ–परोपभोगसाधनं चक्षुर्वदित्यर्थः । गुणवत्त्वादिति । पृथिव्यावदिति दृष्टान्तो योज्यः ॥

अत्र (६०२) (६९) (१३८)सूत्राणि ।

इति प्रशस्तपादभाष्यविवरणे
द्रव्यपदार्थः ।



# अथ गुणपदार्थनिरूपणम् ।

## (१)साधर्म्यप्रकरणम् ।

(१)रूपादीनां गुणानां सर्वेषां गुणत्वाभिसम्बन्धो द्रव्याश्रितत्वं निर्गुणत्वं निष्क्रियत्वम् ॥

रूपरसगन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगा मूर्तगुणाः ॥

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा अमूर्तगुणाः ॥

संख्यापरिमाणपृथक्त्वसंयोगविभागा उभयगुणाः ॥

---

## अथ गुणपदार्थः ।

### (१)साधर्म्यप्रकरणम् ।

(१) साधर्म्यवैधर्म्याभ्यां द्रव्यं निरूप्य सम्प्रति ताभ्यां गुणान्निरूपयति रूपादीनामिति । सर्वेषामित्यनेन साधर्म्यं गुणानामित्यनेन चेतरवैधर्म्यं सूचितम् । अप्रधानवाचकगुणशब्दस्य न गुणत्वसम्बन्ध इति रूपादीनामिति गुणविशेषणम् । इदमेव च गुणानां लक्षणं,–गुण इतरेभ्यो भिन्नः, गुण इति व्यवहर्तव्यो वा गुणत्वाभिसम्बन्धात यन्नैवं तन्नैवं यथाद्रव्यमिति तत्प्रयोजनात् । द्रव्याश्रितत्वमिति । इदं च धर्ममात्रवर्णनं न वैधर्म्यं कर्मादावतिव्याप्तेः । निर्गुणत्वमिति । इद मपि तथा । एकं रूपमणुः शब्दः इति प्रतीतिस्त्वौपचारिकी, संख्यादि न रूपाद्याश्रयं गुणत्वाद्रूपवदिति ।

अत्र (३१७) (२२०) (२७०) (२७१) (२७२) (१६) (२८४) (२८५) (२८६) (२९२) (२९३) (२९५) (२९६) (२९७) (३०४) (३०६)सूत्राणि द्रष्टव्याणि ।

संयोगविभागाद्वित्वद्वि(१)पृथक्त्वादयोऽनेकाश्रिताः॥

(२)शेषास्त्वेकैकद्रव्यवृत्तयः ॥

रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा (३)वैशेषिकगुणाः॥

संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्ववेगाः (४)सामान्यगुणाः ॥

शब्दस्पर्शरूपरसगन्धा बाह्यैकैकेन्द्रियग्राह्याः ॥

संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगा द्वीन्द्रियग्राह्याः ॥

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नास्त्वन्तःकरणग्राह्याः ॥

गुरुत्वधर्माधर्मभावना ह्यतीन्द्रियाः ॥

---

(१)द्विपृथक्त्वादय इति । त्रित्वत्रिपृथक्त्वादिरादिपदग्राह्यः । अत्र (२५)सूत्रम् ।

(२)शेषा इति । रूपरसगन्धस्पर्शैकत्वैकपृथक्त्वपरिमाणपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारबुद्ध्यादिशब्दान्ता इत्यर्थः ।

(३)वैशेषिकगुणा इति । विशेषा एव वैशेषिकं तस्य गुणाः स्वाश्रयव्यवच्छेदोचितावान्तरसामान्यविशेषवन्त इत्यर्थः । रूपादयो भास्वरत्वादिना स्वाश्रयं व्यवच्छिन्दन्तीति भावः । नैमित्तिकद्रवत्वेऽतिव्याप्तिवारणाय सांसिद्धिकपदम् ।

(४)सामान्यगुणा इति । स्वाश्रयसाधर्म्यगुणा न स्वाश्रयविशेषगुणा इत्यर्थः । सांसिद्धिकेऽप्रसक्तिवारणाय नैमित्तिकपदम् ।

शब्देति । अत्र (३२५) (३२६) (१००)सूत्राणि ।

द्वीन्द्रियेति । अत्र (१६७)सूत्रम् ।

अन्तःकरणग्राह्या इत्यत्र (१६६)सूत्रं द्रष्टव्यम् ।

(१)अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगाः कारणगुणपूर्वकाः ॥

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा (२)अकारणगुणपूर्वकाः ॥

(३)बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दतूलपरिमाणोत्तरसंयोगनैमित्तिकद्रवत्वपरत्वापरत्वापाकजाः संयोगजाः ॥

संयोगविभागवेगाः (४)कर्मजाः ॥

शब्दोत्तरविभागौ (५)विभागजौ ॥

---

(१)अपाकजेति । अस्य द्रव्यत्वमित्यत्राप्यन्वयः । कारणेति । स्वाश्रयसमवायिकारणगुणपूर्वका इत्यर्थः पटादौ तन्त्वादिरूपदर्शनात् । इदं स्वरूपकथनमात्रमकारणगुणपूर्वकनैमित्तिकद्रवत्ववेगयोरकारणगुणपूर्वकत्वदर्शनात् ।

अत्र (२६२)सूत्रम् ।

(२)अकारणेति । नित्यगुणत्वादित्यर्थः ।

(३)बुद्धिसुखेति।बुद्ध्याद्यात्मगुणा आत्ममनःसंयोगजा शब्दो भेर्याकाशसंयोगजस्तूलपरिमाणं प्रचयाख्यसंयोगजमुत्तरसंयोगस्संयोगजस्संयोगो नैमित्तिकं द्रवत्वं वह्निसंयोगजं परत्वापरत्वे दिक्कालपिण्डसंयोगजे पार्थिवपरमाणुरूपरसगन्धस्पर्शा वह्निसंयोगजा इति भावः ।

अत्र (१३४) (११०) (२९०) (३०२) (२१३) सूत्राणि ।

(४)कर्मजा इति । अत्र संयोगविभागावाद्यौ, वेगश्चावेगवद्द्रव्यारब्धवृत्तिर्ग्राह्यः ।

अत्र (३०) (२०) (२९०) (२९१) (१९७)सूत्राणि ।

(५)विभागजाविति । अत्र शब्द आद्यो ग्राह्यः द्वितीयस्य शब्दजन्यत्वात् ।

अत्र (२९१) (११०)सूत्रे ।

परत्वापरत्वद्वित्वद्विपृथक्त्वादयो (१)बुद्ध्यपेक्षाः ॥

रूपरसगन्धानुष्णस्पर्शशब्दपरिमाणैकत्वैकपृथक्त्व-स्नेहाः (२)समानजात्यारम्भकाः ॥

सुखदुःखेच्छाद्वेषप्रयत्नाश्चा(३)समानजात्यारम्भकाः॥

संयोगविभागसंख्यागुरुत्वद्रवत्वोष्णस्पर्शज्ञानधर्माधर्मसंस्काराः (४)समानासमानजात्यारम्भकाः ॥

बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दाः (५)स्वाश्रयसमवेतारम्भकाः ॥

---

(१)बुद्ध्यपेक्षा इति। अपेक्षा बुद्धिजन्या इत्यर्थः। पूर्ववदादिपदार्थः। अत्र ३०२सूत्रम् ।

(२)समानजात्यारम्भका इति । अत्रारम्भकत्वं कारणत्वमात्रं विवक्षितं न त्वसमवायिकारणत्वमन्यथा विजातीयपाकजानां निमित्तकारणस्योष्णस्पर्शस्य व्यवच्छेदोऽसङ्गतः स्यादिति । ननु तर्हि कथं रूपादीनां ज्ञानकारणता ? तद्व्यतिरेकेणात्र साधर्म्यस्य विवक्षितत्वात् ।

अत्र २६२ ११० २८सूत्राणि ।

(३)असमानेति। सुखमिच्छां जनयति दुःखं द्वेषन्तौ प्रयत्नं स च क्रियामिति विजातीयारम्भकत्वमेषामित्यर्थः । पुत्रसुखात्पितुः कथं सजातीयं सुखमिति तु न चोद्यम्। तत्र लौकिकतत्प्रतीतेरेव हेतुत्वात्।

(४)समानासमानेति। संयोगाद्द्रव्यादि विभागाच्छब्दः संख्यया परिमाणं गुरुत्वात् पतनं द्रवत्वात्स्यन्दनं स्नेहात् सङ्ग्रह उष्णस्पर्शात् पाकजाः ज्ञानादिच्छा धर्मात्सुख अधर्माद् दुःखं संस्कारात्क्रियास्मृती इति विजातीयवर्गः । सजातीयस्तु प्रसिद्ध एव ।

अत्र ११० २९० २९१ २७ २९सूत्राणि ।

(५)स्वाश्रयेति । अत्र ११० ३४७ २५० २५४सूत्राणि ।

६

रूपरसगन्धस्पर्शपरिमाणस्नेहप्रयत्नाः (१)परत्रारम्भकाः।

संयोगविभागसंख्यैकपृथक्त्वगुरुत्वद्रवत्ववेगधर्माधर्मास्तू(२)भयत्रारम्भकाः ॥

(३)गुरुत्वद्रवत्ववेगप्रयत्नधर्माधर्मसंयोगविशेषाः क्रियाहेतवः ॥

रूपरसगन्धा(४)नुष्णस्पर्शसंख्यापरिमाणैकपृथक्त्वस्नेहशब्दानामसमवायिकारणत्वम् ॥

---

(१)परत्रेति। अत्र २५२सूत्रम्।

(२)उभयत्रेति। स्वाश्रयेऽन्यत्र चेत्यर्थः। तन्तुसंयोगस्तेषु पटं, विषयेन्द्रियसंयोगश्चात्मनि ज्ञानं, वंशदलाकाशविभागः स्वाश्रये आकाशे शब्दं वंशदलद्वयविभागश्चाकाशे शब्दम्, अवयवसंख्याऽवयविन्येकत्वं स्वाश्रये च द्वित्वादिसंख्याम्, अवयवैकपृथक्त्वमवयविन्येकपृथक्त्वं स्वाश्रये त्रिपृथक्त्वादिकं, कारणगतगुरुत्वद्रवत्ववेगाः कार्ये तान् स्वाश्रयेषु क्रियां, धर्माधर्मावात्मनि सुखदुःखेऽन्यत्राग्न्यादौ ज्वलनादिक्रियां यथास्वं जनयन्तीत्यर्थः।

(३) गुरुत्वेत्यादि। गुरुत्वात्पतनं द्रवत्वात्स्यन्दनं वेगादिषावुत्तरकर्माणि प्रयत्नाच्छरीरादिक्रिया धर्माधर्माभ्यामग्न्यादिक्रिया संयोगविशेषान्नोदनाभिघातरूपादिष्वादिक्रिया भवतीति भावः। वेगपदं स्थितिस्थापकस्याप्युपलक्षकम्।

अत्र १९८ १८७ १९७ १८९ १९० १९१ १९२ १८५ १८६ १९४ १९५तथा१९९ सूत्रात् २०५ सूत्रान्तं,२११ २१५ सूत्राणि च द्रष्टव्यानि।

(४)अनुष्णेति। उष्णस्पर्शस्य पाकजोत्पत्तौ निमित्तत्वात्तद्वारणायानुष्णेति स्पर्शविशेषणम्। अत्र रूपरसगन्धानुष्णस्पर्शपरिमाणस्नेहानां समवाय्येकार्थसमवायात्, शब्दस्य समवायिकारणसमवायात्, संख्यापृथक्त्वयोश्च उभयथापि असमवायिकारणतेति बोध्यम्। अत्र १९ २२२ ३६५ सूत्राणि।

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाना (१)निमित्तकारणत्वम् ॥

संयोगविभागोष्णस्पर्शगुरुत्वद्रवत्ववेगानामुभयथा(२) कारणत्वम् ॥

परत्वापरत्वाद्वित्वद्विपृथक्त्वादीनामकारणत्वम् ॥

संयोगविभागशब्दात्मविशेषगुणाना (३)प्रदेशवृत्तित्वम् ॥

(४)शेषाणामाश्रयव्यापित्वम् ॥

अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वसांसिद्धिकद्रवत्वगुरुत्वस्नेहानां यावद्द्रव्यभावित्वम् ॥

---

(१) निमित्तेति । निमित्तकारणत्वमेवैतेषां नासमवायित्वमित्यग्रे वक्ष्यते । अत्र १९सूत्रम् ।

(२)उभयथेति । असमवायिकारणत्वं निमित्तकारणत्वञ्चेत्यर्थः । यथा भेरीदण्डसंयोगः शब्दे निमित्तं भेर्याकाशसंयोगेऽसमवायी, वंशदलविभागः शब्दे निमित्तं वंशदलाकाशविभागेऽसमवायी च, उष्णस्पर्शः पाकजे निमित्तं उष्णस्पर्शेऽसमवायी, गुरुत्वमभिघातनादिक्रियायां निमित्तं पतनगुरुत्वयोरसमवायि च, द्रवत्वं सङ्ग्रहे निमित्तं द्रव्यत्वस्पन्दनयोरसमवायि, वेगो वेगगमनयोरसमवायी अभिघाते च निमित्तमित्यर्थः । अत्र १९ सूत्रम् ।

[३]प्रदेशवृत्तित्वमिति । अव्याप्यवृत्तित्वमित्यर्थः ।

[४]शेषाणामिति । रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगास्थितिस्थापकपरत्वापरत्वानामित्यर्थः । आश्रयव्यापित्वं व्याप्यवृत्तित्वमिति यावत् । यावद्द्रव्यभावित्वमिति । आश्रयनाशादेवैषां विनाशो नान्यथेत्यर्थः । पाकजरूपादयस्तत्स्वेषाश्रये नश्यन्तीत्यपाकजपदम् ।

शेषाणामयावद्द्रव्यभावित्वं चेति ॥

(१)रूपादीनां सर्वेषां गुणानां प्रत्येकमपरसामान्यसम्बन्धाद्रूपादिसञ्ज्ञा भवन्ति ॥

(२) रूपप्रकरणम् ।

(२)तत्र रूपं चक्षुर्ग्राह्यम् । पृथिव्युदकज्वलनवृत्ति द्रव्याद्युपलम्भकं नयनसहकारि शुक्लाद्यनेकप्रकारं सलिलादिपरमाणुषु नित्यं पार्थिवपरमाणुष्वग्निसंयोगविरोधि सर्वकार्यद्रव्येषु कारणगुणपूर्वकमाश्रयविनाशादेव विनश्यतीति ॥

---

[१]सम्प्रति गुणानां परस्परवैधर्म्यप्रतिपादनायाह रूपादीनामिति । रूपादिगुणानामेकैकं प्रत्यपरजातेः रूपत्वादिकायाः सम्बन्धाद्रूपादिसंज्ञा-रूपमिति रस इति संज्ञा भवन्ति । रूपत्वाद्यपरसामान्यनिमित्ता रूपादिसंज्ञा रूपादीनां प्रत्येकं वैधर्म्यमित्यर्थः । नीलपीतादिभेदेषु रूपं रूपमिति प्रत्ययानुवृत्त्या रूपत्वसामान्यसिद्धिरित्यन्यत्र विस्तरः ।

(२)रूपप्रकरणम् ।

[२]सर्वपदार्थाभिव्यक्तिनिमित्तं रूपमादौ निरूपयति तत्र रूपमिति । तत्र गुणेषु मध्ये । गुणत्वे सति चक्षुर्मात्रग्राह्यत्वं रूपस्य लक्षणमित्यर्थः । रूपत्वादिवारणाय विशेषणम् । संख्यादिनिरासाय मात्रपदम् । आश्रयमाह पृथिवीति । अर्थक्रियाश्चाह द्रव्यादीति । यस्मिन्नाश्रये वर्तते तस्य द्रव्यस्य तद्गतगुणकर्मसामान्यानाञ्चोपलम्भकमित्यर्थः । गुणाश्चात्र संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगा ग्राह्याः । करणोपकारित्वमाह नयनेति । सलिलादीति । आदिपदेन तेजःपरमाणुपरिग्रहः । अग्निसंयोगेति । अग्निसंयोगः पार्थिवपरमाणुरूपस्योत्पादको विनाशकश्चेति द्रष्-

## (३) रसप्रकरणम् ।

रसो रसनग्राह्यः । पृथिव्युदकवृत्तिः जीवनपुष्टि(१)-बलारोग्यनिमित्तम् रसनसहकारी मधुराम्ललवणतिक्त-कटुकषायभेदभिन्नः । अस्यापि नित्यानित्यत्वनिष्पत्तयो रूपवत् ॥

## (४) गन्धप्रकरणम् ।

गन्धो घ्राणग्राह्यः । पृथिवीवृत्तिः घ्राणसहकारी सुरभिरसुरभिश्च । अस्यापि पूर्ववदुत्पत्त्यादयो(२) व्याख्याताः ॥

## (५) स्पर्शप्रकरणम् ।

स्पर्शस्त्वगिन्द्रियग्राह्यः । क्षित्युदकज्वलनपव-

---

व्यम् । आश्रयविनाशादेवेति । न तु पिठरपाकवादिनामिवाग्निसंयोगादपीत्येवकारार्थः । अत्र ३२६ १६४ ४९ ५० ५१ १६२ २५९ २६० २५८ २६१ २६२२६३ सूत्राणि ।

(३)रसप्रकरणम् ।

[१]पुष्टिरिति । शरीरावयवोपचय इत्यर्थः । रसनसहकारीति । रससमवेतरासनप्रत्यक्षे सहकारिकारणमिति भावः । रूपवदिति । रसोपि पार्थिवपरमाणुषु अग्निसंयोगादुत्पत्तिविनाशवान् जलपरमाणुषु नित्यः,कार्ये कारणगुणपूर्वक,आश्रयनाशान्नश्यति चेत्यर्थः । अत्र १६५ ३२६ ४९ ५० तथा २५८ सूत्रात् २६३ सूत्रान्तं द्रष्टव्यम् ।

(४)गन्धप्रकरणम् ।

[२]उत्पत्त्यादय इति । गन्धस्य नित्यत्वाभावात्तद्विहायोत्पत्त्यादय इत्युक्तम् । पूर्ववदिति । रसवदित्यर्थः । अन्यत्सुगमम् । अत्र १६५ ३२५ ४९ ८१ तथा २५८ सूत्रात् २६३ सूत्रान्तं च द्रष्टव्यम् ।

(५)स्पर्शप्रकरणम् ।

नवृत्तिः त्वक्सहकारी (१)रूपानुविधायी शीतोष्णानुष्णाशीतभेदात् त्रिविधः। अस्यापि नित्यानित्यत्वनिष्पत्तयः पूर्ववत् ॥

## (६) पाकजप्रकरणम्।

(२)पार्थिवपरमाणुरूपादीनां पाकजोत्पत्तिविधानम्। घटादेरामद्रव्यस्याग्निना सम्बद्धस्याग्न्यभिघातान्नोदनाद्वा तदारम्भकेष्वणुषु कर्माण्युत्पद्यन्ते तेभ्यो विभागाः विभागेभ्यः संयोगविनाशाः संयोगविनाशेभ्यश्च कार्यद्रव्यं विनश्यति। तस्मिन् विनष्टे स्वतन्त्रेषु परमाणुष्वग्निसंयोगादौष्ण्यापेक्षा(३)च्छ्यामादीनां विनाशः पुनरन्यस्मादग्निसंयोगादौष्ण्यापेक्षात् पाकजा जायन्ते। तदन-

---

[१]रूपानुविधायीति। रूपव्यापक इत्यर्थः रूपवति नियमेन स्पर्शसद्भावात्। पूर्ववदिति। रसवदित्यर्थः गन्धे नित्यत्वाभावात्। अत्र१६५ ३२६ ४९ ५० ५१ ५२तथा२५८सूत्रात्२६३सूत्रान्तं च द्रष्टव्यम्।

(६)पाकजप्रकरणम्।

[२]पार्थिवपरमाणुरूपादीनामुत्पत्तिविनाशौ दर्शयन् पाकजप्रक्रियान्तेषामाह पार्थिवेति। पृथिव्याः कार्यरूपायाः इमे कारणं परमाणवः पार्थिवपरमाणवः तेषां पाकजोत्पत्तिविधिः कथ्यत इति शेषः। पीलुपाकवादेन तद्दर्शयति घटादेरित्यादिना रूपाद्युत्पत्तिरित्यन्तेन। शरावादिरादिपदार्थः। अभिघातान्नोदनाद्वेति। तदाख्यसंयोगविशेषादित्यर्थः। घटादिसंयुक्तोदकपरमाणुनिवृत्त्यर्थन्तदारम्भकेषु इति। घटाद्यारम्भकेष्वित्यर्थः। कार्यद्रव्यं द्व्यणुकरूपमित्यर्थः।

अत्र १९९ २९० ३२८ दृष्टान्तभाष्यतासूत्राणि।

[३]श्यामादीनामिति। रसगंधस्पर्शा आदिपदेन ग्राह्याः। पाकजा इति। रूपादय इति शेषः। अत्र परमाणुषु पाकजोत्पत्तौ पूर्वरूपवि-

न्तरं भोगिनामदृष्टापेक्षादात्माणुसंयोगादुत्पन्नपाकजेष्वणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगात् द्व्यणुकादिक्रमेण कार्यद्रव्यमुत्पद्यते । तत्र च कारणगुणप्रक्रमेण रूपाद्युत्पत्तिः । न च कार्यद्रव्य एव रूपाद्युत्पत्तिर्विनाशो वा सम्भवति सर्वावयवेष्वन्तर्बहिश्च वर्तमानस्याग्निना व्याप्त्यभावाद् अणुप्रवेशादपि च व्याप्तिर्न सम्भवति कार्यद्रव्यविनाशादिति ॥

---

नाशे रूपान्तरोत्पत्तिः अवयविनाशे च पूर्वरूपनाशः प्रमाणम् । विनाशोत्पत्तिकारणौ वह्निसंयोगौ च भिन्नौ तन्तुरूपादिविनाशोत्पादयोर्भिन्नकारणवतोः प्रत्यक्षदर्शनात् इत्यादिकं विस्तरेण कन्दल्यादौ द्रष्टव्यम् । द्व्यणुकादिप्रक्रमेणेति । द्वाभ्यां परमाणुभ्यां द्व्यणुकं त्रिभिस्तैस्त्र्यणुकमित्यादि क्रमेणेत्यर्थः । एतदाशयेनैव मुक्तावल्यादौ क्षणप्रक्रिया विश्वनाथादिभिः प्रदर्शिता तत्रैव द्रष्टव्या । पिठरपाकवादिमतेनाशंक्य समाधत्ते न चेति । वर्तमानस्य द्रव्यस्येति शेषः । प्राप्त्यभावादिति । तथा च बहिःस्थिताग्निना सर्वावयवसम्बद्धावयविव्यापकस्य संयोगस्याभावात् कार्यरूपाद्युत्पत्तिविनाशयोरक्लृप्तरन्तर्वर्तिनामपाकजत्वप्रसङ्गादिति भावः । ननु घटाद्यवयविनां सच्छिद्रतया तत्र तेजोवयवानां सूक्ष्माणां प्रवेशेन प्राप्तिसंभवात्कथं कार्यद्रव्ये न रूपाद्युत्पाद इति आशंक्याह अण्विति । इदमत्र तात्पर्यम् । निरन्तरेषु घटाद्यवयविषु तदवयवविभागं विना तेजःपरमाणूनामपि प्रवेशो न संभवतीति व्यतिभिद्यमानेषु अवयवेषु क्रियाविभागादिक्रमेण द्रव्यारंभकसंयोगविनाशादवश्यं द्रव्यविनाशो वाच्य इति कुतस्तस्याणुप्रवेशशङ्केति ।

अत्र २६२ १९९ २९० २६२ २६३ १५९ सूत्राणि ।

## (७) संख्याप्रकरणम् ।

(१) एकादिव्यवहारहेतुः संख्या । सा पुनरेकद्रव्या चानेकद्रव्या च । तत्रैकद्रव्यायाः सलिलादिपरमाणुरूपादीनामिव नित्यानित्यत्वनिष्पत्तयः ।

अनेकद्रव्या तु द्वित्वादिका परार्धान्ता । तस्याः खल्वेकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिरपेक्षाबुद्धिविनाशाद् विनाश इति । कथम् ? यदा बोद्धुश्चक्षुषा समानासमानजातीययोर्द्रव्ययोः सन्निकर्षे सति तत्संयुक्तसमवेतसमवेतैकत्वसामान्यज्ञानोत्पत्तावेकत्वसामान्यतत्सम्बन्धज्ञानेभ्य एकगुणयोरनेकविषयिण्येका बुद्धिरुत्पद्यते तदा तामपेक्ष्यैकत्वाभ्यां

---

(७) संख्याप्रकरणम् ।

(१) उद्देशक्रमप्राप्तां संख्यामाह एकेति । एकं द्वे त्रीणीति व्यवहारो विशेषणकृतः विशिष्टव्यवहारत्वात् दण्डीति व्यवहारवत् इत्यनुमानेन तादृशव्यवहारविशेषणतया संख्यासिद्धिरित्यर्थः । गणितव्यवहारासाधारणकारणत्वं संख्यात्वमिति भावः । अत्र (२८२) सूत्रम् । न चायं रूपादिविषयः तद्विलक्षणत्वात् । नापि निर्विषयः व्याघातादित्यादिकमधिकं किरणावल्यादौ द्रष्टव्यम् । निष्पत्तिरिति । उत्पत्तिरित्यर्थः न तु एकैकगुणसमुच्चयमात्रं द्वित्वादीति भावः । तत्संयुक्तेति । चक्षुः संयुक्तेत्यर्थः । संयुक्तयोः समानजातीययोर्घटयोरसमानजातीययोर्घटपटयोर्वा प्रत्येकं समवेतं यदेकत्वं गुणस्तत्समवेतं यदेकत्वसामान्यमेकत्वनिष्ठमेकत्वत्वरूपमपरसामान्यं तस्य विशेषणस्य ज्ञानोत्पत्तौ जातायामित्यर्थः विशिष्टज्ञाने विशेषणज्ञानस्य हेतुत्वात् । बुद्धिरिति । एकत्वत्वसामान्यविशिष्टैकत्वगुणस-

स्वाश्रययोर्द्वित्वमारभ्यते ततः पुनस्तस्मिन् द्वित्वसामान्यज्ञानमुत्पद्यते तस्माद् द्वित्वसामान्यज्ञानादपेक्षाबुद्धेर्विनश्यत्ता द्वित्वसामान्यतत्सम्बन्धतज्ज्ञानेभ्यो द्वित्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः। तत इदानीमपेक्षाबुद्धिविनाशाद्द्वित्वगुणस्य विनश्यत्ता, द्वित्वगुणज्ञानं द्वित्वसामान्यज्ञानस्य विनाशकारणं द्वित्वगुणतज्ज्ञानसम्बन्धेभ्यो द्वे द्रव्ये इति द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः। तदनन्तरं द्वे द्रव्ये इति द्रव्य-

---

मूहालम्बनरूपा एका बुद्धिरिति भावः इयमेवापेक्षाबुद्धिः। तामिति। बुद्धिमित्यर्थः। द्वित्वमारभ्यते इति। तस्या द्वित्वोत्पादकत्वं चापेक्षाबुद्धिर्द्वित्वोत्पादिका व्यञ्जकत्वानुपपत्तौ तेनानुविधीयमानत्वाच्छब्दं प्रति संयोगविभागवदित्यनुमानेन द्रष्टव्यम्। अत्र स्वाश्रयौ समवायिहेतू एकत्वगुणावसमवायिनौ अनेकविषया बुद्धिश्च निमित्तमिति बोध्यम्। द्वित्वसामान्यज्ञानमिति। द्वित्वत्वसामान्यविषयकं विशेषणज्ञानमित्यर्थः। विनश्यत्तेति। विनाशहेतुसांनिध्यमित्यर्थः। एवमुत्पद्यमानतोत्पत्तिकारणसामीप्यं बोध्यम्। इत्येकः काल इति। द्वित्वसामान्यज्ञानमपेक्षाबुद्धिविनाशकं गुणबुद्ध्युत्पादकञ्चेति उत्पादकविनाशयोरैक्यादेकः कालः इति भावः। तत इदानीमिति। मुक्तिदशायामन्त्यतत्त्वज्ञाननाशस्य शरीरविनाशहेतुकस्य सर्वसिद्धस्य दृष्टत्वान्निमित्तकारणादपि गुणनाशोऽभ्युपगन्तव्य इति अपेक्षाबुद्धिविनाशस्य द्वित्वनाशहेतुतोक्ता, एवं बुद्धेर्बुद्ध्यन्तराविरोधाद्द्वित्वगुणज्ञानन्तत्सामान्यबुद्धिविनाशकत्वेनोक्तम् तयोश्च यौगपद्यात्तयोर्विनश्यत्तायौगपद्यमिति भावः। द्वित्वगुणतज्ज्ञानसम्बन्धेभ्य इति। उक्तद्वित्वगुणज्ञानं द्रव्यज्ञानस्यापि हेतुरिति गुणबुद्ध्युत्पाद एवैकस्योत्पद्यमानताऽपरस्य विनश्यत्तेत्यप्यत्रैवेत्येकः काल इति भावः। तदनन्तरमिति। द्वे द्रव्ये इति ज्ञानोत्पत्तौ पूर्वोक्तद्वित्वगुणतज्ज्ञानस-

ज्ञानस्योत्पादः द्वित्वस्य विनाशः द्वित्वगुणबुद्धेर्विनश्यत्ता, द्रव्यज्ञानात् संस्कारस्योत्पद्यमानतेत्येकः कालः तदनन्तरं द्रव्यज्ञानाद् द्वित्वगुणबुद्धेर्विनाशो द्रव्यबुद्धेरपि संस्कारात् ।

(१)एतेन त्रित्वाद्युत्पत्तिरपि व्याख्याता। एकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिरपेक्षाबुद्धिविनाशाच्च

---

त्वन्धेभ्यो द्वित्वस्य नाशो, गुणबुद्धेर्विनश्यत्ता द्रव्यज्ञानात्संस्कारस्योत्पद्यमानता चेत्येकः कालः। तत्र च द्रव्यबुद्धिरेव संस्कारस्योत्पादिका गुणबुद्धिविनाशिका चेति तयोरुत्पद्यमानता विनश्यत्ता च बोध्या। ततः किमत आह तदनन्तरं द्रव्यज्ञानाद्द्वित्वगुणबुद्धेर्विनाश इति । संस्कारस्योत्पाद इत्यपि द्रष्टव्यम् ।

[१]एतेनेति।अपिना विनाशोऽपीत्यर्थः। त्रित्वाद्युत्पत्तिविनाशप्रकारमाह एकत्वेभ्य इत्यादि विनाश इत्यन्तम्। अक्षरार्थः पूर्ववत्। अत्रायं प्रक्रियाप्रकारसङ्क्षेपः—पूर्वमिन्द्रियसंनिकर्षस्तस्मादेकत्वसामान्यबुद्धिस्ततोऽपेक्षाबुद्धिस्ततो द्वित्वं तस्माद्द्वित्वसामान्यज्ञानं तस्माद्द्वित्वगुणज्ञानं ततो द्रव्यज्ञानं ततः संस्कार इत्युत्पादक्रमः। विनाशक्रमस्तु—अपेक्षाबुद्धित एकत्वसामान्यज्ञानस्य द्वित्वोत्पत्तिसमकालं विनाशः, अपेक्षाबुद्धेर्द्वित्वसामान्यज्ञानात् द्वित्वगुणबुद्धिसमकालं, द्वित्वसामान्यज्ञानस्य द्वित्वगुणज्ञानात्, द्वित्वस्यापेक्षाबुद्धिविनाशात् द्रव्यबुद्धिसमकालं, गुणबुद्धेर्द्रव्यबुद्धितः संस्कारोत्पत्तिसमकालं, द्रव्यबुद्धेस्तदनन्तरं संस्कारादिति। प्रमाणन्तु संस्कारे—द्वित्वविशिष्टद्रव्यस्मरणं, गुणज्ञाने द्रव्यबुद्धिः, सामान्यज्ञाने गुणबुद्धिरित्याद्यूहनीयम्। एतेन शतसंख्याद्युत्पत्तिर्दर्शिता तथाहि एकैकगुणेषु प्रत्येकमनुभूतेषु क्रमिकसंस्काराणामन्त्यगुणानुभवोत्तरं शतव्यवहारप्रवर्तकादृष्टविशेषाद्युगपदभिव्यक्तावनेकविषयैकस्मरणोत्पादे सत्यनुभवस्मरणरूपाभ्यामपेक्षाबुद्धिभ्यां स्वाश्रयेषु शतसंख्योत्पद्यते सर्वद्रव्यसंस्कारसाचिव्यायास्तस्या

विनाश इति । क्वचिच्चाश्रयविनाशादिति । कथम् ? यदैकत्वाधारावयवे कर्मोत्पद्यते तदैवैकत्वसामान्यज्ञानमुत्पद्यते कर्मणा चावयवान्तराद्विभागः क्रियते अपेक्षाबुद्धेश्चोत्पत्तिः । ततो यस्मिन्नेव काले विभागात् संयोगविनाशस्तस्मिन्नेव काले द्वित्वमुत्पद्यते संयोगविनाशाद् द्रव्यविनाशः सामान्यबुद्धेश्चोत्पत्तिः । ततो यस्मिन्नेव काले सामान्यज्ञानादपेक्षाबुद्धेर्विनाशः तस्मिन्नेव काले आश्रयविनाशाद् द्वित्वविनाश इति शोभनमेतद्विधानम् बध्यघातकपक्षे, सहानवस्थानलक्षणे तु विरोधे द्रव्यज्ञानानुत्पत्तिप्रस-

---

अन्त्यद्रव्यसंयुक्तेन्द्रियजज्ञानविषयत्वात् प्रत्यक्षतेति । नियतविनाशहेतुमभिधाय साधारणमाह क्वचिदिति । प्रश्नपूर्वकं नाशप्रक्रियामाह कथं यदैकत्वेति । द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियासमकालमेकत्वसामान्यज्ञानचिन्तायामियमत्र प्रक्रिया-पूर्वमवयवकर्मसामान्यज्ञाने ततो विभागापेक्षाबुद्धी १ ततः संयोगनाशद्वित्वोत्पत्ती द्रव्यनाशद्वित्वसामान्यज्ञाने २ ताभ्यां द्वित्वनाशापेक्षाबुद्धिनाशाविति यथाक्रममवसेयम् । उपलक्षणमेतत् कर्मसमकालमपेक्षाबुद्धिचिन्तनादुभाभ्यामित्यपि द्रष्टव्यम् । नन्वत्रोत्तरोत्तरज्ञानस्य पूर्वपूर्वज्ञाननाशकत्वं पाकजपूर्वापररूपादीनामिव सहानवस्थानलक्षणविरोधपक्षेऽग्निसंयोगपाकजादीनामिव वध्यघातकपक्षे वेति शङ्कायामाह शोभनमेतद्विधानं वध्यघातकपक्ष इति । एतद्विधानमेष द्वित्वप्रकारः । द्वितीयं ज्ञानमुत्पद्य क्षणान्तरे पूर्वं विज्ञानं नाशयतीति वध्यघातकपक्षे शोभनं युक्तमित्यर्थः । सहानवस्थानलक्षणे तु विरोधे—एकस्य ज्ञानस्योत्पत्तिरपरस्य नाश इति पक्षे द्वे द्रव्ये इति ज्ञानं न स्यादित्यभिप्रायः । तदेव प्रश्नपूर्वकं व्युत्पाद-

ङ्गः । कथम् ? गुणबुद्धिसमकालमपेक्षाबुद्धिविनाशाद् द्वित्वविनाशे तदपेक्षस्य द्वे द्रव्ये इति द्रव्यज्ञानस्यानुत्पत्तिप्रसङ्ग इति ।

लैङ्गिकवज्ज्ञानमात्रादिति(१)चेत्स्यान्मतम्—यथाऽभूतं भूतस्येत्यत्र लिङ्गाभावेऽपि ज्ञानमात्रादनुमानम् तथा गुणविनाशेऽपि गुणबुद्धिमात्रात् द्रव्यप्रत्ययः स्यादिति । न । विशेष्यज्ञानत्वात् । न हि विशेष्यज्ञानं सारूप्याद्विशेषणसम्बन्धमन्तरेण भवितुमर्हति । तथा चाह सूत्रकारः—"समवायिनः श्वैत्याच्छ्वैत्यबुद्धेः श्वेते बुद्धिस्ते कार्यकारणभूते" [ अ० ८ आ० १ सू० ९ ]

---

यति कथमिति । तथा च द्वित्वकाल एवापेक्षाबुद्धिविनाशात्, गुणबुद्धिकाले चापेक्षाबुद्ध्यभावेन द्वित्वनाशात् कथं द्वे द्रव्ये इति बुद्धिः ? विशेषणादिज्ञानपूर्वकत्वाद्विशिष्टबुद्धेरिति भावः ।

[१]स्यान्मतमिति,—लैङ्गिकवदित्यस्य व्याख्यानम् । मतं स्याच्छङ्कितुः परस्येत्यर्थः । अभूतमिति(१२७)वैशेषिकं सूत्रम् । यथा आशुतरविनाशितयाऽविद्यमानमपि शब्दबुद्ध्यादिलिङ्गं विद्यमानवीणात्मादिलिङ्ग्यनुमापकं ज्ञानमात्राद्भवति तथा गुणबुद्धिकाले द्वित्वनाशेऽपि तज्ज्ञानमुक्तविशिष्टबुद्धिजनकं स्यादित्येष आक्षेप्तुराशयः स्यादिति भावः । परिहरति नेति । विवृणोति न हीति । सारूप्याद्विशेष्यस्वरूपानुरञ्जकत्वाद्विशेषणस्य तत्सम्बन्धज्ञानमन्तरेण विशेष्यज्ञानं कथं स्यादित्यर्थः । अत्रार्थे सूत्रकारं प्रमाणयति तथाहीति । समवायिन इति ( ३१८ ) सूत्रम् । समवेताच्छ्वैत्यगुणाच्छ्वैत्यबुद्धेः श्वेते द्रव्ये श्वेतं द्रव्यमिति बुद्धिर्भवति । ते विशेषणविशेष्यज्ञाने कार्यकारणस्वभावे इति सूत्राक्षरार्थः । अत्र समवायिन इति सम्बन्धस्य, श्वैत्यादिति विशेषणस्य, श्वैत्यबुद्धेरिति च ज्ञानस्य

इति । न तु लैङ्गिकं ज्ञानमभेदेनोत्पद्यते तस्माद्विषमोऽयमुपन्यासः । न आशूत्पत्तेः यथा शब्दवदाकाशमित्यत्र त्रीणि ज्ञानान्याशूत्पद्यन्ते तथा द्वित्वादिज्ञानोत्पत्तावित्यदोषः । बध्यघातकपक्षेऽपि समानो दोष इति चेत् स्यान्मतम्—ननु बध्यघातकपक्षेऽपि तर्हि द्रव्यज्ञानानुत्पत्तिप्रसङ्गः । कथम् ? द्वित्वसामान्यबुद्धिसमकालं संस्कारादपेक्षाबुद्धिविनाशादिति । न समू-

---

कारणत्वमुक्तम् । श्वेते बुद्धिरिति च श्वेतद्रव्यविषया बुद्धिः फलम् । लैङ्गिकस्यास्माद्भेदमाह नत्विति । अभेदेन—सारूप्येण । नहि भवति शब्दः शब्दवती वा वीणेति, किन्तूपलभ्यमानः शब्दो वीणाकार्यः एवंभूतशब्दत्वादिति साध्यसाधनभेदेन वैयधिकरण्येनेति विषमोऽयं लैङ्गिकवदिति दृष्टान्तोपन्यास इति भावः । एवं बुद्धावपि बोध्यम् । द्वे द्रव्ये इति—ज्ञानतुल्यो नायं दृष्टान्त इति तात्पर्यम् । ननु यदि द्वित्वरूपं विशेषणं नष्टं तर्हि श्यामोऽयं कुम्भ आसीदितिवद् द्वितयमासीदिति स्यान्न त्विदानीं द्वयं त्रयमिति, तथा द्वे द्रव्ये इत्यत्र यथा द्रव्यप्रतिभास एवमुपसर्जनं द्वित्वमपि भासतेऽविद्यमानस्य च तस्य कथं प्रतिभासस्तस्मादविनष्टमेव द्वित्वं विशेष्यज्ञानालम्बनं वक्तव्यमिति शङ्काद्वयं मनसि कृत्वाह नाशूत्पत्तेरिति । तत्रानुरूपं दृष्टान्तमाह यथेति । तथा च यथाशब्दवदाकाशमित्यत्र त्रयाणां शब्दाकाशशब्दविशिष्टज्ञानानामाशूत्पादात्क्रमस्याग्रहणेन युगपत्प्रतिभासाभिमानस्तथा द्वित्वगुणद्रव्यज्ञानयोः शीघ्रमुत्पादात् क्रमाग्रहणे द्वित्वद्रव्ययोरेकस्मिन्नेव ज्ञाने प्रतिभास इति हृदयम् । शङ्कते बध्यघातकेति । शङ्कातात्पर्यं स्थापयति स्यान्मतमिति । बध्यघातकपक्षे गुणबुद्धिसमकालं द्वित्वनाशे द्रव्यज्ञानानुत्पत्तिरित्यत्रोपपत्तिं दर्शयति कथं द्वित्वेति । अत्रापि सहानवस्थानपक्षवत् अपेक्षाबुद्धेर्द्वित्वसामान्यज्ञानकालेऽनवस्थानं गुणबुद्धिसमकालं गुण-

हज्ञानस्य संस्कारहेतुत्वात्—समूहज्ञानमेव संस्कारकारणं नालोचनज्ञानमित्यदोषः । ज्ञानयौगपद्यप्रसङ्ग इति चेत् स्यान्मतम्—ननु ज्ञानानां बध्यघातकविरोधे ज्ञानयौगपद्यप्रसङ्ग इति । न अविनश्यतोरवस्थानप्रतिषेधात् । ज्ञानायौगपद्यवचनेन ज्ञानयोर्युगपदुत्पत्तिरविनश्यतोश्च युगपदवस्थानं प्रतिषिध्यते नहि बध्यघातकविरोधे ज्ञानयोर्युगपदुत्पत्तिरविनश्यतोश्च युगपदवस्थानमस्तीति ॥

## ( ८ ) परिमाणप्रकरणम् ।

(१)परिमाणं मानव्यवहारकारणम् । तच्चतुर्विधम्—

---

नाशात् द्रव्यज्ञानानुत्पत्तिश्च ज्ञानवत् संस्कारस्यापि पूर्वज्ञाननाशकत्वादित्यर्थः । समाधानं नेति । समाधानं विवृणोति समूहज्ञानमेवेति । तथा च गुणविशिष्टद्रव्यज्ञानात्मकसमूहज्ञानस्यैव संस्कारजनकता नालोचनज्ञानस्य निर्विकल्पात्मकापेक्षाज्ञानस्येत्यदोष इत्यर्थः । विशिष्टस्मरणमेव विशिष्टज्ञानस्य संस्कारहेतुत्वे प्रमाणमित्याचार्याः । ननु यदि ज्ञानमुत्पद्य पूर्वं ज्ञानं नाशयतीति तदा सहावस्थानमनयोः प्राप्तं ततश्च ज्ञानायौगपद्यादिति सूत्रविरोध इति शङ्कते ज्ञानेति । शङ्काभिप्रायमाह नन्विति । बध्यघातकरूपविरोध इत्यर्थः । समाधत्ते नेति । प्रतिषेधादिति । प्रयत्नज्ञानायौगपद्यादिति सूत्रेणेति भावः । तदेवाह ज्ञानायौगपद्यवचनेनेति । युगपदुत्पत्तौ प्रतिशरीरमेकत्वमणुत्वं च मनसो न स्यादिति व्यासङ्गानुपपत्तिः। अविनश्यदवस्थयोश्च ज्ञानयोरवस्थाने बध्यघातकलक्षणो विरोधो न स्यादिति तदेवात्र प्रतिषिद्ध्यते नान्यत् प्रमाणाभावादिति भावः ।

[८]परिमाणप्रकरणम् ।

[१] क्रमप्राप्तं परिमाणं निरूपयति परिमाणमिति । मानव्यवहारकारणं गुणः परिमाणमिति तल्लक्षणम् । ननु द्रव्याग्रहे परिमा-

अणु महद्दीर्घं ह्रस्वं चेति ।

(१)तत्र महद् द्विविधं—नित्यमनित्यं च । नित्यमाकाशकालदिगात्मसु परममहत्त्वम् अनित्यं त्र्यणुकादावेव । तथा चाण्वपि द्विविधं—नित्यमनित्यं च । नित्यं परमाणुमनस्सु तत्तु पारिमाण्डल्यम् । अनित्यं द्व्यणुक एव । कुवलयामलकबिल्वादिषु महत्स्वपि तत्प्रकर्षभावा-

---

णाग्रहात् द्रव्यस्वरूपादतिरिक्तं परिमाणं कुतोऽङ्गीकृतवानाचार्य इति चेत् एकतराप्रतीतावन्यतरप्रत्यय एवाङ्गीकारबीजम् । यदि च घटादिस्वरूपं परिमाणं स्यान्महदानयेत्युक्ते घटमात्रमानयेत् घटमानयेत्युक्ते च यत्किञ्चिन्महदानयेत्, तथा च प्रेष्यप्रेषकसंप्रतिपत्ती विरुध्येयातां घटशब्दाद् घटनिश्चय इव परिमाणनिश्चयोऽपि स्यात् परिमाणसन्देहवत् घटसन्देहोपि स्यादिति परिमाणाङ्गीकारे तर्कोपि बोध्य इत्यलं विस्तरेण । विभजते तच्चतुर्विधमिति । चतुरस्रादिकन्त्ववयवसंस्थानविशेषो न परिमाणान्तरमिति चतुर्विधत्वाव्याहतिः । अत्र ( २६४ ) ( २७३ ) सूत्रे ।

[१]ननु यथा द्व्यणुकपरिमाणादपकृष्टपरमाणुपरिमाणं भिन्नमेवं घटादिपरिमाणादन्यदेव प्रकर्षपर्यन्तप्राप्तमाकाशादिपरिमाणं दीर्घं ह्रस्वञ्च स्यादिति षड्विधत्वसम्भवे कथं चातुर्विध्यमत आह तत्रेति । त्र्यणुकादावेवेति । एवकारेण द्व्यणुकानित्यद्रव्यव्यवच्छेदः । परमाणुमनःस्विति । उत्पत्तिविनाशकारणाभावादिति शेषः । पारिमाण्डल्यमिति । सर्वापकृष्टं परिमाणमितीयं संज्ञा नैयायिकाम् । द्व्यणुक एवेति । अणुपरिमाणप्रभेद एव परमाणुपरिमाणं महत्परिमाणप्रभेदश्च परममहत्परिमाणमन्यथा परमशब्देन विशेषणायोगात्, यत्परिमाणं रूपसहायं स्वाश्रयं प्रत्यक्षयति तत्र महदिति यच्च नो प्रत्यक्षयति तत्राण्विति व्यवहार इति तात्पर्यम् । ननु द्व्यणुक एवेत्ययुक्तं कुवलयामलकबिल्वादिषु परस्परापेक्षयाणुव्यवहारदर्शनादत आह कुवलयेति । महत्वोत्पत्तौ कारणसद्भावेन चाक्षुषत्वान्यथानुपपत्त्या

भावमपेक्ष्य भाक्तोऽणुत्वव्यवहारः । दीर्घत्वह्रस्वत्वे चोत्पाद्यमहदणुत्वैकार्थसमवेते । समिदिक्षुवंशादिष्वञ्जसा दीर्घेष्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तो ह्रस्वत्वव्यवहारः ।

१ अनित्यं चतुर्विधमपि संख्या-परिमाण-प्रचययोनि ।

तत्रेश्वरबुद्धिमपेक्ष्योत्पन्ना परमाणुद्व्यणुकेषु ब-

---

च कुवलये तत्त्वतो महत्त्वे व्यवस्थिते आमलकप्रकर्षभावाभावमपेक्ष्य भाक्तोऽणुत्वव्यवहारः स च द्व्यणुकेप्यस्तीतिसादृश्यादौपचारिकी प्रवृत्तिरिति तात्पर्यम् । उभाभ्यां भज्यत इति भक्तिः भक्तिश्च प्रकर्षभावाभावः महत्परिमाणाभाव इति यावत् । तामपेक्ष्य भवतीति भाक्तशब्दार्थः । दीर्घत्वह्रस्वत्वयोर्वि[illegible]माह दीर्घत्वह्रस्वत्व इति । उत्पाद्ये च ते महत्त्वाणुत्वे चेति ता[illegible]मेकस्मिन्नर्थे समवेते । यत्रोत्पाद्यं महत्त्वं द्व्यणुकादौ तत्र तादृशं दीर्घत्वं, यत्र चोत्पाद्यमणुत्वं द्व्यणुके तत्रोत्पाद्यं ह्रस्वत्वमित्यर्थः । ननूत्पाद्याणुत्वह्रस्वत्वयोर्व्याप्तिस्वीकारे कथं वंशाद्यपेक्षयेक्ष्वादौ ह्रस्वत्वव्यवहार इत्याशंक्याह समिदिक्ष्विति । अञ्जसा परमार्थतः । दीर्घत्वोत्पत्तौ कारणोपपत्तेर्वंशे यो दीर्घत्वस्य प्रकर्षभावः दीर्घातिशययोगित्वं तदभाव इक्षौ तमपेक्ष्येक्ष्वादौ ह्रस्वत्वव्यवहारो भाक्तः । स हि मुख्ये ह्रस्वेऽप्यस्तीत्युभाभ्यां भज्यत इति भक्तिस्तत्कृत इति भावः । एवं समिध्यपि बोध्यम् । कस्माद्दीर्घव्यवहारस्तत्र न गौण इति चेत् उत्पत्तिकारणासम्भवात् । सर्वत्रैवंसति भाक्तो ह्रस्वत्वव्यवहारः स्यादिति तु न शङ्कनीयं मुख्याभावे गौणस्य सम्भवादित्यन्यत्र विस्तरः ।

अत्र २७४ २७८ २७९ २८० १८१ २७५ २७६, २६७ १६८ २६९ सूत्राणि द्रष्टव्यानि ।

एवं विभागमाश्रयं च निरूप्य कारणं निरूपयति । अनित्यश्चतुर्विधमपीति ।

हुत्वसङ्ख्या तैरारब्धे कार्यद्रव्ये त्र्यणुकादिलक्षणे रूपाद्युत्पत्तिसमकालं महत्त्वं दीर्घत्वं च करोति ।

द्विबहुभिर्महद्भिश्चारब्धे कार्यद्रव्ये कारणमहत्त्वान्येव महत्त्वमारभन्ते न बहुत्वम् । समानसङ्ख्यैश्चारब्धेऽतिशयदर्शनात् ।

---

संख्याकारणं परिमाणमुदाहरति तत्रेति । द्व्यणुकेष्वस्मदादीनामपेक्षाबुद्ध्यभावादाहेश्वरेति । बुद्धिरपेक्षाबुद्धिः तामपेक्ष्योत्पन्ना द्वाभ्यां द्वाभ्यां परमाणुभ्यामुत्पन्नानि द्व्यणुकानि परमाणुद्व्यणुकानि तेषु बहुत्वसंख्या तैर्द्व्यणुकैरारब्धे त्र्यणुकादिकार्यद्रव्ये रूपाद्युत्पत्तिकाल एव महत्त्वं दीर्घत्वं च करोतीत्यर्थः। किं पुनरत्र प्रमाणं संख्यैव महत्त्वं करोति ? इति चेत् परिशेषानुमानमेव । तथा च प्रयोगः—त्र्यणुकपरिमाणं बहुत्वसंख्याकार्यं परिमाणप्रचयासम्भवे सति कार्यमहत्त्वात् यन्न बहुत्वकार्यं न तदेवं यथा द्व्यणुकपरिमाणं तूलकपरिमाणं वा । विपक्षे कारणानुपपत्तौ कार्यानुत्पत्तिप्रसङ्ग एव बाधकम् । न तावद्द्व्यणुकगतरूपादीनां तत्कारणत्वसम्भवस्तेषां कार्ये समानजातीयगुणारम्भकत्वात् । द्व्यणुकपरिमाणस्य त्र्यणुकपरिमाणारम्भकत्वे परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणारम्भकत्वनियमात् त्र्यणुकस्याणुतरत्वापत्त्या महत्त्वानुपपत्तिरिति बहुत्वसंख्यैव महत्त्वं करोतीत्यप्रतिहतम् ।

एवं सति बहुत्वमेवास्तु सर्वत्र महत्त्वकारणं न महत्त्वमतमाह द्विबहुभिरिति । द्वौ च बहवश्च तैर्महद्भिरारब्धे कार्यद्रव्ये कारणमहत्त्वे च कारणमहत्त्वानि च तान्येव महत्त्वमारभन्ते न बहुत्वं समानसंख्यैरारब्धयोर्द्रव्ययोः स्थूलारब्धे महत्त्वातिशयदर्शनात्, संख्यायाः कारणत्वे कार्यविशेषो न स्यात् तस्या अविशेषादिति भावः । यत्र द्वाभ्यामप्रचिताभ्यामारम्भस्तत्र बहुत्वप्रचययोरसम्भव एव । समानमहत्त्वैरल्पसंख्यैरारब्धमपेक्ष्य संख्यात एवातिशयदर्शनात् संख्याया अपि कारणत्वमित्येकस्य द्वयोर्वा यथा स-

प्रचयश्च तूलपिण्डयोर्वर्तमानः पिण्डारम्भकावयवप्रशिथिलसंयोगानपेक्षमाण इतरेतरपिण्डावयवसंयोगापेक्षो वा द्वितूलके महत्त्वमारभते न बहुत्वमहत्त्वानि । समानसङ्ख्यापरिमाणैरारब्धेऽतिशयदर्शनात् ।

द्वित्वसङ्ख्या चाण्वोर्वर्तमाना द्व्यणुकेऽणुत्वमारभते । महत्त्ववत् त्र्यणुकादौ कारणबहुत्वमहत्त्वसमानजातीयप्रचयेभ्यो दीर्घत्वस्योत्पत्तिः । अणुत्ववत् द्व्यणुके द्वित्वसङ्ख्यातो ह्रस्वत्वस्योत्पत्तिः ।

---

म्भवं कारणत्वं सुधीभिर्विभावनीयम् ।

प्रचयहेतुकमाह प्रचयश्चेति । शिथिलाख्यो द्रव्यारम्भकः संयोगविशेषः द्वितूलकद्रव्यारम्भकयोस्तूलपिण्डयोर्वर्तमानः प्रत्येकं पिण्डयोरारम्भकान्प्रशिथिलानवयवसंयोगानपेक्षमाणः परस्परापिण्डयोरवयवानां परस्परसंयोगानपेक्षमाणो वा द्वितूलकं महत्त्वं जनयति न बहुत्वमहत्त्वानि बहुत्वस्य तत्राभावात् महत्त्वस्य सतोऽपि प्रचयापेक्षत्वादन्यथा गुरुत्वस्य तुल्यतया मूलभूतानां त्र्यणुकादीनान्तुल्यसङ्ख्यतया च परिमाणातिशयानुपपत्तिरित्यर्थः । तत्रोपपत्तिमाह समानेति । अयमाशयः । संख्यायाः कारणत्वे समसंख्यैस्त्रिभिः प्रशिथिलैर्निविडैश्च संयोगैरारब्धद्रव्ययोः प्रशिथिलसंयोगारब्धे निविडसंयोगारब्धापेक्षया महत्त्वातिशयो न दृश्येत । एवं महत्त्वस्यापि हेतुत्वेऽप्रचितारब्धापेक्षया प्रचितारब्धे परिमाणातिशयो न स्यादिति ।

अणुत्वोत्पत्तिमाह द्वित्वसंख्या चेति । द्व्यणुकद्रव्यत्वेन परिमाणस्य सर्वथा स्वीकार्यतया महत्त्वे कारणाभावेन पूर्वयुक्त्या परमाणुपरिमाणस्य चाकारणत्वात् संख्यैव द्व्यणुकाणुपरिमाणे कारणमित्यर्थः । दीर्घत्वोत्पत्तिमाह महत्त्ववदिति । यथा महत्त्वस्य कारणबहुत्वात्समानजातीयात् कारणमहत्त्वात्प्रचयाच्चोत्पत्तिस्तथा दीर्घत्वस्येत्यर्थः । इमामेव ह्रस्वत्वेऽतिदिशति अणुत्ववदिति ।

अथ त्र्यणुकादिषु वर्तमानयोर्महत्त्वदीर्घत्वयोः परस्परतः को विशेषः, द्व्यणुकेषु चाणुत्वह्रस्वत्वयोरिति?

तत्रास्ति महत्त्वदीर्घत्वयोः परस्परतो विशेषः महत्सु दीर्घमानीयतां दीर्घेषु च महदानीयतामिति विशिष्टव्यवहारदर्शनादिति। अणुत्वह्रस्वत्वयोस्तु परस्परतो विशेषस्तद्दर्शिनां प्रत्यक्ष इति।

तच्चतुर्विधमपि परिमाणमुत्पाद्यमाश्रयविनाशादेव विनश्यतीति॥

(९) पृथक्त्वप्रकरणम्।

पृथक्त्वमपोद्धारव्यवहारकारणम्। तत्पुनरेकद्रव्य-

---

दीर्घत्वह्रस्वत्वयोर्महत्त्वाणुत्वान्तर्भावाभिप्रायेण क्रमशः शङ्कते अथेति।

तथैवोत्तरयति तत्रेति। अभेदे निर्धारणानुपपत्त्या दीर्घेषु महदानीयतामिति प्रत्ययो न स्यात् इति भावः। तद्दर्शिनामिति। योगिनामित्यर्थः। अस्माकं भाक्तव्यवहारापौनरुक्त्यान्यथानुपपत्तिस्तद्भेदे प्रमाणमिति तुशब्दार्थः।

उत्पत्तिमुक्त्वा नाशमाह तदिति। नित्यपरिमाणव्यावृत्तये उत्पाद्यमित्युक्तम्। आश्रये सत्यपि शरीरादौ परिमाणनिवृत्तिरिति प्राभाकरमतदूषणायैवकारः विनाशे परिमाणान्तरोत्पत्तौ च हेत्वभावात् इति आलोचनीयम्।

अत्र २६५ २६६ २७३ सूत्राणि।

(९) पृथक्त्वप्रकरणम्।

पृथक्त्वमाह पृथक्त्वमिति। अवधिव्यङ्ग्यत्वे सति एकमात्रवृत्तिवृत्त्यनेकमात्रवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वं पृथक्त्वमित्यर्थः। तत्र प्रमाणं चात्रेदमस्मात् पृथगित्यबाधितं प्रत्यक्षमेव। नन्व-

मनेकद्रव्यं च। तस्य तु नित्यानित्यत्वनिष्पत्तयः सङ्ख्यया व्याख्याताः।

एतावांस्तु विशेषः—एकत्वादिवदेकपृथक्त्वादिष्वपरसामान्याभावः सङ्ख्यया तु विशिष्यते तद्विशिष्टव्यवहारदर्शनादिति ॥

---

तरेतराभावेनैव सामंजस्येऽन्यथासिद्धेर्न गुणान्तरं पृथक्त्वमिति चेन्न पृथक्त्वस्यावधिनिरूप्यत्वादन्योन्याभावस्य च प्रतियोगिनिरूप्यत्वात् इदमस्मात् पृथगिदमिदं नेति प्रतीतिभेददर्शनात्। विधिप्रत्ययविषयत्वायोगान्नान्योन्याभावः पृथक्त्वमिति कन्दलीकाराः। अधिकं किरणावल्यादौ द्रष्टव्यम्। अक्षरार्थस्तु एतस्मादिदं पृथगित्यादिज्ञानं अभिधानञ्च अपवृज्यापेक्ष्य य उद्धारो निर्धारणं स अपोद्धारः स चासौ व्यवहारश्च तस्य कारणं पृथक्त्वमिति। तत्पुनरिति। एकद्रव्यवृत्तिपरिमाणाद् अस्यानेकद्रव्यवृत्तित्वविशेषद्योतनार्थस्तु पुनःशब्दः। तथाच परिमाणमेकद्रव्यम् एकपृथक्त्वस्पुनरेकद्रव्यमनेकद्रव्यं चेति विशेष इति भावः। व्याख्याता इति। तथाच यथैकद्रव्यगतैकत्वं परमाणुषु नित्यं कार्ये कारणगुणपूर्वकमाश्रयनाशनाश्यञ्च तथैकद्रव्यगतैकपृथक्त्वमपि। यथा चानेकद्रव्या द्वित्वादिका संख्याऽनेकगुणाल्पत्वनापेक्षाबुद्धिजन्या तद्विनाशनाश्या क्वचिदाश्रयनाशनाश्यां च तथा ऽनेकद्रव्यगतद्विपृथक्त्वादिकमपीति संख्यावन्नित्यानित्यत्वे पृथक्त्वस्य न परिमाणवदिति भावः।

एवं पृथक्त्वस्य संख्यासाधर्म्यमुक्त्वा वैधर्म्यमाह एतावांस्त्विति। यथा संख्यात्वपरसामान्यापेक्षयैकत्वद्वित्वादिकमपरसामान्यं तथा पृथक्त्वपरसामान्यापेक्षयैकपृथक्त्वादिकमपरसामान्यं नास्तीति भावः। कथं तर्ह्यनेकेष्वेकपृथक्त्वादिष्ववान्तरप्रत्ययस्तत्राह संख्ययेति। एकत्र द्रव्ये वर्तमानं पृथक्त्वमेकार्थसमवेतैकत्वसंख्यया विशिष्यते तद्विशेषश्चावान्तरव्यवहारविशेषः

## ( १० ) संयोगप्रकरणम् ।

संयोगः संयुक्तप्रत्ययनिमित्तम् । स च द्रव्यगुणकर्महेतुः । द्रव्यारम्भे निरपेक्षः—तथा भवतीति सापेक्षेभ्यो निरपेक्षेभ्यश्चेति वचनात् । गुणकर्मारम्भे तु सापेक्षः-

---

अनुवृत्तिप्रत्ययश्च पृथक्त्वसामान्यकृत एवेति भावः । द्विपृथक्त्वादौ पृथक्त्वजातेरन्याऽवान्तरजातिर्नास्ति प्रतीतिवैलक्षण्यं द्वित्वादिघटितमेवेति भाष्यस्वरसः । द्विपृथक्त्वादावबान्तरजातिर्वर्तत एव द्वित्वत्वादिजातिस्तु न वर्तते तद्विशिष्टबुद्धेर्द्वित्वादिगुणाधीनतयैवोपपत्तेरित्याचार्याः ।

अत्र २८४ सूत्रम् ।

( १० ) संयोगप्रकरणम् ।

संयोगमाह संयोग इति । इदमनेन संयुक्तमिति सार्वजनीनबुद्धेः रूपादिप्रतीतिविलक्षणत्वात्तन्निमित्तः संयोगो गुण इति संयोगे प्रत्यक्षं प्रमाणं दर्शितम् । द्रव्यासमवायिकारणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं च लक्षणम् । कार्यद्वारा तर्कमाह स चेति । अवयवसंयोगो द्रव्ये, आत्ममनस्संयोगो बुद्ध्यादौ भेर्याकाशसंयोगश्च शब्दे गुणे, प्रयत्नवदात्महस्तसंयोगो हस्तक्रियायां हेतुरित्यादिकं स्वयं वेदितव्यम् । तथाच संयोगाभावे द्रव्यगुणकर्माणि न स्युः कारणाभावात् भावे वा सर्वदा भवेयुः द्रव्यादीनां पूर्वसिद्धानां सदा तुल्यरूपत्वात्क्षणभङ्गपरिणामवादयोरपास्तत्वादिति तर्को दर्शित इति भावः । द्रव्यारम्भकत्वमाह द्रव्यारम्भ इति । पटे उत्पादयितव्ये तन्तवः संयोगार्थं कारणान्तरमपेक्षन्ते तस्मिन् सति न किञ्चिदिति कारणान्तरानपेक्षस्तन्तुसंयोगः पटोत्पत्तौ कारणमिति भावः । अत्र सूत्रकारसम्मतिमाह तथेति । तथा चात्र भवतीति वर्तमानप्रतीतिहेतुत्वेनाभिधीयमानेषु तन्तुषु संयुक्तेषु अनपेक्षशब्दप्रयोगात्संयोगो द्रव्यारम्भेऽनपेक्ष इति तात्पर्यम् । सापेक्षेभ्य इति चानुत्पन्ने संयोगे भविष्यत्तामादाय तन्तुषु प्रयोगो द्रष्टव्यः । गुणकर्मारम्भे संयोगस्य सापेक्षत्वमेव नानपेक्षत्वमि-

संयुक्तसमवायाद अग्नेर्वैशेषिकमिति वचनात् ।

अथ कथंलक्षणः कतिविधश्चेति ?

अप्राप्तयोः प्राप्तिः संयोगः । स च त्रिविधः—अन्यतरकर्मजः उभयकर्मजः संयोगजश्च । तत्रान्यतरकर्मजः—क्रियावता निष्क्रियस्य यथा स्थाणोः श्येनेन विभूनां च मूर्त्तैः । उभयकर्मजो—विरुद्धदिक्क्रिययोः सन्निपातः यथा मल्लयोर्मेषयोर्वा । संयोगजस्तूत्पन्नमात्रस्य चिरोत्पन्नस्य वा निष्क्रियस्य कारणसंयोगिभिरकारणैः कारणाकारणसंयोगपूर्वकः कार्याकार्यगतः संयोगः ।

---

त्यत्र सूत्रकारं संवादयति संयुक्तसमवायादिति । अस्यार्थः पार्थिवपरमाणुसंयुक्ते वह्नौ समवायादग्निगतमुष्णत्वं पाकजरूपादिनिमित्तं भवतीति । तथा च स्वानुत्पादकौष्ण्यापेक्षत्वात्संयोगोऽत्र सापेक्ष एव गुणोत्पादक इति भावः । एवं क्रियायामपि नोदनाभिघातौ स्पर्शवेगादिसापेक्षौ संयोगाविति ध्येयम् ।

अत्र ३६२ ३६६ ३६७ ३६८ २७ २९ सूत्राणि, १८१ सूत्रात् १८६ पर्यन्तं, १९० १९४ १९७ १९९ २०३ २०४ २०६ २१२ सूत्राणि च द्रष्टव्यानि ।

अथेति प्रश्ने । उत्तरमप्राप्तयोरिति । अप्राप्तयोरिति समवायव्यावृत्तिः जातः सम्बद्धश्चेति एककालत्वात् । विद्यमानयोरप्राप्तयोः संश्लेषस्संयोग इति यावत् । अन्यतरकर्मज इति । संयोग इति शेषः । क्रियावता द्रव्येण निष्क्रियस्य द्रव्यस्य संयोगोऽन्यतरकर्मज इत्यर्थः । निष्क्रियत्वोक्तिश्च विवक्षितसंयोगहेतुकर्माभिप्रायेणाऽन्यथाऽग्रे मन्दं गच्छतोऽपरेण तत्पृष्ठमनुधावताऽन्यतरकर्मजन्ये संयोगेऽतिप्रसङ्गापातात् । मूर्त्तैरित्यादितृतीयान्तानां संयोग इत्यत्रान्वयः । विरुद्धेति । विरुद्धयोर्दिशोः क्रिया ययोर्द्रव्ययोस्ते विरुद्धदिक्क्रिये तयोः संनिपातः उभयकर्मजः संयोगः प्रत्येकमन्यत्र द्वयोरपि सामर्थ्यावधारणात् । कारणाकारणेति । कारणमत्र स-

स चैकस्माद् द्वाभ्यां बहुभ्यश्च भवति । एकस्मात् तावत् तन्तुवीरणसंयोगात् द्वितन्तुकवीरणसंयोगः । द्वाभ्यां तन्त्वाकाशसंयोगाभ्यामेको द्वितन्तुकाकाशसंयोगः । बहुभ्यश्च तन्तुतुरीसंयोगेभ्य एकः पटतुरीसंयोगः ।

एकस्माच्च द्वयोरुत्पत्तिः । कथम् ? यदा पार्थिवाप्ययोरण्वोः संयोगे सत्यन्येन पार्थिवेन पार्थिवस्यान्येनाप्येन चाप्यस्य युगपत्संयोगौ भवतस्तदा ताभ्यां संयोगाभ्यां पार्थिवाप्ये द्व्यणुके युगपदारभ्येते । ततो यस्मिन् काले द्व्यणुकयोः कारणगुणपूर्वक्रमेण रूपाद्युत्पत्तिः तस्मिन्नेव काले इतरेतरकारणाकारणगतात्

---

मवायिकारणमकारणं च तद्भिन्नं ग्राह्यम । तच्चोदाहरणे व्यक्तीभविष्यति ।

स चेति । तथा च संयोगजः संयोगस्त्रिविध इत्यर्थः । प्रथममाह एकस्मादिति । वीरणसंयुक्ततन्तोस्तन्त्वन्तरसंयोगादुत्पन्नस्य द्वितन्तुकद्रव्यस्य निष्क्रियस्य समवायिकारणभूतैकतन्तुसंयोगिना वीरणेन संयोगः पूर्वादेकस्मात्तन्तुवीरणसंयोगाज्जायते स च कारणाकारणतन्तुवीरणसंयोगपूर्वकः कार्याकार्यद्वितन्तुकवीरणसमवेतश्चेति भावः । द्वितीयमाह द्वाभ्यामिति । द्वितन्तुकद्रव्याकाशसंयोगे द्वितन्तुककारणयोस्तन्त्वोराकाशसंयोगावेव हेतूनान्यदिति भावः । तृतीयमाह बहुभ्यश्चेति ।

एकस्मात्संयोगाद्द्वयोस्संयोगयोरुत्पत्तिः कथमिति प्रश्ने उत्तरमाह यदेति । अन्येन पार्थिवेनेति । अणुनेति शेषः । एवमग्रेपि । आरभ्येते इति । समानजातियसंयोगस्य द्रव्यान्तरोत्पत्तिहेतुकत्वादित्यर्थः । पार्थिवाप्यद्व्यणुकद्वयोत्पत्तिकारणोक्तविधसंयोगद्वयाद्युगपत्संयोगयोरुत्पत्तिमाह तत इति । इत-

संयोगादितरेतरकार्याकार्यगतौ संयोगौ युगपदुत्पद्येते। किं कारणम्? कारणसंयोगिना ह्यकारणेन कार्यमवश्यं संयुज्यते इति न्यायः। अतः पार्थिवं द्व्यणुकं कारणसंयोगिनाऽप्येनाणुना सम्बध्यते आप्यमपि द्व्यणुकं कारणसंयोगिना पार्थिवेनेति। अथ द्व्यणुकयोरितरेतरकारणाकारणसम्बद्धयोः कथं परस्परतः सम्बन्ध इति? तयोरपि संयोगजाभ्यां संयोगाभ्यां सम्बन्ध इति।

---

रेतरेति। इतरस्य पार्थिवद्व्यणुकस्य कारणं पार्थिवः परमाणुरकारणमाप्यः परमाणुः, तथेतरस्याऽऽप्यद्व्यणुकस्य कारणमाप्यः परमाणुरकारणं पार्थिवः परमाणुस्तयोर्गतात्समवेतात् इतरस्य पार्थिवपरमाणोः कार्यं पार्थिवद्व्यणुकमकार्यमाप्यः परमाणुस्तथेतरस्याप्यपरमाणोः कार्यमाप्यद्व्यणुकमकार्यं पार्थिवपरमाणुस्तद्गतो-तत्समवेतौ—पार्थिवपरमाण्वाप्यद्व्यणुकसंयोग एकः आप्यपरमाणु-पार्थिवद्व्यणुकसंयोगश्चापरो युगपज्जायत इत्यर्थः। पार्थिवाप्ययोर्द्व्यणुकयोर्विजातीयपरमाणुसंयोगे प्रमाणं पृच्छति किंकारणमिति। न्याय इति। अनुमानन्तत्र प्रमाणमित्यर्थः तत्प्रयोगश्च—पार्थिवद्व्यणुकमाप्यपरमाणुसंयोगि तदकार्यत्वे सति तत्संयोगिकार्यत्वात् यथा तुरीसंयुक्तकार्यः पटस्तुर्येति। एवमग्रेऽपि। दृष्टान्तोपनयौ हृदि निधाय निगमनमाह अत इति। पृच्छति अथेति। द्व्यणुकयोः पार्थिवाप्ययोः कथं सम्बन्ध इत्यन्वयः। पार्थिवद्व्यणुकस्य स्वकीयाकारणेनाऽऽप्यद्व्यणुकहेतुना ऽऽप्यपरमाणुना सम्बद्धस्य, एवमाप्यद्व्यणुकस्यापि स्वकीयाकारणपार्थिवद्व्यणुकहेतुपार्थिवपरमाणुसम्बद्धस्य कथं सम्बन्ध इति प्रश्नार्थः। उत्तरयति तयोरिति। पार्थिवद्व्यणुकस्याप्येन परमाणुना यः संयोगजस्संयोगो यश्चाप्यद्व्यणुकस्य पार्थिवपरमाणुना संयोगजसंयोगस्ताभ्यां द्व्यणुकयोः परस्परसंयोगो जायते कारणसंयोगिनेत्यादिपूर्वोक्तन्यायादिति भावः।

(१)नास्त्यजः संयोगो नित्यपरिमण्डलवत् पृथगनभिधानात्। यथा चतुर्विधं परिमाणमुत्पाद्यमुक्त्वाऽऽह नित्यं परिमण्डलमित्येवमन्यतरकर्मजादिसंयोगमुत्पाद्यमुक्त्वा पृथङ्नित्यं ब्रूयान्न त्वेवमब्रवीत् तस्मान्नास्त्यजः संयोगः। परमाणुभिराकाशादीनां प्रदेशवृत्तिरन्यतरकर्मजः संयोगः। विभूनां तु परस्परतः संयोगो नास्ति युतासिद्ध्यभावात्। सा पुनर्द्वयोरन्यतरस्य वा पृ-

---

(१)नित्यसंयोगस्य तुरीयस्य सत्त्वात्त्रिविध एव संयोग इति तुच्छमित्यपरमतप्रतिषेधायाऽऽह नास्तीति। नित्यपरमाणुवदिति व्यतिरेकिदृष्टान्तः। हेतुमाह पृथगनभिधानादिति। सर्वज्ञेन मुनिनेति शेषः। विवृणोति यथेति संयोग इत्यन्तम्। ननु नित्यत्वादप्राप्त्यभावाच्च परमाण्वाकाशसंयोगोऽपि नित्य एव कणादेन तु भ्रान्तेः पुरुषधर्मत्वान्नोक्त इत्याशङ्क्याह परमाणुभिरिति। प्रदेशवृत्तिरव्याप्यवृत्तिः अन्यतरकर्मजस्संयोगस्तथाच यथा महतो न्यग्रोधस्य मूलाग्रावयवव्यापिन एकस्य मूलादग्रमग्राच्च मूलं गच्छता पुरुषेण संयोग अन्यतरकर्मजस्तथा व्यापिनोऽप्याकाशस्य परमाणुना संयोगः परमाणुकर्मजस्तस्याव्याप्यवृत्तित्वादिति न परमाण्वाकाशसंयोगो नित्य इति भावः। नन्वाकाशममूर्तकालसंयुक्तं मूर्तद्रव्यसंयोगित्वात् शरीरवदिति अनुमानेन विभूनामपि संयोगः स्यात् न चासौ कर्मजस्तेषामक्रियत्वान्नापि संयोगजस्तेषां निरवयवत्वादत आह विभूनामिति। संयोगव्यापकयुतसिद्ध्यभावात्, आकाशादौ व्याप्यस्य संयोगस्याभाव इत्यर्थः। अनुमानन्तूभयपक्षतुल्यत्वादसाधनम् यथाऽनेन संयोगस्तथा विभागोऽपि विभूनां स्यात् उक्तहेतुदृष्टान्तयोः सत्त्वात् तत्तु न सम्भवति संयोगविभागयोरेकस्य नित्यत्वेनान्यतरस्यासम्भवादिति द्वयोरप्यसिद्धिः परस्परप्रतिबन्धादिति भावः। युतसिद्धिमाह सा पुनरिति। द्वयोः सम्बन्धिनोरन्यतरस्य वा सम्बन्धि-

९

थग्गतिमत्त्वं पृथगाश्रयाश्रयित्वं चेति ।

(१)विनाशस्तु सर्वस्य संयोगस्यैकार्थसमवेताद्वि-भागात्, क्वचिदाश्रयविनाशादपि । कथम् ? यदा त-न्त्वोः संयोगे सत्यन्यतरतन्त्वारम्भके अंशौ कर्मोत्प-द्यते तेन कर्मणा अंश्वन्तराद्विभागः क्रियते विभागाच्च तन्त्वारम्भकसंयोगविनाशः संयोगविनाशात् तन्तुवि-नाशस्तद्विनाशे तदाश्रितस्य तन्त्वन्तरसंयोगस्य विनाश इति ॥

## ( ११ ) विभागप्रकरणम् ।

(२)विभागो विभक्तप्रत्ययनिमित्तम् । शब्दवि-भागहेतुश्च ।

---

नः पृथग्गतिमत्त्वं विभागहेतुक्रियासम्बन्धः, युताश्रयाश्रयित्वं प-रस्परपरिहारेण पृथगाश्रयाश्रयित्वं च युतसिद्धिरित्यर्थः । पूर्वा नित्यानामपराऽनित्यानामिति कन्दलीकारः । अप्राप्तयोर्विद्यमान-तेति उभयसाधारणम् लक्षणम् । इयम् विभूनामुत्तरकाले प्राप्ति-कारणाभावान्नास्तीत्याचार्याः ।

(१)उत्पादं निरूप्य विनाशमाह विनाशस्त्विति । सर्वस्य त्रि-विधस्य । ययोः संयोगस्तयोरेव वर्त्तमानाद्विरोधिगुणाद्विभागान्नाश इत्यर्थः । विनाशकान्तरमाह क्वचिदिति । स्पष्टयति कथमित्यादिना । अवयवक्रियाविभागादिन्यायेन द्रव्यनाशे तदाश्रितरूपादिवत्संयो-गोपि विनश्यतीत्यर्थः । अत्र २९० सूत्रम् ।

( ११ ) विभागप्रकरणम् ।

(२)संयोगपूर्वकत्वाद्विभागस्य तदनन्तरं विभागमाह विभाग इति । स्वजनककर्मोत्पत्त्यधिकरणक्षणाव्यवहितोत्पत्तिकद्वित्तिगुणत्वसाक्षा-

(१)प्राप्तिपूर्विकाऽप्राप्तिर्विभागः। स च त्रिविधः—अन्यतरकर्मज उभयकर्मजो विभागजश्च विभाग इति। तत्रान्यतरकर्मजोभयकर्मजौ संयोगवत्। विभागजस्तु द्विविधः कारणविभागात् कारणाकारणविभागाच्च।

(२)तत्र कारणविभागात् तावत्-कार्याविष्टे कारणे

---

द्याप्यजातिमत्वं विभागत्वम्। अक्षरार्थस्तु पूर्ववत्। शब्दश्चेति प्रमाणकथनम्। संयोगाभावो विभाग इति केचित्। तन्नासति विभागे कस्मात्संयोगाभावः स्यात्। कर्मणेति चेत्न कर्मणो गुणविनाशेऽसामर्थ्यात् गुणानामेव तत्सामर्थ्यस्य दृष्टत्वात् संयोगाभावेन सर्वानुभवसिद्धविभक्तप्रत्ययापलापस्य कर्तुमशक्यत्वाच्च तथा च गुणान्तरमवश्यं कल्पनीयम्। अधिकं कणादरहस्यादौ द्रष्टव्यम्। कार्येण कारणानुमानमाह शब्दविभागहेतुश्चेति। प्रयोगश्च-पाट्यमानवंशदलशब्दः संयोगादिभिन्नहेतुकः संयोगाद्यनुपपद्यावुपजायमानत्वात् अवयविरूपवत् इत्यन्वयी। यन्नैवं तन्नैवं यथा संयोगजः शब्द इति व्यतिरेकी वा। विभागकार्यत्वं च वक्ष्यते।

अत्र २९१ ११० सूत्रे द्रष्टव्ये।

(१)लक्षणमाह प्राप्तिपूर्विकेति। न प्राप्तिरप्राप्तिः। प्राप्तिविरोधी गुण इत्यर्थः। ननु प्राप्त्या संयोगेन सहाऽस्य देशकृतः कालकृतः स्वरूपकृतो वा विरोधः स चानुपपन्न अत आह प्राप्तिपूर्विकेति। तथा च प्राप्तेर्वध्यताविभागस्य घातकत्वमनेन दर्शितम्, तेन संयोगविघातको गुणो विभाग इत्याचार्याः। भेदमाह स चेति। संयोगवदिति। श्यथाणुश्येनमल्लादूयुदाहरणमन्यतरोभयकर्मजं पूर्ववद्बोध्यमित्यर्थः। तृतीये विशेषमाह विभागजस्त्विति। संयोगजः संयोगः कारणाकारणसंयोगपूर्वक एकविध एव विभागजविभागस्तु कारणमात्रविभागपूर्वकः कारणाकारणविभागपूर्वकश्चेति द्विविध इत्यर्थः।

(२)तत्र प्रथममाह तत्रेति। तावदिति। विभागः कथ्यते इति शेषः। कार्येणाविष्टे व्याप्ते कारणे कर्मोत्पन्नं सत् यदा तस्य अव-

कर्मोत्पन्नं यदा तस्यावयवान्तराद्विभागं करोति न तदाऽऽकाशादिदेशात् यदा त्वाकाशादिदेशाद्विभागं करोति न तदावयवान्तरादिति स्थितिः । अतोऽवयवकर्मावयवान्तरादेव विभागमारभते ततो विभागाच्च द्रव्यारम्भकसंयोगविनाशः तस्मिन् विनष्टे कारणाभावात् कार्याभाव इत्यवयविविनाशः तदा कारणयोर्वर्तमानो विभागः कार्यविनाशविशिष्टं कालं स्वतन्त्रं वावयवमपेक्ष्य सक्रियस्यैवावयवस्य कार्यसंयुक्तादाकाशादिदेशाद्विभागमार-

---

यवस्यावयवान्तराद्विभागं द्रव्यारम्भकसंयोगविनाशकं करोति तदा द्रव्यानारम्भकादाकाशादिदेशाद्विभागं न करोति, यदा ताहगाकाशादिदेशाद्विभागं करोति न तदाऽवयवान्तराद् द्रव्यारम्भकाद्विभागं जनयतीति नियम इति भाष्यार्थः । तथा च द्रव्यारम्भकसंयोगाविरोधिविभागजनकं कर्म न द्रव्यारम्भकसंयोगविरोधिविभागजनकं यत्त्वेवं न तदविरोधिविभागजनकमिति विकसत्कमलकुड्मलदलादौ तद्दर्शनादिति भावः । ईदृङ्नियमे किमायातमत आहात इति । अवयवकर्म–कर्मविशेषः । द्रव्यारम्भकसंयोगविरोधिनमवयवान्तराद्विभागं करोति न तदविरोधिनमित्येवकारार्थः । विभागविशेषाद्द्रव्यारम्भकसंयोगविनाशस्तन्नाशे कारणाभावात्कार्याभाव इत्यवयविनाशः । नन्वेवमपि विभागजविभागः कथमायातः ? अत आह तदेति । ननूत्पन्नमात्रः कारणयोर्वर्तमानो विभागः कार्यसंयुक्तादाकाशादिदेशाद्विभागं कथं जनयेदत आह कार्यविनाशेति । अयमभिप्रायः–विभागेन विभागजननेऽवश्यं किञ्चिदपेक्षणीयम् अन्यथाऽनपेक्ष्य विभागजनने कर्मत्वापत्तेः । तस्मात्कार्यविनाशविशिष्टं कालं स्वतन्त्रमवयवं वाऽपेक्ष्य पूर्वोक्तो विभागः सक्रियस्यैवावयवस्य कार्यसंयुक्तादाकाशादिदेशाद्विभागं जनयतीति । कारणयोर्वर्तमानो विभागः सक्रियस्यैव विभागं करोतीत्यत्रोपपत्तिमाह न

भते न निष्क्रियस्य कारणाभावादुत्तरसंयोगानुत्पत्तावनुपभोग्यत्वप्रसङ्गः । न तु तदवयवकर्माकाशादिदेशाद्विभागं करोति तदारम्भकालातीतत्वात् । प्रदेशान्तरसंयोगं तु करोत्येव अकृतसंयोगस्य कर्मणः कालात्ययाभावादिति ।

(१)कारणाकारणविभागादपि कथम् ? यदा हस्ते कर्मोत्पन्नमवयवान्तराद् विभागमकुर्वदाकाशादिदेशेभ्यो वि-

---

निष्क्रियस्येति । विभागेन विभागजनने कर्मणो निमित्तत्वात्तदभावान्न निष्क्रियस्य विभाग इत्यर्थः । उपपत्त्यन्तरमाह उत्तरसंयोगानुत्पत्तावनुपभोग्यत्वप्रसङ्ग इति । उत्तरसंयोगो हि क्रियानिवृत्तेः कारणं स च विभागजविभागात्पूर्वसंयोगनिवृत्तौ स्यात् नहि पूर्वस्मिन् संयोगे सत्युत्तरसंयोगोत्पत्तिः संभवति । यदि च पूर्वमेव क्रिया निवर्तेत कारणाभावादुत्तरसंयोगानुत्पत्तौ कर्मणोऽनुपभोग्यत्वमपुरुषार्थत्वं च प्रसज्येतेति तात्पर्यम् । ननु तावत्कालं कर्मणोऽभ्युपगमे तदेवोत्तरं विभागमारभतां कृतं विभागेनेत्यत आह नन्विति । हेतुमाह तदेति । कर्मण एष स्वभावो यत् तदसमवायिकारणतया विभागमारभमाणं स्वोत्पत्त्यनन्तरक्षणे एवारभते न क्षणान्तरे स च तस्य विभागारम्भककालो द्वितीयविभागोत्पत्तिक्षणेऽतीत इति न तस्मादस्योत्पत्तिरिति भावः । नन्वेवमुत्तरसंयोगमपि बहुक्षणव्यवधानान्न जनयेदत आह प्रदेशान्तरसंयोगमिति । उत्तरसंयोगे कर्तव्ये पूर्वसंयोगः प्रतिबन्धकः नहि क्रिया प्राप्तापरित्यागेनाप्राप्तप्राप्तये समर्था ततस्तदभाव काल एव संयोगारम्भकालः स च नातीत इति तमारभत एवेत्यर्थः । इतिशब्दः कारणमात्रविभागप्रकरणसमाप्तिसूचकः ।

(१)कारणाकारणविभागजविभागं प्रश्नपूर्वकं व्युत्पादयति कारणाकारणेति । यदेति । कुतश्चित्कारणाद्धस्ते कर्मोत्पन्नं तस्य हस्तस्यावयवान्तराद्विभागमकुर्वदाकाशादिदेशेभ्यो विभागानारभ्यान्य-

भागानारभ्य प्रदेशान्तरे संयोगानारभते तदा ते कारणाकारणविभागाः कर्म यां दिशं प्रति कार्यारम्भाभिमुखं तामपेक्ष्य कार्याकार्यविभागानारभन्ते, तदनन्तरं कारणाकारणसंयोगाच्च कार्याकार्यसंयोगानिति । यदि कारणविभागानन्तरं कार्यविभागोत्पत्तिः कारणसंयोगानन्तरं कार्यसंयोगोत्पत्तिः । नन्वेवमवयवावयविनोर्युतसिद्धिदोषप्रसङ्गः इति । न । युतसिद्ध्यपरिज्ञानात् । सा

---

प्रदेशैस्सह यदा संयोगं करोति तदा ते शरीरकारणस्य हस्तस्याकारणानामाकाशादिदेशानां च विभागाः, कर्म यस्यां दिशि कार्यकरणाभिमुखमुत्तरसंयोगजनकं तां दिशमपेक्ष्य हस्तकार्यस्य शरीरस्याकार्याणामाकाशादिदेशानां विभागानारभन्ते दृश्यते हि कुड्यादिदेशाद्धस्तस्य विभागे शरीरस्य विभागो भवतीति न चायं शरीरक्रियाकार्यस्तदानीं शरीरस्याक्रियत्वात् नापि हस्तक्रियाकार्यो व्यधिकरणकर्मणो विभागहेतुत्वादर्शनात् । अतः कारणाकारणविभागस्तस्य कारणं कल्प्यत इत्यर्थः । अत्र समस्तविभुद्रव्यवाचकमादिपदपम् अन्यथा विभागानिति बहुवचनमसङ्गतं स्यात् । प्रसङ्गतः प्राप्तं विभागजविभानानन्तरभाविनं संयोगजसंयोगमुक्तमपि स्मारयति तदनन्तरमिति । विभागजविभागानन्तरं शरीरकारणस्य हस्तस्याकारणानामाकाशादिदेशानां कर्मजात्संयोगात् हस्तकार्यस्य शरीरस्य निष्क्रियस्याकार्याणामाकाशादिदेशानां संयोगानारभन्ते, न हस्तकर्म तस्य स्वाश्रयदेशान्तरप्राप्तिहेतुत्वादिति भावः । अत्र शङ्कते यदीति प्रसङ्ग इतीत्यन्तेन। यदि हस्ताश्रितं शरीरं तदा हस्ते गच्छति तदपि सहैव गच्छेत् तथासति च संयोगविभागक्रमो न स्यात्, क्रमेण चेदनयोः संयोगविभागौ न तदा हस्तगमने देहगमनमिति तस्य स्वातन्त्र्यप्रसक्तिरिति शङ्कार्थः । परिहरति नेति । त्वया युतसिद्धिर्न ज्ञातेति भावः । सा का इत्यत

पुनर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वमियन्तु नित्यानाम् अनित्यानां तु युतेष्वाश्रयेषु समवायो युतसिद्धिरिति । त्वगिन्द्रियशरीरयोः पृथग्गतिमत्त्वं नास्ति युतेष्वाश्रयेषु समवायोऽस्तीति परस्परेण संयोगः सिद्धः । अण्वाकाशयोस्त्वाश्रयान्तराभावेऽप्यन्यतरस्य पृथग्गतिमत्त्वात् संयोगविभागौ सिद्धौ । तन्तुपटयोरनित्ययोराश्रयान्तराभावात् परस्परतः संयोगविभागाभाव इति । दिगादीनान्तु पृथग्गतिमत्त्वाभावादिति परस्परेण संयोगविभागाभाव इति ।

---

आह सेति । द्वयोरेकस्य वा परस्परसंयोगविभागहेतुकर्मसमवाययोग्यता नित्यानामेव युतसिद्धिः द्वयोः परमाण्वोराकाशपरमाण्वोरन्यतरस्य च पृथग्गमनदर्शनात् । द्वयोरन्यतरस्य वा परस्परपरिहारेणान्यत्राश्रये समवायोऽनित्यानां युतसिद्धिः अनित्यानां द्वयोः शकुन्याकाशयोरन्यतरस्य च शकुनेः पृथगाश्रयाश्रयित्वरूपसमवायदर्शनात् । अनित्यानां पृथग्गतिमत्वं कुतो नेत्यत आह त्वगिन्द्रियेति । तथा च तयोः पृथग्गमनाभावादयुतसिद्धता स्यात्, ततश्चैतयोः युतसिद्धिप्रयुक्तः परस्परसंयोगो न स्यात् इति भावः । प्रथमयुतसिद्धिलक्षणप्रयोजनमाह अण्वाकाशयोरिति । उक्तमेवार्थं दृढयितुमन्वयं प्रदर्श्य द्विविधयुतसिद्ध्यभावे संयोगविभागाभाव इत्यत्र व्यतिरेकं दर्शयति तन्तुपटयोरिति । विभूनान्तु द्वयोरन्यतरस्य वा पृथग्गमनाभावान्न संयोगोऽतश्च न विभागः किन्तु स्वरूपस्थितिमात्रमित्याह दिगादीनामिति । इतीत्युक्तसमाप्तौ हस्ते गच्छति शरीरं न गच्छतीत्येतावता न युतसिद्धिर्यदि तु हस्तशरीरयोः पृथगाश्रयाश्रयित्वं स्यात् तदा भवेदनयोर्युतसिद्धता तत्तु नास्ति शरीरस्य हस्ते समवेतत्वादित्युत्तरार्थः ।

(१)विनाशस्तु सर्वस्य विभागस्य क्षणिकत्वादुत्तरसंयोगावधिसद्भावात् क्षणिक इति। न तु संयोगवद्ययोरेव विभागस्तयोरेव संयोगाद्विनाशो भवति। कस्मात् ? संयुक्तप्रत्ययवद्विभक्तप्रत्ययानुवृत्त्यभावात्। तस्मादुत्तरसंयोगावधिसद्भावात् क्षणिक इति।

---

(१)एवं विभागोत्पत्तिमभिधाय तद्विनाशं व्युत्पादयति विनाशस्त्विति। सर्वस्येति त्रिविधस्येत्यर्थः। विभागस्याशुतरविनाशित्वे हेतुमाहोत्तरसंयोगावधिसद्भावादिति। उत्तरसंयोगोऽवधिः सीमा तस्य सद्भावात्क्षणिको विभाग इत्यर्थः। अयं कारको हेतुः। ज्ञापकमाह क्षणिकत्वादिति। उत्तरसंयोगावधेराशुतरविनाशस्य प्रत्यक्षसिद्धत्वादित्यर्थ इति आचार्याः। आशुतरविनाश्युत्तरसंयोगो विभागस्यावधिरिति कुतस्तत्राह नत्विति। विभागाधारयोर्द्रव्ययोः पुनः संयोगेन विभागविनाशे तस्य चिरकालस्थायित्वं स्यादित्यर्थः। नन्वेवं सति किमनिष्टं स्यादिति प्रश्नपूर्वकं समाधत्ते संयुक्तप्रत्ययवदिति। यथा संयुक्तप्रत्ययश्चिरस्थायी नैवं स्वाश्रयस्य देशान्तरसंयोगे भूते विभक्तप्रत्ययानुवृत्तिरतस्तस्य संयोगमात्रेणैव निवृत्तिरिति भावः। उपसंहरति तस्मादिति। इदमत्र तात्पर्यम्—संयोगप्रत्यभिज्ञाया जागरूकत्वात् संयोगश्चिरमनुवर्तते एव नहि यस्य कस्यचिद्विभागात् संयोगो विनश्यति अवयवसंयोगविनाशे द्रव्यानुत्पादप्रसङ्गात् नोदनाद्यनुपपत्तेश्च, तस्माद्ययोः संयोगस्तयोरेव विभागात्सत्याश्रये तस्य विनाश इति स्थितिः। विभागस्य प्रत्ययानुवृत्त्यभावाच्चिरकालस्थायित्वमनुपपन्नं किमपि निवर्तकमिष्यते। न च कर्मैवास्य निवर्तकमुत्तरविभागानुत्पत्तिप्रसङ्गात्तस्मादुत्तरसंयोगादेवास्य विनाशः नहि उत्तरसंयोगे च संयुक्तप्रत्ययवद्विभक्तप्रत्ययानुवृत्तिस्तस्मात्क्षणिक इति। अधिकं किरणावल्यादौ द्रष्टव्यम्।

(१)क्वचिच्चाश्रयविनाशादेव विनश्यतीति । कथम् ? यदा द्वितन्तुककारणावयवे अंशौ कर्मोत्पन्नमंश्वन्तराद्विभागमारभते तदैव तन्त्वन्तरेऽपि कर्मोत्पद्यते विभागाच्च तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा तन्त्वन्तराद्विभागः क्रियत इत्येकः कालः । ततो यस्मिन्नेव काले विभागात् तन्तुसंयोगविनाशः तस्मिन्नेव काले संयोगविनाशात् तन्तुविनाशस्तस्मिन् विनष्टे तदाश्रितस्य तन्त्वन्तरविभागस्य विनाश इति । एवं तर्ह्युत्तरविभागानुत्पत्तिप्रसङ्गः कारणविभागाभावात् ततः, प्रदेशान्तरसंयोगवति संयोगाभाव इत्यतो विरोधिगुणासम्भवात् कर्मणश्चिरकालावस्थायित्वं नित्यद्रव्यसमवेतस्य च नि-

---

(१)एवं साधारणं विनाशकमुक्त्वाऽसाधारणमाह क्वचिदिति । प्रश्नपूर्वकं तदेव व्युत्पादयति यदेति । द्वितन्तुकपटकारणं तन्तुस्तदवयवेंशौ कर्मोत्पन्नमंश्वन्तरस्यांशोर्विभागमारभते तदैव तन्त्वन्तरेपि कर्म विभागाच्च तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा तन्त्वन्तराद्विभागश्चेत्येकः कालः । ततो यदा विभागात्तन्तुसंयोगविनाशः तदैवांश्वोः संयोगविनाशात्तन्तुविनाशस्तन्नाशे तदाश्रितस्य तन्त्वन्तराविभागस्य विनाश इत्याश्रयनाशाद्विभागविनाश इत्यर्थः । पुनः शङ्कते एवं तर्हीति । कारणविभागः द्रव्यनाशविशिष्टकालं स्वतन्त्रं वाऽवयवमपेक्ष्योत्तरविभागं करोति इति प्राक् सिद्धान्तितम् स चाश्रयविनाशादपेक्षाकारणमप्राप्यैव विनष्ट इति कारणाभावादुत्तरविभागानुत्पत्तिः प्रसज्यत इत्यर्थः । ततः किमत आह तत इति । उत्तरविभागोत्पत्त्या पूर्वसंयोगनिवृत्तौ उत्तरसंयोगः स्यात् प्रतिबन्धकपूर्वसंयोगसद्भावे उत्तरसंयोगो नोत्पद्यत इत्यर्थः ।

त्यत्वमिति दोषः। कथम्? यदाप्यद्व्यणुकारम्भकपरमाणौ कर्मोत्पन्नमण्वन्तराद्विभागं करोति तदैवाण्वन्तरेऽपि कर्म ततो यस्मिन्नेव काले विभागाद् द्रव्यारम्भकसंयोगविनाशः तदैवाण्वन्तरकर्मणा द्व्यणुकाण्वोर्विभागः क्रियते ततो यस्मिन्नेव काले विभागात् द्व्यणुकाणुसंयोगस्य विनाशः तस्मिन्नेव काले संयोगविनाशात् द्व्यणुकस्य विनाशः तस्मिन् विनष्टे तदाश्रितस्य द्व्यणुकाणुविभागस्य विनाशः। ततश्च विरोधिगुणासम्भवान्नित्यद्रव्यसमवेतकर्मणो नित्यत्वमिति। तन्त्वंश्वन्तराद्विभागाद्विभाग इत्यदोषः। आश्रयविनाशात्तन्त्वंशेव विभागो विनष्टो न तन्त्वंश्वन्तरविभाग इति एतस्मादुत्तरो विभागो जायते

---

ततोऽपि किमत आह अत इति। उत्तरसंयोगस्य विनाशकस्याभावाद्यावदाश्रयविनाशं कर्मावतिष्ठेतेत्यर्थः। एतच्चानिष्टं प्रमाणबाधितत्वात्। नित्यत्वमपि कर्मणः स्यादित्याह नित्यद्रव्येति। तदेव प्रश्नपूर्वकं व्युत्पादयति कथं यदेति नित्यत्वमित्यन्तेन। अण्वन्तरादारम्भकसंयोगिनः। अण्वन्तरेऽनारम्भकसंयोगिनि। द्व्यणुकारम्भकपरमाणुकर्मणा द्रव्यारम्भकसंयोगविरोधिविभागोत्पादसमकालमनारम्भककर्मचिन्तनादेतल्लभ्यत इति सङ्क्षेपः। अक्षरार्थः स्पष्टः। परिहरति तन्त्वंश्वन्तरेति। विभाग उत्तरो विभागः, इत्यतो हेतोः कर्मणः कालान्तरावस्थायित्वमित्यदोष इत्यर्थः। एतद्विशदयति आश्रयेति। यदा तन्तौ वर्तमानेन कर्मणा तन्त्वन्तराद्विभागः क्रियते तदा तदवयवादंशोरपि विभागः क्रियते अङ्गुलिकर्मणा कुड्यविभागसमकालं कुड्यावयवविभागवत्, स च विभागो विनाशकाभावादस्त्येव तस्मादुत्तरो विभागः संजायते अ-

अङ्गुल्याकाशविभागाच्छरीराकाशविभागवत् तस्मिन्नेव काले कर्म संयोगं कृत्वा विनश्यतीत्यदोषः ।

(१)अथवा अंश्वन्तरविभागोत्पत्तिसमकालं तस्मिन्नेव तन्तौ कर्मोत्पद्यते ततोंऽश्वन्तरविभागात् तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा च तन्त्वन्तराद्विभागः क्रियते इत्येकः कालः । ततः संयोगविनाशात् तन्तुविनाशः तद्विनाशाच्च तदाश्रितयोर्विभागकर्मणोर्युगपद्विनाशः ।

(२)तन्तुवीरणयोर्वा संयोगे सति द्रव्यानुत्पत्तौ पूर्वोक्तेन विधानेनाश्रयविनाशसंयोगाभ्यां तन्तुवीरणविभागवि-

---

ङ्गुल्याकाशविभागाच्छरीराकाशविभागवदिति भावः । तस्मिन्नेवेति । उत्तरविभागकाल इत्यर्थः तथाच पूर्वसंयोगरूपप्रतिबन्धकाभावे तन्तुसमवेतं कर्मोत्तरसंयोगं कृत्वा विनश्यतीत्यदोष इति परिहारार्थः ।

(१)प्रकारान्तरेणाश्रयनाशाद्विभागनाशमाहाथवेति । तथा चास्मिन्पक्षे यत्रैवावयवे क्रियाविभाग आरब्धस्तस्यैवावयवक्रियाविभागादिन्यायेन विनाशात् सह कर्मणा विभागविनाश इति भावः । अक्षरार्थः स्पष्टः ।

(२)एवमुत्तरसंयोगादाश्रयनाशाच्च प्रत्येकं विभागनाशं व्युत्पाद्य द्वाभ्यां समुच्चिताभ्यां तमाह तन्तुवीरणयोर्वेति । पूर्वोक्तेन विधानेनेति । तन्त्वारम्भकांशौ कर्मोत्पत्तिसमकालं वीरणे कर्म ततोंऽशुक्रिययांश्वन्तराद्विभागो वीरणकर्मणा च तस्य विभज्यमानावयवेन तन्तुनाऽऽकाशदेशेन च समं विभागः ततोंऽशुविभागादंशुसंयोगनाशो वीरणविभागाच्च तन्तुवीरणसंयोगस्याकाशवीरणसंयोगस्य च विनाशः ततोंऽशुसंयोगविनाशात्तन्तुविनाशो वीरणस्य चोत्तरसंयोगोऽत उत्तरसंयोगाश्रयनाशाभ्यां तन्तुवीरणविभागनाश इति पूर्वोक्तप्रक्रियाऽत्र द्रष्टव्येत्यर्थः ।

नाश इति ॥

(१२) परत्वापरत्वप्रकरणम् ।

(१)परत्वमपरत्वं च परापराभिधानप्रत्ययनिमित्तम् । तत्तु द्विविधं (२)दिक्कृतं कालकृतं च । तत्र दिक्कृतं दिग्विशेषप्रत्यायकम् । कालकृतं च वयोभेदप्रत्यायकम् ।

तत्र दिक्कृतस्योत्पत्तिरभिधीयते । कथम्? (३)एकस्यां

अत्र (२९१) सूत्रं प्रकरणसमाप्तिपर्यन्तं द्रष्टव्यम् ।

(१२)परत्वापरत्वप्रकरणम् ।

(१)परस्परानुविद्धव्यवहारकारणतया व्युत्पत्तिवैशद्यार्थं संक्षेपार्थं चैकग्रन्थेन परत्वापरत्वं व्युत्पादयति परत्वमपरत्वञ्चेति । यथासंख्यं परापराभिधानयोः परापरप्रत्यययोश्च निमित्तं विशेषणं । यद्विशिष्टे द्रव्ये परमित्यभिधानं प्रत्ययो वा तत्परत्वम् यद्विशिष्टे द्रव्येऽपरमित्यभिधानं प्रत्ययो वा तदपरत्वमिति लक्षणं प्रमाणं च बोध्यम् । ननु दैशिकयोस्तयोः किं प्रमाणं परापरबुद्ध्योः संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वाभ्यामन्यथासिद्धेरिति चेत् न तथासति प्रमातर्यपि तद्व्यवहारप्रसङ्गात् भवति हि काशी मत्तः परेति धीर्न तु काशीतोऽहं पर इति । यथा भेर्याकाशसंयोग आकाश एव शब्दं जनयति न भेर्याम् तथा संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वाऽविशेषेपि कारणशक्तिनियमात्प्रमेय एव परत्वापरत्वयोरुत्पादो न प्रमातरीति संक्षेपः । अत्र (३०२) सूत्रम् ।

(२)कारणभेदाद्भेदमाह दिक्कृतं कालकृतं चेति । दिक्पिण्डसंयोगकृतं दिक्कृतं कालपिण्डसंयोगकृतं कालकृतञ्चेत्यर्थः । कार्यभेद उक्तभेदनिमित्तमित्याह दिक्कृतं दिग्विशेषप्रत्यायकं कालकृतं वयोभेदप्रत्यायकमिति ।

(३)तयोर्दिक्कृतपरत्वापरत्वोत्पत्तिमाह एकस्यामिति । एकस्यां दिशि प्राच्यामवस्थितयोः पिण्डयोर्मध्ये एकस्य द्रष्टुः

दिश्यवस्थितयोः पिण्डयोः संयुक्तसंयोगबहुत्वभावे सत्येकस्य द्रष्टुः सन्निकृष्टमवधिं कृत्वा एतस्माद्विप्रकृष्टोऽयमिति परत्वाधारेऽसन्निकृष्टा बुद्धिरुत्पद्यते। ततस्तामपेक्ष्य परेण दिक्प्रदेशेन संयोगात् परत्वस्योत्पत्तिः। तथा विप्रकृष्टं चावधिं कृत्वा एतस्मात् सन्निकृष्टोऽयमित्यपरत्वाधारे इतरस्मिन् सन्निकृष्टा बुद्धिरुत्पद्यते। ततस्तामपेक्ष्यापरेण दिक्प्रदेशेन संयोगादपरत्वस्योत्पत्तिः।

(१)कालकृतयोरपि कथम्? वर्तमानकालयोरनियत-

---

संयुक्तेन भूप्रदेशेन सहापरस्य प्रदेशस्य संयोगः तेनापि सममपरस्येति संयुक्तसंयोगानां बहुत्वे सत्यल्पसंयोगवन्तं पिण्डं संनिकृष्टमवधिं कृत्वैतस्मात् पिण्डाद्विप्रकृष्टोऽयमिति संयोगभूयस्त्ववति भविष्यतः परत्वस्याधारे पिण्डे विप्रकृष्टा बुद्धिरुदेति ततस्तां बुद्धिमपेक्ष्य परेण संयोगभूयस्त्ववता दिक्प्रदेशेन संयोगादसमवायिकारणाद्विप्रकृष्टे पिंडे समवायिकारणे परत्वोत्पत्तिरित्यर्थः। एवं द्रष्टुः स्वशरीरापेक्षया संयुक्तसंयोगभूयस्त्ववन्तं विप्रकृष्टमवधिं कृत्वेतरत्र संयुक्तसंयोगाल्पीयस्त्वयुक्ते सनिकृष्टा बुद्धिरुदेति तां निमित्तीकृत्यापरेण संयुक्तसंयोगाल्पीयस्त्वविशिष्टेन दिक्प्रदेशेन सह संयोगादसमवायिनः संनिकृष्टपिण्डे समवायिन्यपरत्वोत्पत्तिर्बोध्या। अत्र एकदिङ्नियमान्न सर्वत्र, एकद्रष्टृनियमान्न सर्वथा, अपेक्षाबुद्धिनियमान्न सर्वदा परत्वाद्युत्पाद इत्यवधेयम्। सनिकृष्टत्वविप्रकृष्टत्वयोरपेक्षाबुद्धिविशेषयोश्च स्वकारणत उत्पत्तेः स्वप्रमाणात्प्रतीतेश्च परस्परानपेक्षत्वान्नेतरेतराश्रयदोष इत्याचार्याः।

(१)एवं समवाय्यसमवायिनिमित्तेभ्यः पिण्डदिक्पिण्डसंयोगापेक्षाबुद्धिभ्यः दिक्कृतपरत्वापरत्वोत्पत्तिमुक्त्वा कालकृतयोस्तयोरुत्पत्तिमाह कालकृतयोरपीति। कथमित्याक्षेपे। समाधानमाह वर्तमानकालयोरिति। अवर्तमानस्य समवायित्वेऽवधित्वमसम्भवी-

दिग्देशसंयुक्तयोर्युवस्थविरयो रूढश्मश्रुकार्कश्यवलिपलितादिसान्निध्ये सत्येकस्य द्रष्टुर्युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते। ततस्तामपेक्ष्य परेण कालप्रदेशेन संयोगात् परत्वस्योत्पत्तिः। स्थविरं चावधिं कृत्वा यूनि सन्निकृष्टा बुद्धिरुत्पद्यते। ततस्तामपेक्ष्यापरेण कालप्रदेशेन संयोगादपरत्वस्योत्पत्तिरिति।

(१)विनाशस्त्वपेक्षाबुद्धिसंयोगद्रव्यनाशात्। अपेक्षाबुद्धिविनाशात् तावदुत्पन्ने परत्वे यस्मिन् काले

---

ति वर्तमानयोरित्युक्तम्। दिक्कृतव्यवच्छेदायानियतादिग्देशेति। तथा चानियतदिग्देशयोरेकदिगवस्थितयोर्भिन्नदिगवस्थितयोर्वा युवस्थविरयो रूढश्मश्रुकार्कश्यवलिपलितानां कालविप्रकर्षलिङ्गानां सांनिध्ये सत्येकस्य द्रष्टुर्युवानं रूढश्मश्रुकार्कश्याद्यभावानुमितमल्पोत्पत्तिकालमवधिं कृत्वा रूढश्मश्रुवलिपलितादियुक्ते स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते तां बुद्धिमपेक्ष्य परेणादित्यपरिवर्तनभूयस्त्ववता कालप्रदेशेन संयोगादसमवायिकारणात् तस्मिन्स्थविरे समवायिनि परत्वस्योत्पत्तिः। स्थविरं चावधिं कृत्वा यूनि संनिकृष्टा बुद्धिरुत्पद्यते तां बुद्धिमपेक्ष्यापरेणाल्पादित्यपरिवर्तनोपलक्षितेन कालप्रदेशेन संयोगादसमवायिकारणात् यूनि समवायिनि अपरत्वस्योत्पत्तिरित्यर्थः। पलितादीत्यत्र परिमाणसामर्थ्यांऽनतीन्द्रियापाटवविशेषा आदिपदग्राह्याः। बहुतरतपनपरिस्पन्दान्तरितजन्मत्वं विप्रकृष्टत्वम् अल्पतरतमोपहवहनव्यवहितजन्मत्वं सनिकृष्टत्वं चात्र बोध्यम् इति किरणावली (अत्र ३०३ सूत्रम्)

(१)एवमुत्पत्तिं निरूप्य विनाशमाह विनाशस्त्विति। स च—

अपेक्षाबुद्धिसंयोगद्रव्यसंयोगनाशनात्।
पृथक् द्वाभ्यां च सर्वेभ्यो विनाशः सप्तधाऽनयोः॥

इत्युक्तरीत्या सप्तविधो ज्ञेयः। तत्रापेक्षाबुद्धिविनाशहेतुकन्तमा-

सामान्यबुद्धिरुत्पन्ना भवति ततोऽपेक्षाबुद्धेर्विनश्यत्ता सामान्यज्ञानतत्सम्बन्धेभ्यः परत्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः । ततोऽपेक्षाबुद्धेर्विनाशो गुणबुद्धेश्चोत्पत्तिः ततोऽपेक्षाबुद्धिविनाशाद्गुणस्य विनश्यत्ता गुणज्ञानतत्सम्बन्धेभ्यो द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः । ततो द्रव्यबुद्धेरुत्पत्तिर्गुणस्य विनाश इति ।

संयोगविनाशादपि कथम् ? (१)अपेक्षाबुद्धिसमकालमेव परत्वाधारे कर्मोत्पद्यते तेन कर्मणा दिक्पिण्डविभागः क्रियते अपेक्षाबुद्धितः परत्वस्योत्पत्तिरित्येकः कालः । ततः सामान्यबुद्धेरुत्पत्तिः दिक्पिण्डसंयोगस्य च विनाशः ततो यस्मिन् काले गुणबुद्धिरुत्पद्यते त-

---

ह्यापेक्षाबुद्धिविनाशात्तावदिति । तावच्छब्दः क्रमे । यस्मिन्नेव क्षणे परत्वोत्पादानन्तरं परत्वसामान्यज्ञानं जायते तदैवापेक्षाबुद्धिविनाशहेतुसान्निध्यम् । परत्वसामान्यतज्ज्ञानपरत्वगुणसम्बन्धेभ्यश्च परत्वगुणबुद्धिरित्येकः क्षणः । परत्वसामान्यज्ञानस्यापेक्षाबुद्धिनाशकारणता गुणबुद्ध्युत्पत्तिहेतुता चेति सामान्यज्ञानोत्पादकाल एवापेक्षाबुद्धेर्विनश्यता गुणबुद्धेश्चोत्पद्यमानतेति भावः । ततोऽन्यक्षणेऽपेक्षाबुद्धेर्विनाशः परत्वगुणबुद्ध्युत्पादश्च तत अपेक्षाबुद्धिनाशात् गुणस्य विनश्यत्ता गुणतज्ज्ञानतत्सम्बन्धेभ्यश्च द्रव्यबुद्धेरुत्पद्यमानतेत्यपरः क्षणः । युगपदुद्भूतापेक्षाबुद्धिनाशगुणबुद्ध्युत्पादाभ्यां गुणविनाशद्रव्यबुद्धिहेतुभ्यां गुणस्यापि विनश्यत्ता द्रव्यबुद्धेरुत्पद्यमानता च युगपदेवेत्यत्र बोध्यम् । ततः परत्वविशिष्टद्रव्यबुद्धिः परत्वगुणविनाशश्चेति ।

(१)द्वितीयमाहापेक्षाबुद्धिसमकालमिति । अत्रेयं प्रक्रिया—अपेक्षा-

स्मिन्नेव काले दिक्पिण्डसंयोगविनाशाद्गुणस्य विनाशः।

द्रव्यविनाशादपि कथम्? (१)परत्वाधारावयवे कर्मोत्पन्नं यस्मिन्नेव कालेऽवयवान्तराद्विभागं करोति तस्मिन्नेव कालेऽपेक्षाबुद्धिरुत्पद्यते ततो विभागाद्यस्मिन्नेव काले संयोगविनाशः तस्मिन्नेव काले परत्वमुत्पद्यते ततः संयोगविनाशाद् द्रव्यविनाशः तद्विनाशाच्च तदाश्रितस्य गुणस्य विनाशः।

द्रव्यापेक्षाबुद्ध्योर्युगपद्विनाशादपि कथम्? (२)यदा परत्वाधारावयवे कर्मोत्पद्यते तदैवापेक्षाबुद्धिरुत्पद्यते कर्मणा चाऽवयवान्तराद्विभागः क्रियते परत्वस्योत्पत्तिरित्येकः कालः। ततो यस्मिन्नेव कालेऽवयवविभागाद् द्रव्यारम्भकसंयोगविनाशस्तस्मिन्नेव काले

---

बुद्धिकर्मणी—परत्वोत्पत्तिदिक्पिण्डविभागौ १ परत्वसामान्यबुद्धिदिक्पिण्डसंयोगविनाशौ २। सामान्यबुद्धेरपेक्षाबुद्धिविनाशगुणबुध्युत्पादौ दिक्पिण्डसंयोगनाशात् परत्वनाश इति। अपेक्षाबुद्धिनाशस्तु परत्वनाशसमसमयभावित्वात् न तदुत्पादक इति बोध्यम्।

(१)तृतीयमाह परत्वाधारावयवे इति। परत्वाधारावयवक्रियाजन्यविभागसमकालमपेक्षाबुद्धिचिन्तने इयं प्रक्रिया—पिण्डावयवविभागापेक्षाबुद्धी, संयोगनाशपरत्वोत्पादौ, १ द्रव्यनाशपरत्वसामान्यज्ञाने २ परत्वनाशगुणबुद्धी इति।

(२)द्रव्यापेक्षाबुद्ध्योर्युगपद्विनाशेन चतुर्थीं विधामाह यदा परत्वाधारावयव इति। पिण्डावयवकर्मसमकालमपेक्षाबुद्ध्युत्पत्तिचिन्तने एतल्लभ्यते। तथाहि परत्वाधारावयवकर्मापेक्षाबुद्धी, अवयवान्तरविभागपरत्वोत्पत्ती १ आरम्भकसंयोगनाशसामान्यज्ञा-

सामान्यबुद्धिरुत्पद्यते तदनन्तरं संयोगविनाशाद् द्रव्यविनाशः सामान्यबुद्धेश्चापेक्षाबुद्धिविनाश इत्येकः कालः। ततो द्रव्यापेक्षाबुद्ध्योर्विनाशात् परत्वस्य विनाशः।

द्रव्यसंयोगविनाशादपि कथम्? (१)यदा परत्वाधारावयवे कर्मोत्पन्नमवयवान्तराद्विभागं करोति तस्मिन्नेव काले पिण्डकर्मापेक्षाबुद्ध्योर्युगपदुत्पत्तिः ततो यस्मिन्नेव काले परत्वस्योत्पत्तिस्तस्मिन्नेव काले विभागाद् द्रव्यारम्भकसंयोगविनाशः पिण्डकर्मणा दिक्पिण्डस्य च विभागः क्रियते इत्येकः कालः। ततो यस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले द्रव्यारम्भकसंयोगविनाशात् पिण्डविनाशः पिण्डविनाशाच्च पिण्डसंयोगविनाशः ततो गुणबुद्धिसमकालं पिण्डदिक्पिण्डसंयोगविनाशात् परत्वस्य नाशः।

---

शे द्रव्यनाशापेक्षाबुद्धिनाशौ २ अथ परत्वस्य नाश इति३।

(१)द्रव्यसंयोगविनाशाभ्यां पञ्चमीं विधामाह यदेति। पिण्डावयवकर्मापेक्षाबुद्धियौगपद्यचिन्तनपक्षे हीयं प्रक्रिया–अवयवविभागपिण्डकर्मापेक्षाबुद्धयः अवयवसंयोगनाशदिक्पिण्डविभागपरत्वोत्पत्तयः १ द्रव्यनाशदिक्पिण्डसंयोगनाशपरत्वसामान्यबुद्धयः २ अथ ताभ्यां नाशाभ्यां परत्वनाशः ३। सामान्यबुद्धेर्गुणबुद्ध्युत्पाद अपेक्षाबुद्धेश्च विनाश इति। अत एवास्य न परत्वनाशकता तदानीमपि सामान्यबुद्धेरुत्पादकस्य सत्वात् इति बोध्यम्।

संयोगापेक्षाबुद्ध्योर्युगपद्विनाशादपि कथम्? (१)यदा परत्वमुत्पद्यते तदा परत्वाधारे कर्म ततो यस्मिन्नेव काले परत्वसामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले पिण्डकर्मणा दिक्पिण्डविभागः क्रियते ततः सामान्यबुद्धितोऽपेक्षाबुद्धिविनाशो विभागाच्च दिक्पिण्डसंयोगविनाश इत्येकः कालः। ततः संयोगापेक्षाबुद्धिविनाशात् परत्वस्य विनाशः।

त्रयाणां समवाय्यसमवायिनिमित्तकारणानां युगपद् विनाशादपि कथम्? (२)यदापेक्षाबुद्धिरुत्पद्यते तदा पिण्डावयवे कर्म ततो यस्मिन्नेव काले कर्मणाऽवयवान्तराद्विभागः क्रियतेऽपेक्षाबुद्धेः परत्वस्य चोत्पत्तिस्तस्मिन्नेव काले पिण्डेपि कर्म ततोऽवयवविभागात् पिण्डारम्भकसंयोगविनाशः पिण्डकर्मणा च दिक्पिण्डविभागः क्रियते सामान्यबुद्धेश्चोत्पत्तिरित्येकः कालः।

---

(१)संयोगनाशापेक्षाबुद्धिनाशाभ्यां षष्ठीमाह यदा परत्वमुत्पद्यत इति। परत्वोत्पादकाले पिण्डकर्मचिन्तनादेतल्लभ्यते तथाहि परत्वोत्पत्तिपिण्डकर्मणी सामान्यज्ञानदिक्पिण्डविभागौ अपेक्षाबुद्धिनाशदिक्पिण्डसंयोगनाशौ १ ततः परत्वस्य नाश इति २।

(२)समवाय्यसमवायिनिमित्तानां युगपद्विनाशेन सप्तमीं विधामाह यदाऽपेक्षाबुद्धिरिति। परत्वोत्पत्त्यवयवविभागोत्पत्तिसमकालं पिण्डकर्मचिन्तनयैतल्लभ्यम्। तथाहि अपेक्षाबुद्ध्यवयवकर्मभ्यां परत्वावयवविभागौ स्वकारणात्पिण्डकर्म १ परत्वसामान्यज्ञानमवयवसंयोगनाशः दिक्पिण्डविभागश्च २ ततोऽपेक्षाबुद्धिवि-

ततः संयोगविनाशात् पिण्डविनाशः विभागाच्च दिक्पिण्डसंयोगविनाशः सामान्यज्ञानादपेक्षाबुद्धेर्विनाश इत्येतत् सर्वं युगपत्त्रयाणां समवाय्यसमवायिनिमित्तकारणानां विनाशात् परत्वस्य विनाश इति ॥

## (१३)बुद्धिप्रकरणम् ।

(१)बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः ।

---

नाशाद्द्रव्यनाशाद्दिक्पिण्डसंयोगनाशाः तेभ्यः परत्वनाश इति । परत्वस्येत्यपरत्वस्योपलक्षणार्थम् तत्रापि इयं रीतिर्विभाव्येति भावः ।

स्वतन्त्रं भाष्यम् ।

(१३) बुद्धिप्रकरणम् ।

(१)बुद्धिजे परत्वापरत्वे निरूप्य प्रसङ्गाद्बुद्धिं निरूपयति बुद्धिरिति । इच्छासाक्षात्कारणाऽऽत्मविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं बुद्धित्वमित्यर्थः । यद्यपि बुद्धिर्ज्ञानमित्येतावतैव स्वरूपं यस्मिन्सति जानामीत्यनुव्यवसायो भवति सा बुद्धिरिति तथापि बुद्ध्यादिशब्दानां केचिद्भेदमाहुस्तन्निरासाय पर्यायोत्कीर्तनम् । सांख्या हि–"प्रकृतेः प्रथमपरिणामं महदाख्यमन्तःकरणविशेषं बुद्धिमाहुः । बुद्धेर्विषयाकारः परिणामविशेषो घटपट–इत्यादिज्ञानमाचक्षते । आदर्शरूपायां स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चितिशक्तेः पुरुषस्य भेदाग्रहात्तद्वदभिमानमुपलब्धिं प्रचक्षते । सुखादयश्च परिणामविशेषा एवेति" तदनेन निरस्तमित्यर्थः । अन्तःकरणन्तु वैशेषिके मन एव, तदधिकविजातीयमहदाख्यान्तःकरणे प्रमाणाभावात् । विषयहानोपादानानुगुणमुत्पादव्ययशीलमेकन्तदधिकरणञ्चापरं यस्य तदुत्पादात्प्रवृत्तिनिवृत्ती स्याताम् इत्युभयं प्रत्यात्ममनुभूयते न प्रकारान्तरम् । बुद्धिवृत्तिश्च पराभिमता तदन्याऽनन्या वा ? आद्ये वृत्तिवृत्तिमतोरैकान्तिकतादात्म्यन्तदभिमतं न स्यात् । द्वितीये बुद्धेरेकत्वेन तद्वृत्तीनामप्येकत्वात् त्रिचतुरादिप्रत्ययो दुर्लभः । तदुक्तम्–"वृत्तीनां वा नानात्वे बुद्धेरपि नानात्वादेकत्वव्याघात इति" अलं प्रपञ्चितेन ।

(१)सा चानेकप्रकाराऽर्थानन्त्यात्प्रत्यर्थनियतत्वाच्च ॥ (२)तस्याः सत्यप्यनेकविधत्वे समासतो द्वे विधे—विद्या चाविद्या चेति । तत्राविद्या चतुर्विधा संशयविप-

---

(१)विषयतस्तद्भेदमाह सा चेति । अर्थानन्त्येऽपि बुद्धेरनेकविधत्वे किमायातन्तत्राह प्रत्यर्थनियतत्वाच्चेति । तथाच प्रतिविषयमस्मदादिबुद्धीनां नियतत्वेनार्थानामनन्ततया बुद्धिरपि अनन्तेति भावः ।

(२)कारणतस्तमाहतस्या इति । विद्येति । विशेष्यावृत्त्यप्रकारकं ज्ञानं विद्या तद्विपरीतं मिथ्याज्ञानमविद्येत्यर्थः । पश्चादुद्दिष्टामपि अविद्यां प्रतिपादनमात्रस्य विवक्षितत्वात्प्रथममाहेति श्रीधरः । विद्यापूर्वकत्वादविद्यायाः पश्चादुक्ताया अपि लघुप्रतिपत्तिकत्वात्प्रथमं विभागमाह तत्रेति आचार्याः । अथ संशयं निर्णयश्चान्तरा संशयात्प्रच्युतस्य निर्णयं चाप्राप्तस्य प्रमाणानामनुग्राहक ऊहापरनामा प्रसङ्गात्मा तर्को दृश्यते स कथं न गणितः ? न चायं संशयः एककोटिकत्वात्, नापि निर्णयोऽयथार्थत्वात्, सत्यज्ञानरूपत्वादेव चास्यानध्यवसायरूपता स्वप्नरूपता च निवृत्ता, तदनङ्गीरे परस्यानिष्टापादनरूपः प्रसङ्गोऽपि न स्यादिति चेत्

अत्र कन्दलीकाराः—किं परपक्षाभावप्रतीतिस्तर्कः किं वा स्वपक्षसम्भावना? आद्ये प्रमाणमेवेदं यद्ययमात्मोत्पत्तिधर्मकस्तदैकस्यानेकशरीरादिसंयोगलक्षणस्संसारस्तदात्यन्तिकविमोक्षरूप अपवर्गोऽपि न स्यात् अनुत्पत्तिधर्मके तु ज्ञातरि स्यातां संसारापवर्गावित्यनुत्पत्तिधर्मकेणानेन भवितव्यमिति तर्के ज्ञातुरनित्यत्वे संसारापवर्गयोरसम्भव इति ज्ञानं यद्यप्रमाणं नातो विपक्षाभावसिद्धिः अप्रमाणेनासिद्धौ प्रवृत्त्यभावात् । अथ सिद्ध्यति विपक्षाभावो नेदमप्रमाणं ततश्चास्य प्रत्यक्षादावन्तर्भावः तेन विना साधनाभावादिति । द्वितीयेऽस्योत्पत्तौ किं कारणम् ? न तावत्स्वपक्षसाधकं प्रमाणं तस्याप्रवृत्तेः । तर्केण विवेचिते विषये स्वपक्षसाधकप्रमाणं प्रवर्तते तदेव तस्य कारणं चेदन्योन्याश्रयः । विपक्षाभावप्रतीतिरस्य कारणमिति चेत् तल्लिङ्गकमनुमानमेवेति तत्रैवान्तर्भावः । अन्ये-

र्थयानध्यवसायस्वप्नलक्षणा ॥

## (१४) संशयप्रकरणम् ।

(१)संशयस्तावत् प्रसिद्धानेकविशेषयोः सादृश्यमात्रदर्शनादुभयविशेषानुस्मरणादधर्माच्च किंस्विदित्युभया-

---

तु संशयप्रभेद एवायमनवधारणात्मकत्वादित्याहुः । आचार्यास्तवस्य विपर्ययभेदमंगीकृत्यापि तर्कमनङ्गीकुर्वतां तार्किकाणां तुरगारूढस्य तुरगविस्मरणमिवायुक्तं तर्कविस्मरणमिति भाष्यकारमधिचिक्षिपुरिति अलं विस्तरेण । अत्र ३५१ ३५२ ३५३ ३४८ ९६ सूत्राणि द्रष्टव्यानि ।

(१४) संशयप्रकरणम् ।

(१)उद्देशक्रमानुसारेण संशयमाह संशयस्तावदिति । कथ्यत इति शेषः । तावच्छब्दः क्रमे । प्रसिद्धाः पूर्वं प्रतीताः अनेके विशेषाः असाधारणधर्माः वक्रकोटरादयः शिरःपाण्यादयश्च ययोः स्थाणुपुरुषयोस्तयोः सादृश्यमात्रस्य साधारणधर्मस्योच्चैस्तरत्वादेः क्वचिद्धर्मिणि दर्शनात् उभयोः स्थाणुपुरुषयोर्विशेषाणां वक्रकोटरादीनां शिरआदीनां च पूर्वप्रतीतानां स्मरणादधर्माच्च किंस्विदिति उभयावलम्बी विरोध्युभयप्रकारवद्धर्मावलम्बी विमर्षः विरुद्धनानार्थावमर्षः संशय इत्यक्षरार्थः । प्रसिद्धेत्यादिकारणवचनम् । मात्रपदेन विशेषाणामनुपलम्भो गम्यते । अधर्मादित्यनेन संशयाख्याऽविद्या पुरुषस्यानिष्टेति सूचितम् । तथाचैकस्मिन् धर्मिणि विरोधिनानाधर्मप्रकारकं ज्ञानं संशय इति संक्षेपः । स चायं समानधर्मजन्मा विप्रतिपत्तिजन्मा च । उपसर्जनीभूतनिषेधकोटिः समानधर्मजन्मा समानस्योर्ध्वत्वादेः स्थाणुत्वपुरुषत्वोभयस्मारकत्वेन तत्प्राधान्यम् । विप्रतिपत्तिजन्मा तु कोटिचतुष्टयप्रधानः—शब्दो नित्य एव नानित्योऽनित्य एव न नित्य इत्यादौ तद्दर्शनात् । संशयत्वं न जातिः चाक्षुषत्वादिना साङ्कर्यात् । मानस एव सर्वत्र संशयो विद्युत्संपाते धर्मिणि दृष्टेऽन्धकारेऽपि कोटिस्मृतिमतः संशयदर्शनात्तथाच संशयत्वं जातिरेवेति केचित् । अनवधारणात्मकः प्रत्ययः

वलम्बी विमर्षः संशयः। स च द्विविधः—अन्तर्बहिश्च।

(१)अन्तस्तावत्—आदेशिकस्य सम्यङ्मिथ्या चोद्दिश्य पुनरादिशतस्त्रिषु कालेषु संशयो भवति किन्नु सम्यङ्मिथ्या वेति।

बहिर्द्विविधः—प्रत्यक्षविषये चाप्रत्यक्षविषये च। (२)तत्राप्रत्यक्षविषये तावत्—साधारणलिङ्गदर्शनादुभयविशेषाऽनुस्मरणादधर्माच्च संशयो भवति। यथाऽटव्यां विषाणमात्रदर्शनाद्गौर्गवयो वेति।

प्रत्यक्षविषयेऽपि (३)स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्य-

---

संशय इति कन्दलीकाराः। नन्वनवधारणात्मकस्य विषयावधारणात्मकं प्रत्ययत्वमनुपपन्नम् इति चेन्न उभयसम्भवात्। सामान्यविशिष्टधर्म्युपलम्भेन धर्मविशेषानुपलम्भेन च जायमानः सामान्यतो धर्मिणमवधारयन् स्थाणुर्वा पुरुषो वेति संशयः विशेषानवधारणात्मकोपि स्यात् सामग्रीवैलक्षण्येन कार्यवैलक्षण्यादिति न कोपि दोषः। अवान्तरभेदमाह स चेति। ज्ञातृधर्मनिमित्तकोऽन्तःसंशयो ज्ञेयधर्मनिमित्तको बहिरिति भावः।

(१) आद्यमाह अन्तस्तावदिति। आदेशिकस्य ज्योतिर्विदोऽविपर्यस्ततया किञ्चित् सम्यक् अप्रतीततया किञ्चिन्मिथ्या चादिश्य पुनर्ग्रहसञ्चारादि त्रिषु कालेष्वादिशतोऽन्तःसंशयो भवति यदेतन्मम नैमित्तिकं ज्ञानमभूत् तत् किं सत्यमसत्यं वेति।

(२) द्विविधबहिःसंशयमध्येऽप्रत्यक्षविषयन्तमाह तत्रेति। साधारणधर्मदर्शनादुभयसाधारणचतुष्पदमात्रलिङ्गदर्शनात्। उभयेति। गोगवयरूपविशेषानुस्मरणात्। उदाहरति यथेति। वाटान्तरितस्य पिण्डस्याऽप्रत्यक्षस्य सामान्येन विषाणमात्रदर्शनानुमितस्य संशयविषयत्वादप्रत्यक्षविषयोऽयं संशय इत्यर्थः।

(३)प्रत्यक्षविषये तमाह स्थाणुपुरुषयोरिति। वक्रादीति। आ-

दर्शनात् वक्रादिविशेषानुपलब्धितः स्थाणुत्वादिसामान्यविशेषानभिव्यक्तावुभयविशेषानुस्मरणादुभयत्राकृष्यमाणस्यात्मनः प्रत्ययो दोलायते किं नु खल्वयं स्थाणुः स्यात्पुरुषो वेति ॥

(१५) विपर्ययप्रकरणम् ।

(१)विपर्ययोऽपि प्रत्यक्षानुमानविषय एव भवति ।

प्रत्यक्षविषये तावत्—(२)प्रसिद्धानेकविशेषयोः पित्तकफानिलोपहतेन्द्रियस्यायथार्थालोचनात् असन्निहि-

---

दिपदेन शिरःपाण्यादिपरिग्रहः । तथाच स्थाणुधर्मस्य वक्रकोटरादेः पुरुषधर्मस्य शिरआदेर्विशेषस्याऽनुपलब्धितः स्थाणुत्वाभिव्यक्तिहेतुवक्रकोटरादीनां पुरुषत्वाभिव्यक्तिहेतुशिरआदीनाञ्चानुपलम्भात् स्थाणुत्वपुरुषत्वयोरनभिव्यक्तौ उभयविशेषाणां प्रत्येकं स्थाणुपुरुषयोरुपलब्धानां विशेषाणामनुस्मरणादुभयत्र स्थाणौ पुरुषे वोर्ध्वतासाधारण्येनाकृष्यमाणस्यात्मनो ज्ञानं नावध्रियत इति भावः ।

अत्र ९६ ९७ ९८ ९९ सूत्राणि द्रष्टव्यानि ।

(१५) विपर्ययप्रकरणम् ।

(१)क्रमप्राप्तं विपर्ययमाह विपर्ययोपीति । संशयानध्यवसायभिन्नत्वे सति जागरावस्थामिथ्याज्ञानं विपर्यय इत्यर्थः । संशयवदयमपि प्रत्यक्षानुमानविषय एवेत्यपेरर्थः ।

(२)प्रत्यक्षविषयं विपर्ययमाह प्रसिद्धेति । प्रसिद्धाः पूर्वं प्रतीताः अनेके विशेषाः सास्नादयः केसरादयश्च ययोस्तयोर्गवाश्वयोर्मध्येऽतस्मिन्नश्वे गवि तदिति–प्रत्ययोऽश्व इति ज्ञानं विपर्यय इत्यर्थः । ननु अत्र गवादौ विशेषप्रतीतिर्भवति न वा ? आद्ये न विपर्ययः, विपर्यये कथं तदुपरमः स्यादत आह अयथार्थालोचनादिति । यथा गौः सास्नादिमती तथा-

तद्विषयज्ञानजसंस्कारापेक्षादात्ममनसोः संयोगादधर्माच्चातस्मिंस्तदिति प्रत्ययो विपर्ययः। यथा गव्येवाश्व इति। असत्यपि प्रत्यक्षे प्रत्यक्षाभिमानो भवति यथा व्यपगतघनपटलमचलजलनिधिसदृशमम्बरमञ्जनचूर्णपुञ्जश्यामं शार्वरं तम इति।

(१)अनुमानविषयेऽपि—बाष्पादिभिर्धूमाभिमतैर्व-

ऽग्रहणादित्यर्थः। अनेन विशेषानुपलम्भस्य हेतुता दर्शिता। संनिहितपिण्डे गोत्वाग्रहणेऽसन्निहिताश्वत्वग्रहणे च हेतुमाह पित्तेति। एतेन वातपित्तश्लेष्मादिदोषाणामसंनिहितप्रतिभासे सन्निहितार्थप्रतिभासे च सामर्थ्यं समर्थितम्। नन्वेवं सर्वं सर्वत्र भासेत नियमहेतोरभावादित्यत्राहासंन्निहितेत्यादि—संयोगादित्यन्तेन हेतुना। अयमर्थः—गोपिण्डसंयुक्तमिन्द्रियं गोत्वमगृह्णदपि तं पिण्डं गोसादृश्यविशिष्टं गृह्णाति सांशत्वाद्वस्तुनः। सादृश्यग्रहणेन चाश्वविषयः संस्कारः प्रबुद्धोऽश्वस्मृतिजनने प्राप्ते मनोदोषादिन्द्रियसंयुक्ते गव्यश्वसादृश्यानुरोधादनुभवाकारामश्वप्रतीतिं करोतीति न सर्वत्र सर्वावभासप्रसङ्गः सादृश्यसंस्कारयोः प्रतिनियमहेतुत्वात्। अतएवेयं गुरुमते इन्द्रियजा भ्रान्तिः सिद्धान्तितेत्यन्यत्र विस्तरः। अर्थादिति पूर्ववत्। उदाहरति यथेति। उदाहरणान्तरमाह असत्यपीति। गगनदर्शनकौतुकेनोर्ध्वमनुप्रेषिताः नयनरश्मयो दूरगमनान्मन्दवेगाः सूर्यरश्मिभिः प्रतिहताः स्वगोलकगुणं नीलिमानं देशान्तरे आभासयन्तो जलधरपुञ्जनिर्मुक्तनिस्तरङ्गमहोदधिकल्पमाकाशमिति प्रत्यक्षमिव रूपज्ञानमप्रत्यक्षे नभसि जनयन्तीत्यत्र तद्गुणानुविधानप्रतीतिनियम एव कामलादिदूषितनेत्रस्य पीतशङ्खज्ञान इव प्रमाणम्। एवं रात्रितमःपुञ्जमञ्जनपुञ्जश्याममिति ज्ञानन्तेजोभावे आरोपितरूपमात्रविषयमप्रत्यक्षमपि प्रत्यक्षमिव भातीति चोदाहरणान्तरमूह्यम्।

(१) अनुमानविषयं विपर्ययमाह अनुमानविषयेपीति। स्पष्टम्।

ह्यनुमानं गवयविषाणदर्शनाच्च गौरिति ।

(१)त्रयीदर्शनविपरीतेषु शाक्यादिदर्शनेष्विदं श्रेय इति मिथ्याप्रत्ययः, विपर्ययः शरीरेन्द्रियमनस्स्वात्माभिमानः, कृतकेषु नित्यत्वदर्शनं, कारणवैकल्ये कार्योत्पत्तिज्ञानं, हितमुपदिशत्स्वहितमिति ज्ञानम्, अहितमुपदिशत्सु हितमिति ज्ञानम् ॥

---

(१) अत्यन्तदुर्दर्शनाभ्यासाच्च विपर्ययो भवतीत्याह त्रयीदर्शनेति । दृश्यते स्वर्गापवर्गसाधनभूतोऽर्थोऽनयेति दर्शनं वेदत्रय्येव दर्शनं त्रयीदर्शनं तद्विपरीतेषु बौद्धादिदर्शनेषु इदं श्रेय इति उपदेशो मिथ्याप्रत्ययस्तेषां कैश्चिद्देश म्लेच्छापसदैः परिग्रहात् प्रमाणविरुद्धार्थाभिधानाच्चेत्यर्थः । एवमनात्मसु शरीरादिषु आत्मत्वाभिमानो विपर्ययः तद्व्यतिरिक्तस्य ज्ञातुः प्रतिपादनात् । विपर्ययपदस्य सर्वत्राग्रेऽन्वयः । कृतकेषु वेदेषु नित्यत्वाभिमानो मीमांसकानां विपर्ययः । कारणवैकल्ये धर्माधर्मयोरभावे कार्योत्पत्तिज्ञानं सुखदुःखादिवैचित्र्यज्ञानं लौकायतिकानां विपर्ययः । अहिंसादिहितोपदेष्टृषु अहितमिति, प्राणिहिंसादिकं श्रेयसे इत्यहितोपदेष्टृषु हितमिति ज्ञानं च विपर्यय इति भावः । अत्र ३५१ सूत्रम् ।

अत्र विपर्ययो नास्ति कारणाभावात् इन्द्रियाणां यथार्थज्ञानजननस्वाभाव्याच्च किन्तु इदमिति अनुभवात्मकं रजतमिति दोषजं स्मरणात्मकं ज्ञानद्वयमिति केचित् । तन्न यदि रजतज्ञानं न शुक्तिविषयं किन्तु रजतस्मरणं तदा तस्मिन् ज्ञाने रजतार्थी पूर्वानुभूते एव रजते प्रवर्तेत न शुक्तौ स्मृतेरनुभवदेशे प्रवर्तकत्वस्य दृष्टत्वात् । तथा प्रवृत्त्युत्तरं नेदं रजतमिति बाधोऽपि न स्यात् शुक्तिरजतभेदग्रहाभावात् तादात्म्यानध्यवसायाच्चेति कृतं विस्तरेण ।

## (१६) अनध्यवसायप्रकरणम्।

(१)अनध्यवसायोऽपि प्रत्यक्षानुमानविषय एव सञ्जायते।

(२)तत्र प्रत्यक्षविषये तावत्—प्रसिद्धार्थेष्वप्रसिद्धार्थेषु वा व्यासङ्गादर्थित्वाद्वा किमित्यालोचनमात्रमनध्यवसायः। यथा वाहीकस्य पनसादिष्वनध्यवसायो भवति। तत्र सत्ता-द्रव्यत्व पृथिवीत्ववृक्षत्वरूपवत्त्वादिशाखाद्यपेक्षोऽध्यवसायो भवति। पनसत्वमपि पनसेष्वनुवृत्तमाम्रादिभ्यो व्यावृत्तं प्रत्यक्षमेव केवलं तूपदेशाभावाद्विशेषसंज्ञाप्रतिपत्तिर्न भवति।

---

(१६) अनध्यवसायप्रकरणम्।

(१) तृतीयामविद्यामाहानध्यवसायोपीति। विपर्ययवदयमपि द्विविध इत्यपिशब्दार्थः। अनुपलब्धसपक्षविपक्षसंस्पर्शस्य धर्मस्य दर्शनात् विशेषत उपलब्धानुपलब्धकोटिकं ज्ञानमनध्यवसायः संशयस्तु उपलब्धसपक्षविपक्षसंस्पर्शदर्शनात् उपलब्धाव्यवस्थित-कोटिविषय उत्पद्यत इति तन्निरास इति आचार्याः।

(२) तत्र प्रथममाह प्रत्यक्षविषये तावदिति। प्रसिद्धार्थाः पूर्वं ज्ञाता अर्थाः अप्रसिद्धार्थाः अज्ञातार्थास्तेषु वा व्यासङ्गात् विषयान्तरा-कृष्टत्वादर्थित्वाद्विशेषप्रतीत्यर्थित्वाद्वा किमित्यलोचनमात्रमनध्य-वसाय इत्यक्षरार्थः। आचार्यस्य त्वनानर्थित्वाद्वेति पाठः[ संमतः, विशेषनिश्चयाभावे सतीति अर्थकरणात्। प्रसिद्धार्थानध्यवसा-योदाहरणं-"प्रसिद्धे राजनि गते कोपि पथानेन गत" इत्यादि सुस्प-ष्टमेवेति भाष्यकारैर्न धृतम्। अप्रसिद्धार्थे त्वाह यथेति। विशे-षसंज्ञाप्रतिपत्तिर्न भवतीति निश्चयनिषेधेनानिश्चयात्मकता दर्शि-ता न निश्चयाभावमात्रं विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात्। सामान्येन हि सत्त्वादिना निमित्तेन द्रव्यमित्यादिसंज्ञाऽत्र प्रवर्तत इति निश्चितमेवाविशेषात् का पुनरसौ प्रसिद्धा अप्रसिद्धा चेत्य-नध्यवसाय इत्याचार्याः।

(१)अनुमानविषयेऽपि—नारिकेलद्वीपवासिनः सास्नामात्रदर्शनात् को नु खल्वयं प्राणी स्यादित्यनध्यवसायो भवति ॥

## (१७) स्वप्नप्रकरणम् ।

(२)उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्येन्द्रियद्वारेणैव यदनुभवनं मानसं तत् स्वप्नज्ञानम् । कथम्?यदा

---

(१) द्वितीयमाहानुमानविषयेऽपीति । नारिकेलद्वीपे गवामभावात् तत्रत्यो लोकोऽप्रसिद्धगोजातीयः देशान्तरस्थवने सास्नामात्रदर्शनात् सामान्यतः पिण्डमात्रमनुमाय जातिविशेषविषये को नु स्वल्वत्र प्राणी स्यादित्यनवधारयतीति भावः । अस्य चानवधारणात्मकत्वेपि कारणस्वरूपादिभेदान्न संशयताऽप्रतीतविशेषविषयत्वेनापि अस्य सम्भवादुभयविशेषानुस्मरणजसंशयतो भेद एवेति कन्दलीकाराः ।

इदं स्वतन्त्रं भाष्यम् । संशयसूत्रीयासाधारणधर्मदर्शनस्य अनध्यवसायहेतुत्वात्संशयसूत्रं वा द्रष्टव्यम् ।

(१७) स्वप्नप्रकरणम् ।

(२) स्वप्नाख्यां तुरीयामविद्यामाहोपरतेन्द्रियग्रामस्येति । इन्द्रियद्वारेणेति । यत्र असत्यपि चक्षुरादिव्यापारे चक्षुषावश्यममुमर्थं पश्यामीमं श्रोत्रेण शृणोमीत्यनुव्यवसायः तत् स्वप्नज्ञानम् इत्याचार्याः । विपर्ययव्यवच्छेदायोपरतेन्द्रियग्रामेति । नियतकोटिकत्वात् संशयानध्यवसाययोरनुभवनमिति च स्मृतेर्व्यावृत्तिः । यद्यपि कदाचित्स्वप्नज्ञानमपि यथार्थमेव भवति तथापि इन्द्रियद्वारकता तत्रायथार्थैवेति प्रतिपादनायेन्द्रियद्वारेणेति । इन्द्रियग्रामोपरमाय प्रलीनमनस्कस्येति । तमेव प्रकारं प्रश्नपूर्वकमाह कथमिति । शरीरव्यापारो गमनागमनादिः । क्रियाप्रबन्धः क्रियासन्तानादिः । आख्यायते पुरुष इति शेषः । तस्मिन् मनसि इत्य-

बुद्धिपूर्वादात्मनः शरीरव्यापारादहनि खिन्नानां प्राणिनां निशि विश्रमार्थमाहारपरिणामार्थं वाऽदृष्टकारितप्रयत्नापेक्षादात्मान्तःकरणसम्बन्धान्मनसि क्रियाप्रबन्धादन्तर्हृदये निरिन्द्रिये आत्मप्रदेशे निश्चलं मनस्तिष्ठति तदा प्रलीनमनस्क इत्याख्यायते, प्रलीने च तस्मिन्नुपरतेन्द्रियग्रामो भवति, तस्यामवस्थायां प्रबन्धेन प्राणापानसन्तानप्रवृत्तावात्ममनःसंयोगविशेषात् स्वापाख्यात् संस्काराच्चेन्द्रियद्वारेणैवासत्सु विषयेषु प्रत्यक्षाकारं स्वप्नज्ञानमुत्पद्यते ।

(१)तत्तु त्रिविधम् । संस्कारपाटवाद्धातुदोषाददृष्टाच्च ।

(२)तत्र संस्कारपाटवात् तावत्—कामी क्रुद्धो वा यदा यमर्थमादृतश्चिन्तयन् स्वपिति तदा सैव चिन्तासन्ततिः प्रत्यक्षाकारा सञ्जायते ।

(३)धातुदोषाद्वातप्रकृतिस्तद्दूषितो वा आकाशगमनादीन् पश्यति । पित्तप्रकृतिः पित्तदूषितो वाऽग्निप्रवेश-

---

र्थः । तस्यामवस्थायां प्रलीनमनोवस्थायां प्रबन्धेन बाहुल्येन प्राणापानसन्तानप्रवृत्तौ प्राणापानवायुसन्ताननिर्गमप्रवेशलक्षणायां प्रवृत्तौ सम्भवन्त्यामिति भावः । संस्कारात्पूर्वानुभूतविषयादित्यर्थः ।

(१)विभजते तत्तु इति । विभागे हेतुमाह संस्कारेत्यादि ।

(२)संस्कारजं स्वप्नज्ञानमाह तत्रेति । यमर्थं कामिनीमरातिं वा ।

(३)धातुदोषजमाह धातुदोषादिति । धातवोऽसृङ्मांसादयः शरीरधारणाचेषां दोषात् वातादिदूषितत्वाद्विपर्ययो भवतीत्याह

कनकपर्वतादीन् पश्यति । श्लेष्मप्रकृतिः श्लेष्मदूषितो वा सरित्समुद्रप्रतरणहिमपर्वतादीन् पश्यति ।

(१)यत्स्वयमनुभूतेष्वननुभूतेषु वा प्रसिद्धार्थेष्वप्रसिद्धार्थेषु वा यच्छुभावेदकं गजारोहणच्छत्रलाभादि तत्सर्वं संस्कारधर्माभ्यां भवति विपरीतं च तैलाभ्यञ्जनखरोष्ट्रारोहणादि तत्सर्वमधर्मसंस्काराभ्यां भवति । अत्यन्ताप्रसिद्धार्थेष्वदृष्टादेवेति । स्वप्नान्तिकं यद्यप्युपरतेन्द्रियग्रामस्य भवति तथाप्यतीतस्य ज्ञानप्रबन्धस्य प्रत्यवेक्षणात् स्मृतिरेवेति भवत्येषा चतुर्विधाऽविद्येति ॥

---

वातप्रकृतिरिति । आकाशगमनादीत्यादिपदेन भूकम्पादिग्रहणम् । पर्वतादीनित्यत्र दिग्दाहादिरादिपदार्थः ।

(१) तृतीयमदृष्टजं स्वप्नमाह यदिति । अनुभूतेषु प्राप्तेष्वननुभूतेष्वप्राप्तेषु वा प्रसिद्धेष्विह जन्मनि प्रतीतेषु अप्रसिद्धेष्विह जन्मन्यप्रतीतेषु यत् गजारोहणादि शुभावेदकं स्वप्नं दृश्यते तत्संस्कारधर्माभ्यां भवतीत्यर्थः । पर्वतारोहण-पायसभक्षणादि-रादिपदार्थः । खरोष्ट्रारोहणादीति । अत्र अन्धकारपात-पङ्कमज्जनादि-चादिपदग्राह्यम् । अत्यन्ताप्रसिद्धार्थेष्वादित्यविगलनादिषु ज्ञानमदृष्टादेवाननुभूतेषु संस्काराभावात् । यद्यपि संस्कारादिभिस्समारोपितबाह्यस्वरूपः स्वप्नप्रत्ययो मिथ्याज्ञानमिति न विपर्ययतो भेदस्तथापि अवस्थाविशेषभावित्वात् पृथगुक्तः । ननु स्वप्नदृष्टमपि स्वप्नेऽनुसन्धीयत एव तच्च पूर्वानुभूतस्य स्वप्नस्य अन्ते भवतीति स्वप्नान्तिकमुच्यते तत्राप्युपरतेन्द्रियस्येत्यादि स्वप्नलक्षणं वर्तत एवेति आशङ्क्याह स्वप्नान्तिकमिति । तथा च स्मृतौ तस्या अन्तर्भावादनुभवनपदेन स्वप्नलक्षणस्यातिव्याप्त्यभावाच्चेति सर्वमनवद्यम् ।

अत्र ३४८ ३४९ ३५० सूत्राणि ।

## (१८) प्रत्यक्षप्रकरणम् ।

(१)विद्यापि चतुर्विधा । प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा ॥

(२)तत्राक्षमक्षं प्रतीत्योत्पद्यते इति प्रत्यक्षम् । अक्षाणीन्द्रियाणि घ्राणरसनचक्षुस्त्वक्छ्रोत्रमनांसि षट् । तद्धि द्रव्यादिषु पदार्थेषूत्पद्यते । द्रव्ये तावद् त्रिविधे महत्यनेकद्रव्यवत्त्वोद्भूतरूपप्रकाशचतुष्टयसन्निकर्षाद् धर्मादि-

---

(१८) प्रत्यक्षप्रकरणम् ।

(१)क्रमप्राप्तां विद्यामाह विद्यापीति । अविद्यैव न किन्तु विद्यापि चतुर्विधेत्यपेरर्थः । विद्यासामान्यलक्षणमुक्तम् । प्रत्यक्षस्य सर्ववादिसिद्धत्वात्पूर्वं निर्देशः अनुमानस्य तत्पूर्वकत्वात् तत्पश्चात् स्मृतेः प्रत्यक्षानुमितेषु भावात्तदनन्तरं आर्षस्य लोकोत्तरपुरुषापेक्षित्वात् अन्ते निर्देशश्च बोध्यः । अत्र १३४ ३४२ २४७ ३५४ सूत्राणि द्रष्टव्यानि ।

(२)तत्र प्रत्यक्षमाह तत्रेति । इत्यन्तं लक्षणम् । प्रत्यक्षमिति लक्षनिर्देशः । प्रतीत्य प्राप्य । समस्तेन्द्रियावरोधार्था वीप्सा अन्यथा बाह्येन्द्रियजमेव प्रत्यक्षमिति स्यात् । कुगतिप्रादय इति प्रादिसमासः । अव्ययीभावे हि परवल्लिङ्गतायां प्रत्यक्षा बुद्धिः प्रत्यक्षः प्रत्ययइति न स्यात् । अक्षशब्दस्य द्यूतपाशाद्यनेकार्थनिरूढत्वाद्विशिनष्टि अक्षाणीति । सांख्यबौद्धादिमते एकादश पञ्च चेन्द्रियाणि तन्निरासाय षडिति । असद्विषयस्मृतावतिव्याप्तिवारणाय प्रत्यक्षस्य विषयं दर्शयति तद्धीति । हिशब्दोऽवधारणे तत्प्रत्यक्षं द्रव्यादिषु चतुर्ष्वेव न विशेषसमवाययोरित्यर्थः । द्रव्यस्य प्राधान्यात् प्रथमं तत्प्रत्यक्षमाह द्रव्ये इति । त्रिविधे पृथिव्यप्तेजोरूपे महति द्रव्ये प्रत्यक्षं कुतो भवतीत्यत्राह अनेकद्रव्यवत्त्वेति । महतीत्यनेन महत्त्वस्य प्रत्यक्षकारणतोक्ता अकारणत्वे तत्प्रकर्षानुविधानानुपपत्तेः । अनेकद्रव्यवत्त्वं भूयोवयवाश्रितत्वम् । तस्यावयवभूयस्त्वप्रकर्षाप्रकर्षाभ्यामवयविनि स्फुटत्वास्फुटत्वातिशयानतिशयदर्शनात् कारणता । रूपप्रकाश उद्भूतसमाख्यातो रूपस्य धर्मः यदभावाज्जलस्थ-

सामग्र्ये च स्वरूपालोचनमात्रम् । सामान्यविशेषद्रव्य-गुणकर्मविशेषणापेक्षादात्ममनःसन्निकर्षात् प्रत्यक्षमुत्पद्यते सद् द्रव्यं पृथिवी विषाणी शुक्लो गौर्गच्छतीति । (१)रूपरसगन्धस्पर्शेष्वनेकद्रव्यसमवायात् स्वगतविशेषात् स्वाश्रयसान्निकर्षान्नियतेन्द्रियनिमित्तमुत्पद्यते । शब्दस्य

तेजसोऽप्रत्यक्षमिति श्रीधराचार्याः । प्रकाश आलोक इति उदयनाचार्याः । सत्यपि महत्त्वेऽनेकद्रव्यवत्त्वे च वायोरनुपलंभाद्रूपप्रकाशोपि हेतुरुक्तः । चतुष्टयसन्निकर्षात् आत्मा मनो बहिरिन्द्रियं ग्राह्यद्रव्यञ्चेति चतुष्टयसन्निकर्षात् आत्मा मनसा मन इन्द्रियेण इन्द्रियमर्थेन संयुज्यत इति चतुष्टयसंयोगात् कारणकलापाद्धर्माधर्मदिक्कालादीनां समग्राणां भावे सति स्वरूपालोचनं निर्विकल्पकं प्रत्यक्षमुत्पद्यत इत्यग्रे सम्बन्धः । सर्वस्यैव ज्ञानस्य सुखदुःखादिप्रयोजनकत्वाद्देशकालादिनियमेनोत्पत्तेश्च धर्माधर्मदिक्कालादिजन्यत्वमुक्तम् । आत्मनः संयोगादिव्यतिरेकेण प्रत्यक्षाभावाच्चतुष्टयसन्निकर्षस्य हेतुता चोक्तेत्यवधेयम् । स्वलक्षणान्वयव्यतिरेकानुविधायिप्रतिभासं निर्विकल्पकमेव वस्तुन्यभ्रान्तत्वात्प्रत्यक्षं न सविकल्पकं वासनाधीनोत्पत्तिकस्य तस्य वस्त्वननुरोधप्रतिभासस्य केशादिज्ञानवद्वस्तुनि भ्रान्तत्वादिति सौगतमतमपाकर्तुमाह सामान्येति । सामान्यादीन्येव विशेषणान्यपेक्षते य आत्ममनःसन्निकर्षः तस्मात्सद् द्रव्यमिति–सामान्यविशिष्टं पृथिवीति–पृथिवीत्वविशेषविशिष्टं विषाणीति–द्रव्यविशिष्टं शुक्लो गौरिति–गुणविशिष्टं गच्छतीति–कर्मविशिष्टं प्रत्यक्षं स्यात् । घटोयमित्यादिज्ञाने विच्छिन्नः कबुग्रीवात्मा सर्वतो व्यावृत्तः पदार्थः प्रतीयत इति कथं सविकल्पकस्य न प्रमाणतेति भावः । क्षणभङ्गवादविस्तरस्त्वत्र कन्दल्यादौ द्रष्टव्यः । अत्र १६२ १३४ ३१५ ३१६ सूत्राणि ।

(१) द्रव्यप्रत्यक्षमाख्याय गुणप्रत्यक्षमाह रूपेति । अनेकद्रव्यसमवायादनेकद्रव्यवद्द्रव्यसमवायान्महत्त्ववद्द्रव्यसमवायात् स्वगतो विशेषो रूपादौ रूपत्वादिस्तस्मात्सामान्यविशेषात् स्वाश्रयसन्नि-

(१)त्रयसन्निकर्षाच्छ्रोत्रसमवेतस्य तेनैवोपलब्धिः। संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहद्रवत्ववेगकर्मणां (२)प्रत्यक्षद्रव्यसमवायाच्चक्षुःस्पर्शनाभ्यां ग्रहणम्। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नानां द्वयोरात्ममनसोः (३)संयोगादुपलब्धिः। (४)भावद्रव्यत्वगुणत्वकर्मत्वादीनामुपलभ्याधारसमवेतानामाश्रयग्राहकैरिन्द्रियैर्ग्रहणमित्येतदस्मदादीनां प्रत्यक्षम्।

---

कर्षात् रूपाद्याश्रयग्रहकेन्द्रियसन्निकर्षाच्च नियतेन्द्रियनिमित्ते रूपादौ चक्षुरादिनियतेन्द्रियनिमित्तं ज्ञानमुत्पद्यत इत्यर्थः। स्वगतविशेषाणां हेतुत्वाद्रूपादिष्विन्द्रियव्यवस्थाऽन्यथोपद्रवः स्याद्विशेषाभावात् इति श्रीधरः। अत्र ३१३ १६४ १६५ सूत्राणि द्रष्टव्यानि।

(१)त्रयसन्निकर्षादिति। आत्ममनःश्रोत्रसन्निकर्षादित्यर्थः। तेनैव श्रोत्रेणैवोपलब्धिः प्रत्यक्षशब्दस्येत्यन्वयः। अत्र१०० ३१३सूत्रे द्रष्टव्ये।

(२)प्रत्यक्षद्रव्यसमवायात्प्रत्यक्षयोग्यद्रव्यसमवायादित्यर्थः। गच्छति द्रव्ये संयोगविभागातिरिक्तानुपलब्ध्या न कर्मणः प्रत्यक्षतेति, चलतीति-प्रत्ययस्तु संयोगविभागक्रियालम्बन इति केचित्। तन्न यद्यप्रत्यक्षं कर्म संयोगविभागाभ्यामनुमीयते तदान्यत्रापि सर्वत्र ताभ्यां कर्मानुमानं भवेत्। न च मूलादग्रं गच्छति शाखामृगे तरौ संयोगविभागाद्यधिकरणे चलतीति प्रत्ययो भवतीति कर्म प्रत्यक्षमेवेति॥ अत्र १६७ ३१३ सूत्रे।

(३)संयोगादिति। आत्मसमवेतानां तेषां संयुक्तसमवायात्संनिकर्षाद्ग्रहणमित्यर्थः। अत्र १३४ ३१३ सूत्रे।

(४)भावेति। भावः सत्ता। उपलभ्याधारसमवेतानामित्यनेनापि पूर्ववत् आश्रययोग्यतान्तर्भूतयोग्यत्वं सूचितम्। तत्र संयोगाद् द्रव्यस्य संयुक्तसमवायाद्गुणादेः संयुक्तसमवेतसमवायाद्गुणत्वादेः समवायाच्छब्दस्य समवेतसमवायाच्छब्दत्वस्य सम्बद्धविशेषणतया चाभावस्य ग्रहणमिति षोढा सन्निकर्षाः। संयुक्तसमवेतविशेषणत्वा-

अस्मद्विशिष्टानां तु (१)योगिनां युक्तानां योगजधर्मानुगृहीतेन मनसा स्वात्मान्तराकाशदिक्कालपरमाणुवायुमनस्सु तत्समवेतगुणकर्मसामान्यविशेषेषु समवाये चावितथं स्वरूपदर्शनमुत्पद्यते । (२)वियुक्तानां पुनश्चतुष्टयसन्निकर्षाद्योगजधर्मानुग्रहसामर्थ्यात् सूक्ष्मव्यवहितविप्रकृष्टेषु प्रत्यक्षमुत्पद्यते ।

---

दिना रूपादौ रसाद्यभावादिग्रहणानि च संबद्धविशेषणतायामेवान्तर्भूतानीति न षोढात्वव्याघात इति ध्येयम् । अत्र२१४ १६९सूत्रे।

(१)अस्मद्विशिष्टानामित्यस्य विवरणं योगिनामिति । योगिनस्तु युक्तवियुक्तभेदेन द्विविधास्तयोर्युक्तानान्तु समाधिस्थानां योगजधर्मसहकृतेनान्तःकरणेन स्वात्मनि आत्मान्तरे वाऽऽकाशे दिशि काले चतुर्विधपरमाणुषु मनःसु तत्समवेतेषु गुणादिषु समवाये चाविपर्यस्तं स्वरूपदर्शनं भवतीत्यर्थः । इन्द्रियेभ्यः प्रत्याकृष्य साक्षात्कर्तव्येष्टवस्तुनि मनो निधायाप्रवर्तमानचिन्तासन्तानाः युक्ताः वियुक्तास्त्वत्यन्ताभ्यासेन परमवशीकारमापन्ना विगतावरणाः सर्वतः प्रद्योतमानमानसाः निरवशेषिताभ्यासा इति तयोर्भेद इत्याचार्याः । यद्यप्यस्मदादीनामपि कदाचिद्विगलितशरीरादिमिश्रीभावः क्षणमात्रमीदृग्प्रत्ययस्तथापि बलवदविद्यासंस्कारमध्यपतितमेतद्विज्ञानं प्रतिपक्षकक्षाप्रवेशेन वशीकृतदेहमज्ञानकलापकवलितायां चित्तभूमौ भूमाविव कलमबीजं संस्काराङ्कुराय न कल्पत इत्यसत्कल्पतया उपेक्षितमिति सुधीभिर्विभावनीयम् । अत्र ३३७ ३३८ सूत्रे ।

(२)वियुक्तानामाह वियुक्तानां पुनरिति । अभिमुखीभूतनिखिलविषयसमूहानामप्रतिहतकारणगणानान्तेषाञ्चतुष्टयसंनिकर्षादात्ममनइन्द्रियार्थसंनिकर्षाद्योगजधर्मानुग्रहसहकारितात् तत्सामर्थ्यात् सूक्ष्मेषु मनःपरमाण्वादिषु व्यवहितेषु नागभुवनादिषु विप्रकृष्टेषु ब्रह्मभुवनादिषु प्रत्यक्षमुत्पद्यतेऽज्ञानमित्यर्थः । अत्र३३९ ३४० ३४१सूत्राणि ।

-१३

(१)तत्र सामान्यविशेषेषु स्वरूपालोचनमात्रं प्रत्यक्षं प्रमाणं प्रमेया द्रव्यादयः पदार्थाः प्रमाताऽऽत्मा प्रमितिर्द्रव्यादिविषयं ज्ञानम् । सामान्यविशेषज्ञानोत्पत्तावविभक्तमालोचनमात्रं प्रत्यक्षं प्रमाणम् अस्मिन्नान्य-

---

(१)ननु प्रत्यक्षं प्रमाकरणविशेषे प्रसिद्धम् तत्किमत्र प्रमाणं किञ्चास्य फलमित्याशङ्क्य प्रमाणफलयोर्विभागमाह तत्रेति । सामान्यं सत्ताद्रव्यत्वगुणत्वादिकं विशेषा व्यक्तयः तेषु स्वरूपालोचनमात्रं स्वरूपग्रहणमात्रं विकल्परहितं प्रमाणं प्रमायां साधकतमत्वात् ।तत्त्वं च तस्मिन् सति प्रमित्सोः प्रमा भवत्येवेत्यतिशयः । प्रमातरि प्रमेये च सति भवति प्रमा न तु भवत्येवेति, प्रमाणे तु निर्विकल्पके विशेषणज्ञानादिस्वरूपे विशेष्यज्ञानादिरूपा प्रमा भवत्येवेत्यतिशयः । पदार्था इति । द्रव्यादयश्चत्वारः पदार्थाः प्रमितिविषयाः प्रमितौ जातायां तेषु हानोपादानव्यवहारो भवतीत्यर्थः । प्रमातात्मेति बोधाश्रयत्वात् इति शेषः । प्रमितिर्द्रव्यादिविषयं ज्ञानं यदा निर्विकल्पकं सामान्यविशेषज्ञानं प्रमाणं तदा द्रव्यादिविषयं विशिष्टज्ञानं प्रमितिरित्यर्थः । सामान्येति । यदा तु निर्विकल्पकं सामान्यविशेषज्ञानमपि प्रमारूपमर्थप्रतीत्यात्मकत्वात्तदा तदुत्पत्तौ अविभक्तं केवलं ज्ञानानपेक्षमालोचनमालोच्यतेऽनेनेत्यालोचनमिन्द्रियार्थसन्निकर्षस्तन्मात्रं सामान्यविशेषज्ञानोत्पत्तौ प्रमाणमित्यर्थः । विशेष्यज्ञानोत्पत्तावपि इन्द्रियार्थसन्निकर्षः प्रमाणं भवत्येव प्रमाहेतुत्वात्किन्तु विशेषणज्ञानसहकृतमेव न केवलं सामान्यविशेषज्ञानोत्पत्तौ तु ज्ञानानपेक्षमिति विशेषोऽत्र बोध्यः । अत्रोपपत्तिमाह अस्मिन्निति । सामान्यविशेषज्ञाने नान्यत्प्रमाणं ज्ञानरूपन्तस्याफलरूपत्वाज्ज्ञानफलत्वाभावात्, विशेष्यज्ञानं प्रकारज्ञानफलं तत्तु न ज्ञानान्तरफलम् अनवस्थाप्रसङ्गादतो विशेषणज्ञाने इन्द्रियार्थसन्निकर्षमात्रं प्रमाणमिति भावः । एतावता निर्विकल्पके फले इन्द्रियार्थसन्निकर्षः प्रमाणं विशेष्यज्ञाने च सामान्यविशेषज्ञानात्मकं निर्विकल्पकञ्च प्रमाणमित्युक्तं सम्प्रति हानोपादानादिबुद्धेः फलत्वे

त्प्रमाणान्तरमस्ति अफलरूपत्वात् । अथवा सर्वेषु पदार्थेषु चतुष्टयसन्निकर्षादवितथमव्यपदेश्यं यज्ज्ञानमुत्पद्यते तत्प्रत्यक्षं प्रमाणं प्रमेया द्रव्यादयः पदार्थाः प्रमाताऽऽत्मा प्रमितिर्गुणदोषमाध्यस्थ्यदर्शनमिति ॥

(१९) अनुमानप्रकरणम् ।

(१)लिङ्गदर्शनात् सञ्जायमानं लैङ्गिकम् । लिङ्गं पुनः—

---

विशेष्यज्ञानं प्रमाणमित्याहाथवेति । चतुष्टयपदमुपलक्षणं द्वयसन्निकर्षात्त्रयसंनिकर्षादपि बोध्यम् । अवितथपदेन संशयविपर्ययव्यवच्छेदः । अव्यपदेश्यं शब्दाजन्यम् । सन्निहितेऽर्थे चक्षुर्व्यापारानन्तरं शब्दश्रवणाद्गौरिति ज्ञानं तत्राक्षमपि कारणम् अन्यथा रेखोपरेखादिविशेषप्रतीतिर्न स्यात्, न च तत्प्रत्यक्षं शब्दस्यैव तत्र साधकतमत्वादिन्द्रियस्य सहकारितामात्रत्वात् तद्व्यवच्छेदार्थमव्यपदेश्यमिति । उक्तप्रत्यक्षफलमाह प्रमितिरिति । गुणदर्शनमुपादेयत्वज्ञानं दोषदर्शनं हेयत्वज्ञानं माध्यस्थ्यदर्शनं न हेयं नोपादेयमिति उदासीनताज्ञानमित्यर्थः ।

(१९)अनुमानप्रकरणम् ।

(१)उद्देशक्रमानुरोधेन प्रत्यक्षान्ते अनुमानं व्याख्यातुमारभते लिङ्गदर्शनादिति । लिङ्गदर्शनात् लिङ्गज्ञानात् सम्यक् जायमानं लैङ्गिकमिति वाक्यार्थः । संशब्देन संशयविपर्ययस्मृतिव्यवच्छेदः । संशयविपर्ययौ तावद्यथाभूतार्थपरिच्छेदकौ न भवतः स्मृतिरप्यनुभवपारतन्त्र्यान्न परिच्छेदिकेति भावः । यद्यप्यनुमानपदं भावकरणोभयवाचकमपि प्रमाणत्वेन करणस्वरूपमेवात्र व्युत्पादयितुमभिमतम् तथापि करणस्य कारकविशेषतया तस्य च क्रियासम्बन्धोपहितसम्मततयाऽनुमितिक्रियास्वरूपोपदर्शनेनैतदुपदर्शितं भवतीति भावप्रधानमेव व्याख्यातवान्भाष्यकार इत्याचार्याः । लिङ्गलक्षणमाह लिङ्गं पुनरिति । निरुपाधिकसाध्यसम्बन्धशालि लिङ्गमिति लोकप्रसिद्धमेवेत्यर्थः ।

(१)यदनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते ।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥
(२)विपरीतमतो यत् स्यादेकेन द्वितयेन वा ।
विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत् ॥

(३)यदनुमेयेनार्थेन देशविशेषे कालविशेषे वा सहचरितमनुमेयधर्मान्विते चान्यत्र सर्वस्मिन्नेकदेशे वा प्रसिद्धमनुमेयविपरीते च सर्वस्मिन् प्रमाणतोऽसदेव तदप्रसिद्धार्थस्यानुमापकं लिङ्गं भवतीति ॥

---

(१) अनुमेयेन प्रतिपिपादयिषितधर्मविशिष्टधर्मिणा सम्बद्धं समवेतं तदन्विते साध्यधर्मान्विते सपक्षे प्रसिद्धं तदभावे अनुमेयाभावे अनुमेयविपर्यये विपक्षे च यन्नास्त्येव तल्लिङ्गमनुमापकमनुमितिरूपप्रमाकरणमिति कारिकार्थः । यत्पदोपात्तवाक्यत्रयेण पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वरूपरूपत्रयवैशिष्ट्यं लिङ्गताप्रयोजकं सूचितम् । अत्र ३४२ सूत्रम् ।

(२)लिङ्गानन्तरं प्रसङ्गसङ्गत्या लिङ्गाभासलक्षणं संज्ञाविशेषपूर्वकमाह विपरीतमिति । अत उक्तलक्षणलिङ्गात् यदेकेन द्वितयेन वाशब्दात्त्रितयेन च लिङ्गलक्षणेन विपरीतं रहितं तत् विरुद्धमसिद्धं सन्दिग्धञ्चेति विशेषसंज्ञाविशिष्टम् अलिङ्गमनुमेयाप्रतिपादकमिति कणादमतमित्यर्थः । अत्रैकस्मिन्नपि दूषणे दृष्टे यथायोगं बहूनि दूषणानि सम्भवन्ति । सभाजिज्ञासायां समस्तोद्भावनमन्यथैकस्यैवेत्याचार्याः । अत्र १३१ सूत्रम् ।

(३)प्रथमसङ्ग्रहश्लोकार्थं भाष्यकार आह यदनुमेयेनेति । यावति देशे काले वा दृष्टान्तधर्मिणि लिङ्गस्य साध्यधर्मेणाविनाभावो निदर्शितः तावत्येव तत्र साध्यधर्मिणि प्रतीयमानस्य गमकं लिङ्गमिति प्रतिपादनाय देशविशेषे कालविशेषे वा सहचरितमिति । सर्वसपक्षव्यापकवत् सपक्षैकदेशवृत्तेरपि हेतुत्वार्थं सर्वस्मिन्नेकदेशे

(१)यत्तु यथोक्तात् त्रिरूपाल्लिङ्गादेकेन धर्मेण द्वाभ्यां वा विपरीतं तदनुमेयस्याधिगमे लिङ्गं न भवतीत्येतदेवाह सूत्रकारः—"अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चेति" ॥

---

वा प्रसिद्धमित्युक्तम् । तथा सर्वविपक्षव्यापक इव तदेकदेशवृत्तेरप्यहेतुत्वबोधार्थं सर्वस्मिन्नसदेवेत्युक्तम् । अत्र ३४२ सूत्रम् ।

(१)द्वितीयं विवृणोति यत्त्विति । एकेन धर्मेणेति । यथा शब्दोऽनित्यः प्रमेयत्वादित्यत्र प्रमेयत्वं हेतुः धर्मद्वयसद्भावेऽपि विपक्षसत्त्वरूपैकलिङ्गलक्षणविपरीतः सन्दिग्धानैकान्तिकः । द्वाभ्यां यथा शब्दो नित्यः कृतकत्वादित्यत्र कृतकत्वं पक्षवृत्त्यपि न सपक्षवृत्ति नापि विपक्षव्यावृत्तमिति धर्मद्वयविपरीतो विरुद्धहेतुः । असिद्धस्तु एकेन द्वाभ्यां त्रिभिश्च विपरीतो भवति । तत्र प्रथमो यथा अनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वादिति । अस्य सपक्षे घटादौ सत्त्वेऽपि विपक्षात्सामान्यादेर्व्यावृत्तावपि शब्दावृत्तित्वात् एकहीनता । द्वितीयो यथा शब्दोऽनित्यः अप्रमेयत्वादिति । अस्य विपक्षव्यावृत्तत्वेपि न पक्षसपक्षसत्त्वमिति द्विहीनता । तृतीयो यथा अनित्यः शब्दोऽकार्यत्वादिति । अस्य न शब्दघटादिवृत्तिता नाप्यात्मव्यावृत्तत्वमिति त्रिरूपहीनता । ननु यथोक्तरूपत्रयसम्पत्तिमात्रेण गमकत्वे कालात्ययापदिष्टप्रकरणसमयोरतिव्याप्तमिदं लक्षणमिति चेदत्र केचित्—तयोरनैकान्तिकेऽन्तर्भावात् सन्दिग्धविपक्षे साध्यधर्मिणि प्रकरणसमस्य निश्चितविपक्षे च कालात्ययापदिष्टस्य वृत्तेः । तथाहि शब्दे नित्यानित्यधर्मानुपलम्भात्तदुभयसंशये निर्णयायोपदिष्टस्य प्रकरणसमस्य सम्भवत्प्रतिपक्षे धर्मिणि वर्तमानस्यैकस्मिन् अन्ते नैयत्याभावेनानैकान्तिकता । एवं प्रत्यक्षनिर्णीतोष्णे वह्नौ विपक्षे कृतकत्वस्य भावात् कालात्ययापदिष्टोप्यनैकान्तिक एवेति । वस्तुतस्तु तयोर्यदनुमेयेन सम्बद्धमित्यनेनैव निरासात् अनुमेयाभासाश्रयत्वादिति कन्दलीकाराः । अत एवास्वरसादाह सूत्रकार इति आचार्याः । अपदिश्यतेऽनेनेत्यपदेशो हेतुर्नापदेशोऽनपदेशः अहेतुस्तद्विरोधी हेत्वाभास इत्यर्थः । को-

(१)विधिस्तु यत्र धूमस्तत्राग्निरग्न्यभावे धूमोऽपि न भवतीति। एवं (२)प्रसिद्धसमयस्यासन्दिग्धधूमदर्शनात् साहचर्यानुस्मरणात् तदनन्तरमग्न्यध्यवसायो भवतीति।

---

सावत आहाप्रसिद्ध इति। अनेन विरुद्धासाधारणयोः सङ्ग्रहः। असन्निति। पक्षेऽसन्नसिद्धोऽपि तथेत्यर्थः। सन्दिग्ध इत्यनेनानैकान्तिकपरिग्रहः। चकारादनपदेशस्य च पुनरावर्तनादन्योऽपि कालात्ययापदिष्टप्रकरणसमरूपो हेत्वाभास इति सूचितम्। पटुतरप्रत्यक्षाद्यबाधितमेव हि साध्यं प्रायशः साधनार्हमिति लोकप्रसिद्धत्वाद् व्यक्तमनभिधानम्। अप्रसिद्धपदेन सङ्ग्रहो न पुनरभावादिति वक्ष्यत इति न कोपि दोष इति ध्येयम्। ननु तथापि लक्ष्यतावच्छेदकाक्रान्ते केवलान्वयिनि लिङ्गे तदभावे चेत्यादेः केवलव्यतिरेकिणि च प्रसिद्धं च तदन्विते इत्यादेर्लक्षणैकदेशस्यान्वयव्यतिरेकिमात्रगामिनोऽसत्त्वादव्याप्तिरिति चेत् न अस्य व्यस्तसमस्तलक्षणरूपत्वात्। तथाच तदन्वित इत्यन्तमन्वयिनो नास्त्येवेति व्यतिरेकिणो समस्तं चान्वयव्यतिरेकिणः साध्यसाधनत्वं च सामान्यलक्षणं त्रयाणामिति न कोपि दोष इति आचार्याः। विस्तरश्च सङ्ग्रन्थे एव द्रष्टव्यः। अत्र १३१ सूत्रं द्रष्टव्यम्।

(१)यथोक्तमपि लिङ्गमगृहीतव्याप्तिकस्य ग्रहणेपि वा विस्मृतव्याप्तिकस्य न गमकमत आह विधिस्त्विति। अविनाभावग्रहणप्रकारस्त्वित्यर्थः अनेन भूयोदर्शनसहकृतावन्वयव्यतिरेकावेव तद्ग्रहणोपाय इति सूचितम्। अत्र ३४४ सूत्रम्।

(२)प्रसिद्धसमयस्य प्रसिद्धाविनाभावस्येत्यर्थः। असन्दिग्धधूमदर्शनादित्यनेन पक्षधर्मताज्ञाने, साहचर्यानुस्मरणात् इत्यनेन स्मरणात्मकव्याप्तिज्ञाने च हेतुता दर्शिता। प्रथमलिङ्गदर्शनं दृष्टान्ते द्वितीयलिङ्गदर्शनं पक्षेऽनन्तरं च अग्न्यध्यवसाये तत्परामर्शो तृतीयलिङ्गदर्शनमित्यनुमितौ लिङ्गदर्शनत्रयस्य कारणतेति आचार्याः। विनश्यदवस्थस्य द्वितीयलिङ्गदर्शनस्य परामर्शहेतुत्वेपि यत्र दृष्टमात्र एव वह्निनिवृत्तौ धूमोऽपि निवृत्तः कालान्तराजिज्ञासाघशा-

(१)एवं सर्वत्र देशकालाविनाभूतमितरस्य लिङ्गम् । शास्त्रे

स्य परामृश्यते तत्र द्वयोरपि लिङ्गदर्शनयोरतीतत्वात् परामर्शज्ञानं प्रति साहचर्यानुस्मरणमेव कारणम् । यस्तु सर्वथा परामर्शं नेच्छति तेनोपनयो नेष्टव्यः इति । लिङ्गदर्शनव्याप्तिस्मरणाभ्यामेवोपपत्तौ न द्वितीयलिङ्गपरामर्शस्य हेतुता नाप्युभयवैयर्थ्यम् अवयवान्तराप्रतिपादितपक्षधर्मत्वस्य प्रतिपादनाय परार्थानुमाने तदुपयोगादिति कन्दलीकाराः । अविनाभावस्तु व्याप्त्यपरपर्यायोऽव्यभिचरितः सम्बन्धः । ननु व्यभिचारः साध्यात्यन्ताभावसामानाधिकरण्यं तदभावश्चाव्यभिचारः कथं केवलान्वयिनि स्यात् तत्र साध्यात्यन्ताभावस्यैवाप्रसिद्धेरिति चेन्न केवलान्वयिनि सम्बन्धमात्रस्यैव व्याप्तित्वात् । न चैवमननुगमः अननुगतस्यैवानुमितिजनकत्वात् । अनुमितित्वावच्छिन्नं प्रति पक्षधर्मताज्ञानस्यैव जनकत्वात् तद्विशिष्टे व्याप्तिविशेषस्य प्रयोजकत्वात् । अविनाभावसम्बन्धो वा व्याप्तिः, कार्त्स्न्येन सम्बन्धो वेत्यादयस्तु पूर्वपक्षव्याप्तयः शङ्करमिश्रेणैव परास्ता इति तत्रैव विस्तरो द्रष्टव्यः । वस्तुतस्त्वनौपाधिकसम्बन्ध एव व्याप्तिः । अनौपाधिकत्वं च यावत्साधनाव्यापकाव्याप्यसाध्यसामानाधिकरण्यम् । साधनसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं वा व्याप्तिः । उपाधिस्तु "साधने सोपाधिः साध्ये निरुपाधिः" इत्युक्तदिशा साध्यव्यापकः साधनाव्यापकश्च बोध्यः, यथा धूमवान् वह्नेरित्यत्रार्द्रेन्धनसंयोगः । केवलसाध्याव्यापकोपाध्यव्याप्तिवारणादिकन्तु उपस्कारव्याख्यायामेवास्माभिः प्रपञ्चितमिति नेह वितन्यते । उपाधिविभागादिप्रकारस्तु किरणावल्यादौ द्रष्टव्यः । अत्र३४२सूत्रं द्रष्टव्यम् ।

(१)एवं सिद्धवद्धूमानुमानं व्युत्पाद्यान्यत्रानुमानेऽप्यतिदिशति एवमिति । एवं धूमानुमानवत् सर्वत्र सर्वानुमाने व्याप्तिनिश्चय इत्यर्थः । इतरस्य साध्यधर्मस्य । देशाविनाभूतं यथा—काश्मीरेषु सुवर्णभाण्डारिकपुरुषैर्यववाटिकारक्षणं यवनालेषु हेमाङ्कुरोद्भेदस्य लिङ्गम् । कालाविनाभूतं यथा—राज्ञोऽन्तःपुरे प्रातर्गायनादि प्रबोधलिङ्गम् । ननु देशकालाविनाभावमात्रेण गमकत्वे "अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति" सूत्रविरोध इत्यत

कार्यादिग्रहणं निदर्शनार्थं कृतं नावधारणार्थम् । कस्मात्? व्यतिरेकदर्शनात् । तद्यथा अध्वर्युरोंश्रावयन् व्यवहितस्य हेतुर्लिङ्गम् चन्द्रोदयः समुद्रवृद्धेः कुमुदविकाशस्य च शरदि जलप्रसादोऽगस्त्योदयस्येति । एवमादि तत्सर्वमस्येदमिति सम्बन्धमात्रवचनात् सिद्धम् ।

(१)तत्तु द्विविधम्—दृष्टं सामान्यतो दृष्टं च ।

तत्र दृष्टं प्रसिद्धसाध्ययोरत्यन्तजात्यभेदेऽनुमान-

---

आह शास्त्र इति । नावधारणार्थं नत्वेतावन्त्येव लिङ्गानीत्यवधारणार्थमित्यर्थः । कुत एवमत आह व्यतिरेकेति । कार्यादिव्यतिरेकदर्शनादप्यनुमानान्नावधारणमिति भावः । तदेव दर्शयति तद्यथेति । अत्रायं प्रयोगः-अध्वर्युरविदूरदेशेन होत्राऽनुसंहितः यागभूमौ औंश्रावयेति-शब्दकर्तृत्वात् पूर्वोपलब्धाध्वर्युवत् । अत्र च कार्यताद्यभावः स्पष्ट एव उदाहरणान्तराण्याह चन्द्रोदय इत्याद्यगस्त्योदयस्येत्यन्तम् । न च तदनन्तरभावित्वमात्रेण कार्यत्वमत्र शंक्यम्, तस्यान्यथासिद्धत्वात् । उत्तरदेशप्राप्तिरूपायाः समुद्रवृद्धेः परस्परदलविभागस्य विकासस्य च पूर्वरूपनिवृत्तौ रूपान्तरोत्पादलक्षणजलप्रसादस्य च तत्कालसन्निपातिस्वकारणाधीनकर्मनिबन्धनत्वात् न कार्यादावन्तर्भाव इत्यर्थः । तर्हि कार्यादिव्यतिरिक्तलिङ्गसद्भावात् सूत्रे न्यूनताऽऽपतिता इत्याशङ्क्याह एवमादीति । सिद्धमिति । अस्येदमितिवचनात् सूत्रकृता प्रमाणसिद्धं कृतमित्यर्थः । कार्यकारणादिव्यवच्छेदार्थं मात्रपदम् । अत्र ३४३, १२५ सूत्रात् १३० सूत्रान्तं १२३ १२४ सूत्राणि च क्रमशो द्रष्टव्यानि ।

(१)तद्भेदमाह तत्तु द्विविधमिति । दृष्टं सामान्यतोदृष्टं चेति द्विविधमेवानुमानमिति चकारार्थः । तत्रेति । प्रसिद्धस्य पूर्वं लिङ्गेन सह दृष्टस्य साध्यस्य सम्प्रत्यनुमेयस्य च द्वयोरत्यन्तजात्यभेदे सति यदनुमानं तत्प्रथमं दृष्टमनुमानमित्यर्थः । उदाहरणं यथेति ।

म्। यथा गव्येव सास्नामात्रमुपलभ्य देशान्तरेऽपि सास्नामात्रदर्शनाद्गवि प्रतिपत्तिः।

(१)प्रसिद्धसाध्ययोरत्यन्तजातिभेदे लिङ्गानुमेयधर्मसामान्यानुवृत्तितोऽनुमानं सामान्यतो दृष्टम्। यथा कर्षकवणिग्राजपुरुषाणां च प्रवृत्तेः फलवत्त्वमुपलभ्य वर्णाश्रमिणामपि दृष्टं प्रयोजनमनुद्दिश्य प्रवर्तमानानां फलानुमानमिति।

---

पूर्वं गोत्वजातिविशिष्टायां गवि सास्नोपलब्ध्या सम्प्रत्यपि तत्रैव गोव्यक्तेरत्यन्तजात्यभेदेऽनुमानं दृष्टमाख्यायते। सांख्ये इदमेव दृष्टस्वलक्षणसामान्यविषयमित्युच्यते सास्नामात्रदर्शनाद्वनान्तरे यदनुमीयते गोत्वसामान्यं तस्य स्वलक्षणं पूर्वं नगरे दृष्टमिति।

(१)द्वितीयमाह प्रसिद्धसाध्ययोरिति। प्रसिद्धस्य प्रतीतस्य साध्यस्यानुमेयस्य चात्यन्तजातिभेदे सति लिङ्गानुमेयधर्मयोः सामान्यानुवृत्तितो लिङ्गसामान्यस्य साध्यसामान्येन सहाविनाभावात् यदनुमानं तत्सामान्यतो दृष्टमित्यर्थः। उदाहरति यथेति। अत्र धान्यादिकं काञ्चनादिकं वाजिवारणादिकं यथासंख्यं त्रयाणां फलं स्वर्गादिकं तु वर्णाश्रमिणां प्रवृत्तेः फलमित्यन्तजातिभेदः। सिद्धसाध्यतापरिहाराय दृष्टं प्रयोजनमनुद्दिश्येति। प्रवृत्तित्वसामान्यस्य फलवत्त्वसामान्येनाविनाभावादनुमानोदयस्तु वर्णाश्रमिणां प्रवृत्तिः स्वर्गादिफलिका फलवत्वात्कर्षकादिप्रवृत्तिवदित्याकारः सामान्येन नियमदर्शनात् सामान्यतोदृष्टमित्युच्यत इति भावः। अत्र स्वर्गादिरूपफलविशेषलाभः पक्षधर्मताबलाद्भवतीत्याचार्याः। स्वर्गादिरूपविशेषजातीयस्य नियमो न दृष्ट इत्यदृष्टस्वलक्षणसामान्यविषयमिदमनुमानं सांख्यानामित्यलं विस्तरेण।

(१)तत्र लिङ्गदर्शनं प्रमाणं प्रमितिरग्निज्ञानम् ।

(२)अथवाऽग्निज्ञानमेव प्रमाणं प्रमितिरग्नौ गुणदोषमाध्यस्थ्यदर्शनमित्येतत् स्वनिश्चितार्थमनुमानम् ॥

(३)शब्दादीनामप्यनुमानेऽन्तर्भावः समानविधित्वात् । यथा प्रसिद्धसमयस्यासन्दिग्धलिङ्गदर्शनप्रसिद्ध्यनुस्मरणाभ्यामतीन्द्रियेऽर्थे भवत्यनुमानमेवं शब्दादि-

---

(१)करणव्युत्पत्तिसिद्धप्रमाणशब्दस्य फलं विनाऽपर्यवसानात् प्रमाणफलविभागमाह तत्रेति । प्रमाणं प्रमाकरणं प्रमितिरग्निज्ञानं तत्फलमित्यर्थः ।

(२)प्रकारान्तरमाहाथवेति । नन्वयं प्रमाणप्रमेयभावो न नियतः सोपाधित्वादुपाधीनामनियतत्वात् अनियतं चासत् तथाचायं रज्जावारोपितं सर्पत्वमिव काल्पनिकः प्रमाणप्रमेयभाव आपतित अत आहाथवेतीति आचार्याः । तथाचोपाधीनां नियतत्वात् नायं परमार्थासत् न हि येनोपाधिना प्रमाणत्वमिष्यते तदा तेनैव तत्रेष्यत इति कस्याप्यभ्युपगमः । एवञ्च एकोपाधिसद्भावे उपाध्यन्तरसंभवेपि न क्षतिः सत्त्वयं पार्थिवो द्रव्यं घटश्चेति ज्ञानस्य वास्तविकत्वात् । यत्पूर्वमते फलमासीत् तदेवात्र प्रमाकरणं प्रमितिश्च गुणदोषमाध्यस्थ्यदर्शनं हेयोपादेयोपेक्षाप्रतिपत्तिरित्यर्थः । उपसंहरति एतदिति । निश्चितार्थमिति भावे क्तः । स्वनिश्चयार्थमित्यर्थः । अत्र ३४२ ५६ सूत्रे ।

(३)शब्दादीन्यपि प्रमाणान्तराणि सङ्गिरन्ते वादिनः, तानि कुतो नोक्तानीत्याशंक्य तेषामत्रैवान्तर्भावान्न पृथगभिधानमित्याह शब्दादीनामिति । समानविधित्वात् समानप्रवृत्तिप्रकारत्वात् यथा व्याप्तिग्रहणबलेनानुमानं तथा शब्दादयोऽपि प्रवर्तन्त इत्यर्थः । शब्दोऽनुमानं व्याप्तिबलेनार्थप्रतिपादकत्वाद्धूमवदिति । समानविधित्वमेव दर्शयति यथेति । प्रसिद्धः समयोऽविनाभावोऽव्यभिचार इति यावत् यस्य पुरुषस्य तस्य लिङ्गदर्शन-

व्याप्तिस्मरणाभ्यां यथाऽतीन्द्रियेऽर्थे भवत्यनुमानं तथा शब्दादिभ्योपीत्यर्थः । तावद्धि शब्दो नार्थं प्रतिपादयति यावदयमस्याव्यभिचारीत्येवं नावगम्यते ज्ञाते त्वव्यभिचारे प्रतिपादयन्नर्थं धूम इव लिङ्गं स्यादिति भावः । अपिनोपमानादिप्रमाणान्तराणां ग्रहणम् । शब्दस्य बहुविषयत्वान्नियतविषयोपमानाद्युत्कर्षवत्वाच्च कण्ठतो ग्रहणम् । नन्वनुमाने साध्यधर्मविशिष्टो धर्मी प्रतीयते शब्दादर्थानुमाने को धर्मी न तावदर्थः तदानीं तस्याप्रतीयमानत्वात् । शब्दो धर्मीति चेत् किमस्य साध्यम् ? अर्थवत्वं चेन्न पर्वतादेर्वह्न्यादिनेव शब्दस्यार्थेन सह संयोगादिरूपः सम्बन्धः कश्चिद्येनार्थविशिष्टोऽयं साधनीयः स्यात् । प्रतिपाद्यप्रतिपादकभावरूपो हि सम्बन्धोऽर्थप्रतीत्युत्तरकालीनो नार्थप्रतिपादनात्पूर्वं सम्भवति । देशकालव्यभिचाराच्च नाव्यभिचाररूपोऽपि सः असत्यामपि लङ्कायां जंबुद्वीपे लङ्काशब्दश्रवणादसत्यपि युधिष्ठिरे कलौ युधिष्ठिरशब्दप्रयोगाच्च व्यभिचारदर्शनात् । तस्मादनुमानसामग्रीवैलक्षण्याच्छब्दो नानुमानं देशविशेषेष्वर्थव्यभिचारात् न हि धूमो वन्हिमिव शब्दो नार्थं व्यभिचरति दाक्षिणात्यानां चौरशब्दे भक्ताभिधानात् आर्यावर्तवासिनां च तस्कराभिधानात् इति चेन्न ऊर्ध्वीकृतायां तर्जन्यां क्रयविक्रयव्यवहारे वणिजां तथाविधतर्जनीविन्यासस्य दशसंख्याप्रतिपादनाभिप्रायाव्यभिचारोपलम्भात्कर्तुस्तत्प्रतिपादनाभिप्रायावगतिमुखेन दशसंख्याप्रतीतिहेतुत्वमिवास्यापि अर्थप्रतीतिहेतुत्वम् । तद्यथा प्रथमं गोशब्दादुच्चारिताद्वक्तुः सास्नादिमदर्थविवक्षा गम्यते स्वसन्ताने गोशब्दोच्चारणस्य तदर्थविवक्षापूर्वकत्वोपलम्भात् तदर्थविवक्षया चार्थानुमानम् । प्रयोगश्च-पुरुषो धर्मी सास्नादिमदर्थविवक्षावान् गोशब्दोच्चारणकर्तृत्वादहमिवेति । आप्ताभिप्रायादेवास्यार्थाधिगतिरिति कन्दलीकाराः । आचार्यास्तु-- एते पदार्था मिथः संसर्गवन्तः आकाङ्क्षादिमद्भिः पदैः स्मारितत्वात् गामभ्याजेति पदार्थवत् इति । न च विशेषासिद्धिः संसर्गस्य संसृज्यमानविशेषापेक्षयैव विशिष्टत्वात् । यद्वैतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्त्वे सति तत्स्मारितत्वात् गामभ्याजेतिपदकदम्बवदिति । न चैवमर्थासिद्धिर्दोषः ज्ञानावच्छेदकतया तदसिद्धेः । तस्य

भ्योऽपीति । श्रुतिस्मृतिलक्षणोऽप्याम्नायो वक्तृप्रामाण्यापेक्षः, तद्वचनादाम्नायप्रामाण्यम् । लिङ्गाच्चानित्यो-बुद्धिपूर्वा वाक्यकृतिर्वेदे, बुद्धिपूर्वो ददातिरित्युक्तत्वात् ॥

---

संसृज्यमानोपहितस्यैवावच्छेदकत्वात् न विशेषाप्रतिलम्भ इति । अत्र साध्यादिविचारशैली किरणावल्यादौ द्रष्टव्या । ननु आप्तोक्तत्वादेव शब्दस्यार्थाधिगमकत्वे वेदवाक्यात्तत्प्रत्ययो दुर्घटस्तत्र वक्तुरेवाभावादत आह श्रुतिस्मृतीति । न केवलं लौकिक आम्नायः किन्तु श्रुतिस्मृतिलक्षणोऽप्याम्नायो वक्तुः प्रामाण्यमपेक्ष्य प्रत्यायक इत्यर्थः । ननु वेदस्य नित्यत्वपक्ष एव वक्त्रभावाद्दोषाभावः सिद्ध्येत पौरुषेयत्वे तु कदाचित्पुरुषाणां रागद्वेषादिभिरयथार्थस्यापि वाक्यस्य दर्शनात् प्रामाण्यं न घटेतेत्याशंक्याह तद्वचनादिति । तदिति अनागतावेक्षणेनास्मद्बुद्धिभ्यो लिङ्गमृषेरिति सूत्रे प्रतिपादितस्यास्मद्विशिष्टस्य वक्तुः परामर्षः । तद्वचनात् तेन पुरुषविशेषेण प्रणयनादाम्नायस्य वेदस्य प्रामाण्यम् । अयमभिप्रायः—दोषाभावप्रयुक्तं प्रामाण्यं न नित्यत्वप्रयुक्तं नित्यत्वेऽपि श्रोत्रमनसोरागन्तुकदोषेण क्वचिदप्रामाण्यात् अनित्यत्वेपि प्रसृष्टदोषाणां चक्षुरादीनां प्रामाण्याच्च । दोषाश्च पुरुषविशेषे न सन्तीत्युपपादितम् । तस्मात्तदुक्तस्याम्नायस्य सत्यपि पौरुषेयत्वे प्रामाण्यमेवं न हि यथार्थद्रष्टा प्रक्षीणरागद्वेषः कृपावानुपदेष्टुं प्रवृत्तोऽयथार्थमुपदिशेदिति । तद्वचनादाम्नायस्येत्ययुक्तं तदर्थानुष्ठानकालेऽनुष्ठातृभिः कर्तुरस्मरणादभावसिद्धेरित्यत आह लिङ्गाच्चानित्य इति । लिङ्गादाम्नायोऽनित्य इत्यर्थः । लिङ्गमुपन्यस्यति बुद्धिपूर्वा वाक्यकृतिरिति । शब्दमात्रस्यानित्यतावादिनां नैयायिकानां मते तत्समूहस्य पदस्य तत्समूहस्य च वाक्यविशेषस्य नित्यता दुर्लभैवेत्यर्थः । प्रयोगश्च—वेदवाक्यकृतिः बुद्धिपूर्विका वाक्यरचनात्वात् लौकिकवाक्यरचनावदिति । लिङ्गान्तरमाह बुद्धिपूर्वो ददातिरित्युक्तत्वात् इति । वैदिकददातिशब्दो बुद्धिपूर्वकः ददातिरित्युक्तत्वात् लौकिकतच्छब्दवत् । अस्मर्यमाणकर्तृक-

(१)प्रसिद्धाभिनयस्य चेष्टया प्रतिपत्तिदर्शनात् तदप्यनुमानमेव ॥

(२)आप्तेनाप्रसिद्धस्य गवयस्य गवा गवयप्रति-

---

त्वं च "प्रजापतिर्वा इदमेक आसीन्नाहरासीन्न रात्रिरासीत् स तपोऽतप्यत तस्मात्तपसश्चत्वारो वेदा अजायन्त"इत्यादिना असिद्धमेव। तदेवमनित्यत्वे वेदस्य सिद्धे पुरुषवचसां द्वैतोपलम्भात् प्रामाण्यसन्देहे सति दृष्टेऽर्थे सन्देहात् प्रवृत्तिसंभवेपि अदृष्टेऽर्थे प्रचुरवित्तव्ययायाससाध्ये प्रेक्षावत्प्रवृत्तिः प्रामाण्यावधारणं विना न भवेदिति लौकिकवचसो वक्तृगुणावगतिपूर्वकप्रामाण्यमिव वेदेऽपि तथा प्रामाण्यान्निर्विचिकित्समनुष्ठानमित्यलं प्रपञ्चेन। स्वतःप्रामाण्यवादिमीमांसकमतखण्डनप्रकारस्तु कन्दल्यादौ द्रष्टव्यः। अत्र १११ ३७० ३४५ ३४६ २२५ २२६ २२७ सूत्राणि,३ सूत्रं च द्रष्टव्यम्।

(१)शब्दानन्तरमुपमानस्यान्तर्भावो यद्यपि वक्तुमुचितस्तथापि शब्दविशेषरूपचेष्टायास्तत्प्रस्तावेऽन्तर्भावमाह प्रसिद्धाभिनयस्येति। कराकुञ्चनाद्यभिनयस्याह्वानादिप्रतीतिजनकत्वेन चेष्टां प्रमाणान्तरमवधारयन्ति केचित्, तन्मतं दूषयितुमयमुपन्यासः। प्रसिद्धो व्याप्त्या गृहीतोऽभिनयः सङ्केतविशेषो येन पुरुषेण तस्य चेष्टया कायिकव्यापारेण प्रतिपत्तिदर्शनात् प्रतिपत्तिदर्शनरूपत्वात्, तदपि दर्शनमुपलभ्यमानमनुमानमेवानुमानफलमेवेत्यर्थः। अयमभिप्रायः—सति चेष्टायाः प्रामाण्ये तदीयप्रवेशश्चिन्तनीयः प्रमाणमेवासौ न भवति। सा तु द्विधा कृतसमयाकृतसमयभेदात्। तत्र प्रथमाऽभिप्रायस्थशब्दस्मरणमात्रोपयोगिनी लिपिवत्। शब्द एव तु चेष्टयोत्पादितस्मरणरूपः प्रमाणमर्थे। द्वितीया तु न प्रमाणान्तरमविनाभावात् न हि यत्र धूमस्तत्राग्निरित्यनौपाधिकसम्बन्धवद्यत्रोर्ध्वतर्जनी तत्र दशसंख्यापदार्थस्मरणमिति नियमः भयोपदर्शनादौ व्यभिचारात् स्मारकत्वेपि न प्रमाणमित्यन्यत्र विस्तरः।

(२)उपमानमन्तर्भावयति आप्तेनेति। आप्तेन प्रसिद्धसादृश्येना-

पादनादुपमानमाप्तवचनमेव ॥
(१)दर्शनार्थादर्थापत्तिर्विरोध्येव(२)श्रवणादनुमितानुमानम्।

---

प्रसिद्धगवयस्याज्ञातगवयस्य कीदृग्गवय इति जिज्ञासावतो गवा गोसादृश्येन गवयशब्दवाच्यस्य प्रतिपादनाद्यथा गौस्तथा गवय इत्याप्तवचनमेवातिदेशवाक्यमेवोपमानं प्रमाणमित्यर्थः । वाक्या-देव संज्ञासंज्ञिपरिच्छेदस्यापि सिद्धेः, आप्तवचनं चानुमानमेव तस्मादुपमानमप्यनुमानमेवेत्यभिप्रायः । यत्तु वने गवयदर्शनात् स्मृतायां गवि मदीया गौरेतत्सदृशीति सारूप्यज्ञानमुपमानाव-षय इति मीमांसकमतं तदपि न सामान्यवत् प्रत्येकं व्यक्तिगतं सा-दृश्यं न संयोगवदुभयत्र पर्याप्तं गोपिण्डस्यादर्शनेऽपि वने गवये गोस-दृशोऽयमिति प्रतीत्युत्पादात् स्मरणात्मकमेवेति कन्दल्यादौ द्रष्टव्य-म् । गोसदृशस्य गवयशब्दवाच्यत्वज्ञानं तु गवयशब्दो गोसदृशस्य वाचकः असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् घटशब्दव-दित्याद्यनुमानमेव । प्रत्यक्षे गवये सादृश्यज्ञानं तु प्रत्यक्षमेवे-न्द्रियार्थसन्निकर्षजत्वादित्यवधेयम् ।

(१)अर्थापत्तिमपि प्रमाणान्तरं मन्यन्ते वादिनस्तद्दूषयन्नाह दर्श-नार्थादिति । दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थान्तरकल्पना-ऽर्थापत्तिः । सा द्विविधा-दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति । तत्र प्र-थमा यथा जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिःसत्त्वकल्पनं त-द्विना जीवित्वानुपपत्तेः । तत्र प्रथमदूषणाभिप्रायेण दर्शनार्था-दिति पदम् । दृश्यत इति दर्शनं तच्चासावर्थश्चेति दर्शनार्थः, प-ञ्चभिः प्रमाणैरवगतोऽर्थः तस्माद्दर्शनार्थादर्थान्तरस्यावगतिः सा विरोध्येव विरोध्यनुमानमेवेत्यर्थः । यस्य यथा नियमस्तस्य तथैव लिङ्गत्वम् । इह तु प्रमाणान्तरविरुद्ध एवार्थोऽर्थान्तराविनाभूत इ-ति विरोध्येव लिङ्गम् । तथा च यद्यनुपपत्तिमात्रेण गृहाभावो ब-हिर्भावं कल्पयति नियमहेतोरभावादर्थान्तरमपि कल्पयेदित्यभि-प्रायः । अयमत्र प्रयोगः-देवदत्तो बहिःसत्तावान् जीवित्वे सति गृहेऽसत्त्वादहमिवेति ।

(२)श्रुतार्थापत्तिमन्तर्भावयन्नाह श्रवणादिति । लिङ्गभूतेन श्रुतेन

(१)सम्भवोऽप्यविनाभावित्वादनुमानमेव ॥

(२)अभावोऽप्यनुमानमेव । यथोत्पन्नं कार्यं कारणसद्भावे लिङ्गम् , एवमनुत्पन्नं कार्यं कारणासद्भावे लिङ्गम् ॥

---

पीनो देवदत्तो दिवा न भुंक्त इति वाक्येनानुमितात् पीनत्वात् तत्कारणस्य रात्रिभोजनस्यानुमानमित्यर्थः । श्रवणादुक्तवाक्यश्रवणादनुमितानुमानमिति भाष्यसन्दर्भः । अयञ्च प्रयोगः—देवदत्तो रात्रिभोजी पीनत्वे सति दिवाऽभोजित्वादिति । न चासिद्धिः वाक्यप्रामाण्यान्यथानुपपत्त्या तत्सिद्धेरिति नार्थापत्तिः प्रमाणान्तरमिति सिद्धम् ।

(१)'शतं सहस्रे संभवतीति' संभवाख्यात्प्रमाणान्तरात् सहस्रेण शतज्ञानमिति केचित्तन्मतनिरासायाह । संभवोपीति । इदं शतसंख्यावत् सहस्रसंख्यावत्वाच्छतसंख्याव्याप्यपञ्चाशतसंख्यायुक्तफलपुञ्जवदिति प्रयोगोऽत्र बोध्यः । अत्र ३४६ सूत्रम् ।

(२)ननु तथापि यत्र प्रमाणान्तराणां प्रसक्तिर्विरोधस्तदभावाख्यं प्रमाणमभ्युपेयमत आहाऽभावोपीति । अपिना क्वचित् प्रत्यक्षमेवेत्यर्थः । नन्वभावस्य नेन्द्रियेण सन्निकर्षो नापि सत्तामात्रेण ज्ञाप्यमाणस्य क्वचित् लिङ्गत्वमत आह यथोत्पन्नमिति । कारणसद्भावे सामग्र्याः सद्भावे । अनुत्पन्नं कार्यं कार्यप्रागभावः । कारणासद्भावे सामग्र्या अभावे । लिङ्गं ज्ञापकमित्यर्थः । स चाभावः क्वचित् प्रत्यक्षः क्वचिच्चानुमानिक इति लोकसिद्धमिति भावः । योऽपि अभावं प्रमाणं वदति तस्यापि न ज्ञानानुत्पादमात्रात् प्रमेयभूतभावज्ञानं स्वरूपविप्रकृष्टस्यापि वस्तुनोऽभावप्रसङ्गात् किन्तु ज्ञानहेतुषु सत्सु ज्ञानयोग्यस्य वस्तुनो ज्ञानानुत्पादोऽभावावगतिहेतुः । न चायोग्यानुपलम्भाद्योग्यानुपलम्भे कश्चित्स्वरूपतो विशेषोऽभावस्य निरतिशयत्वात् तेन नायमिन्द्रियवत् स्वशक्त्या बोधकः किन्तु योग्यानुपलम्भो ज्ञेयाव्यभिचारी अयोग्यानुपलम्भस्तु तद्व्यभिचारी ज्ञेये सत्यपि तस्य सम्भवात् तथाच योग्यानुपलम्भेऽभावप्रतिपाद-

(१)तथैवैतिह्यमप्यवितथमाप्तोपदेश एवेति ॥

को नान्यः। एवं चाभावो लिङ्गमेवाविनाभावग्रहणसापेक्षत्वात् अनपेक्षत्वेऽनवस्थाप्रसङ्गः स्यात्। अपि च भावज्ञानवदभावज्ञानेपि इन्द्रियसंनिकर्षो हेतुरिति सोऽपि प्रत्यक्ष एव। भावांशेनैव तत्संनिकर्षे तु न किमपि प्रमाणम्। कार्यगम्या हि योग्यता–यथा भावपदार्थे इन्द्रियान्वयव्यतिरेकानुविधायि कार्यं तद्वदभावेऽपीति भाववदभावोऽपि इन्द्रियग्रहणयोग्य एव। कार्यदर्शनाच्चास्येन्द्रियसम्बन्धोऽपि विशेषणविशेष्यभावादिः कल्पित एव नैयायिकैरित्यलं पल्लवितेन।

ये तु पुनरभावरूपस्य प्रमेयस्य प्रशस्तपादाचार्यैरनङ्गीकृतत्वान्न साध्वी प्रमाणचिन्तेति वदन्ति ते प्रष्टव्याः, नास्तीति प्रतीतिस्सर्वजनसिद्धा किं सालम्बना निरवलम्बना वा? द्वितीये निरालम्बनं विज्ञानमिच्छतां विदुषां प्रतिभापराकाष्ठा। प्रथमे भूतलस्यालम्बनत्वे कण्टकादिमत्यपि भूतले कण्टको नास्तीति ज्ञानं तत्पूर्वकश्च निःशङ्कं गमनागमनलक्षणव्यापारो दुर्निवारः स्यात्। भाव एवैकाकी सद्वितीयश्चेति द्वयीमवस्थामनुभवति। एकाकित्वं स्वरूपमात्रं कैवल्यं वा तदा हि जिघृक्षितो घटादिरनुपलब्धो घटाद्यभावव्यवहारं प्रवर्तयति इति मन्यसे चेत् घटादेरभावादूभूतलं च व्यतिरिच्यैकाकिशब्दार्थः कः समर्थितो यो भवद्भिर्नास्तीति प्रतिषेधधियो ह्यालम्बनं स्वीक्रियेत विषयवैलक्षण्यं विना विलक्षणबुध्युत्पादाभावात्। भावस्य स्वाभाविकमेकत्वमेवैकाकित्वमिति चेत्, किमेकत्वम् प्रतियोगिरहितत्वमेकत्वसंख्या वा? एकत्वसंख्या तावद्यावदाश्रयभाविनी भावस्य सद्वितीयावस्थायामप्यनुवर्तते। अथ प्रतियोगिरहितत्वं स्वाभाविकमेकत्वमुच्यते सिद्धं प्रमेयान्तरम्। स च चतुर्व्यूहः प्रागभावप्रध्वंसाभावेतरेतराभावात्यन्ताभावभेदात् इति। निःश्रेयसहेतुपदार्थतत्त्वज्ञाननिरूपणपरेण भाष्यकारेण समुपेक्षितोपि अभावपदार्थः सूत्रकारमते सर्वथाऽस्तीति भाष्यसमालोचनपरैरस्मत्परमगुरुवरैः श्रीकैलासचन्द्रभट्टाचार्यैः सिद्धान्तितमिति तत्रैव द्रष्टव्यम्।

(१)ऐतिह्यमन्तर्भावयति तथैतिह्यमिति। इति हेति निपातसमुदा-

(१)पञ्चावयवेन वाक्येन स्वनिश्चितार्थप्रतिपादनं परार्थानुमानम्। पञ्चावयवेनैव वाक्येन संशयितविपर्यस्ताव्युत्पन्नानां परेषां स्वनिश्चितार्थप्रतिपादनं परार्थानुमानं विज्ञेयम्॥

---

थः। पुरावृत्ते वर्तते तस्य भाव ऐतिह्यम्। स्वार्थे ष्यञ्। वितथं तदप्रमाणमेवावितथमाप्तोपदेश एव स चानुमानमित्यनुमानान्न व्यतिरिच्यते ऐतिह्यमित्यभिप्रायः।

(१)परार्थानुमानव्युत्पादनायाह पञ्चावयवेनेति। नन्वनुमानं लिङ्गं पञ्चावयवप्रयोगसहायता त्वस्यासिद्धा तद्व्यतिरेकेणानुमानसंभवात्। न चात्रार्थेऽप्रतिपन्नोऽसौ परप्रतिपादनानुपपत्तेरत आह पञ्चावयवेनेत्याचार्याः। अर्थ्यते गम्यतेऽनुमेयमनेनेत्यर्थो लिङ्गं तस्यार्थस्य स्वनिश्चितस्य साध्याविनाभावितया स्वयं गृहीतस्य प्रतिपाद्यतेऽनेनेति प्रतिपादनं प्रतिपादकं यत् परार्थं परसन्देहव्युत्सादार्थं तत् परार्थानुमानमित्यर्थः। केन रूपेण पुनस्तत्प्रतिपादकत्वन्तदाह पञ्चावयवेनैव वाक्येनेति। इत्थंभूतलक्षणे तृतीया पञ्चावयववाक्यरूपमित्यर्थः। यद्वा सुनिश्चितस्यानुमेयस्य प्रतिपादनं प्रतिपत्तिर्येन लिङ्गप्रतिपादनाद्यान्तरव्यापारवता पञ्चावयवेन वाक्येन स्मृतिसमारूढेन परार्थं भवति तद्वाक्यं परार्थानुमानमिति। केवलशब्दस्यानिमित्तत्वान्नास्मिन् पक्षेऽनुमेयप्रतिपत्तेः शाब्दत्वप्रसङ्ग इति ध्येयम्। द्व्यवयववादिबौद्धादिमतनिराकरणद्वारा स्वोक्तं विवृणोति पञ्चावयवनैवेति। संशयितोऽर्थे सन्दिग्धः विपर्यस्तः मिथ्याज्ञानवान् अव्युत्पन्नो मूढस्ते त्रयोऽपि प्रतिपादनार्हास्तरत्वप्रतीत्यभावात् यो यानि पदानि प्रयुङ्क्ते स तत्पदार्थसंसर्गप्रतिपादनाभिप्रायवानिति स्वात्मनि नियमे गृहीते तदनु पदसमूहप्रयोगाद्वक्तुस्तत्पदार्थसंसर्गप्रतिपादनाभिप्रायावगतिद्वारा पदेभ्यो वाक्यार्थानुमानमित्यशाब्दो वाक्यार्थ इति हृदयम्। निरवयवस्य स्फोटस्य शब्दरूपत्वात् पञ्चावयववाक्यं तदर्थधियमाधत्ते इति कथं सङ्गच्छत इति तु न वाच्यम्, औपाधिकस्यैवास्याभिन्नार्थप्रत्ययस्याङ्गीकारात्।

## (२०)अवयवप्रकरणम् ।

(१)अवयवाः पुनः-प्रतिज्ञापदेशनिदर्शनानुसन्धान-प्रत्याम्नायाः । तत्रानुमेयोद्देशोऽविरोधी प्रतिज्ञा । प्रतिपिपादयिषितधर्मविशिष्टस्य धर्मिणोऽपदेशविषयमापादयितुमुद्देशमात्रं प्रतिज्ञा । यथा द्रव्यं वायुरिति ।

---

एकार्थप्रतीतिहेतुत्वमेव हि उपाधिः । एकप्रतीतिहेतुत्वं च क्षणिकत्वेऽपि स्मर्यमाणानां नियतानुपूर्वीविशिष्टानां यावन्तो यादृशा ये चेत्यादिपरिगृहीतानां सुकरमेवान्यथा स्फोटाङ्गीकारेपि समानत्वादिति कृतं विस्तरेण। पदप्रक्रियादिप्रकारोऽत्र किरणावल्यां द्रष्टव्यः ।

### ( २० ) अवयवप्रकरणम् ।

(१)पञ्चावयवं वाक्यमित्यत्र विशेषज्ञानायाहाऽवयवाः पुनरिति । पुनःशब्देन दिङ्नागाद्यभिमतजिज्ञासादिदशावयववादो निरस्तः । प्रतिज्ञां न्यायप्राप्तामाह तत्रेति । तत्र तेष्ववयवेषु मध्ये । अनुमेयोद्देशत्वादस्तु कृतकं तदनित्यमित्यस्य प्रा[illegible]त्ववारणायाह प्रतिपिपादयिषितधर्मविशिष्टस्येत्यादि । अस्तित्वादिधर्मापेक्षया सर्व एव धर्मिणो धर्मविशिष्टा अतः प्रतिपादयितुमिष्टेन धर्मेण विशिष्टो यो धर्मी पक्षस्तस्योद्देशमात्रमभिधानमात्रं साधनरहितं प्रतिज्ञा । न च तच्छून्यमुद्देशमात्रं किञ्चित्करमित्याहापदेशविषयमापादयितुमिति । अपदेशो हेतुः तस्य विषयमापादयितुं प्रतिपादयितुं प्रतिज्ञाने खलु यत्र क्वचन साध्यसाधनाय हेतुः प्रयुज्यते तस्य सिद्धत्वात् अपि तु कुत्रचिद्धर्मिणि प्रतिनियते तस्मिन्ननुपन्यस्यमाने निराश्रयो हेतुर्न प्रवर्तेत तस्याप्रवृत्तौ न साध्यसिद्धिरतः प्रतिज्ञया धर्मिग्राहकमानं दर्शयन्त्या हेतोराश्रयो धर्मी संनिधाप्यते इत्याश्रयोपदर्शनद्वारा हेतुं प्रवर्तयन्ती प्रतिज्ञा साध्यसिद्धेरङ्गम्, तथाच न्यायभाष्यम्—"असत्यां प्रतिज्ञायामनाश्रया हेत्वादयो न प्रवर्त्तेरन्निति" । प्रतिज्ञाया उदाहरणमाह यथेति । यो हि वायुं जानन्नपि तस्य द्रव्यत्वे संदिग्धस्तं प्रति सिषाधयिषितेन द्रव्यत्वेन विशिष्टस्य वायोरभिधानं वायुर्द्रव्यमिति प्रतिज्ञेत्यर्थः । अत्र ३४२ सूत्रम् ।

(१)अविरोधिग्रहणात् प्रत्यक्षानुमानाभ्युपगतस्वशास्त्रस्ववचनविरोधिनो निरस्ता भवन्ति । यथाऽनुष्णोऽग्निरिति प्रत्यक्षविरोधी, घनमम्बरमित्यनुमानविरोधी, ब्राह्मणेन सुरा पेयेत्यागमविरोधी, वैशेषिकस्य सत्कार्यमिति ब्रुवतः स्वशास्त्रविरोधी, न शब्दोऽर्थप्रत्यायक इति स्ववचनविरोधी ॥

## (२१)अपदेशप्रकरणम् ।

(२)लिङ्गवचनमपदेशः । यदनुमेयेन सहचरितं त-

---

(१)अविरोधिपदस्य तात्पर्यमाहाविरोधिग्रहणादिति । वादिना साधयितुमिष्टोऽर्थस्साध्य इत्युच्यते प्रत्यक्षादिविरुद्धोऽपि कदाचिदनेन भ्रमात् साधयितुमिष्येत चेत् प्रत्यक्षादिविरुद्धमपि वचनं प्रतिज्ञा स्यात् अत अविरोधिपदमित्यर्थः । इदमत्राभिप्रेतम्—बाधाभिप्रेत एव न साध्यताऽपि तु साधनार्हं स एव च पक्षस्तदितरः पक्षाभास इति । प्रत्यक्षादिविरोधोदाहरणान्याह यथाऽनुष्णोऽग्निरित्यादिना । घनमम्बरमिति । धर्मिग्राहकप्रमाणसिद्धेन नित्यत्वेन निरवयवत्वेन च निविडावयवमम्बरमिति प्रतिज्ञा विरुध्यते इत्यभिप्रायः । ब्राह्मणेनेति । अत्र क्षीरमुदाहरणं तथाच यथाऽऽगमेन क्षीरपानस्य पापसाधनत्वाभावः प्रतिपादितस्तथा तेनैव सुरापानस्य तत्साधनत्वं प्रतिपादितमिति ब्राह्मणस्य सुरापानप्रतिज्ञाया दृष्टान्तग्राहकप्रमाणविरोध इत्यर्थः । स्वशास्त्रेति । स्वशास्त्रं वैशेषिकं तत्र असदुत्पद्यत इति प्रतिपादनात् सदुत्पद्यते इति प्रतिज्ञा शास्त्रेण विरुध्यत इति भावः । शब्द इति । यदि शब्दो नार्थजनकः स्यात्तर्हि अर्थप्रतिपादनप्रयोजनकः शब्दप्रयोगोऽनुपपन्नः, अथैतदर्थः शब्दप्रयोगस्तदभ्युपगतं शब्दस्यार्थप्रतिपादकत्वमिति प्रतिज्ञायाः स्ववचनविरोध इत्यभिप्रायः । अत्र १३१ सूत्रम् ।

(२१) अपदेशप्रकरणम् ।

(२)अपदेश इति । कथ्यत इति । शेषः । अस्यार्थमाह यदनुमेयेनेति ।

त्समानजातीये सर्वत्र सामान्येन प्रसिद्धं तद्विपरीते च सर्वस्मिन्नसदेव तल्लिङ्गमुक्तं, तस्य वचनमपदेशः। यथा क्रियावत्त्वाद्गुणवत्त्वाच्च तथा च तदनुमेयेऽस्ति तत्समानजातीये च सर्वस्मिन् गुणवत्त्वमसर्वस्मिन् क्रियावत्त्वम्। उभयमप्येतदद्रव्ये नास्त्येव तस्मात् तस्य वचनमपदेश इति सिद्धम्॥

## (२२)हेत्वाभासप्रकरणम्

(१)एतेनासिद्धविरुद्धसन्दिग्धानध्यवसितवचनानामनपदेशत्वमुक्तम्भवति।

(२)तत्रासिद्धश्चतुर्विधः—उभयासिद्धोऽन्यतरासि-

---

उदाहरणमाह। यथेति। वायुर्द्रव्यं क्रियावत्त्वाद्गुणवत्त्वाच्चेति प्रयोगः। अस्यां प्रतिज्ञायां क्रियावत्त्वादिति क्रियावत्त्वस्य गुणवत्त्वादिति च गुणवत्त्वस्य लिङ्गस्य वचनमपदेशः, तयोरुपन्यासः सपक्षैकदेशवृत्तेः सपक्षव्यापकस्य च हेतुत्वप्रदर्शनार्थ इत्यर्थः। तत्रलिङ्गलक्षणं सङ्गमयति तथाचेति। तत्-गुणवत्त्वमनुमेये वायौ तत्समानजातीये सपक्षे द्रव्ये सर्वस्मिन्नस्ति असर्वस्मिन् सपक्षैकदेशे मूर्तद्रव्यमात्रे क्रियावत्त्वमिति। उभयमप्येतत् क्रियावत्त्वं गुणवत्त्वं चाद्रव्ये विपक्षे नास्त्येवेत्युभयमपदेशो हेतुरिति सिद्धम्। अत्र ३४२ ३४३ सूत्रे।

( २२ ) हेत्वाभासप्रकरणम्।

(१)एतेनेति। एतेनापदेशलक्षणवचनेनार्थादसिद्धादीनामनपदेशत्वमित्यर्थः। अनुमेयेन सहचरितमित्यनेनासिद्धस्य तत्समानजातीये चेत्यनेन विरुद्धानध्यवसितवचनयोस्तद्विपरीते नास्त्येवेत्यनेन संदिग्धवचनस्य चानपदेशत्वमिति विवेकः।

(२)तेष्वसिद्धमाह तत्रेति। उभयासिद्धमुदाहरति उभयोरिति। शब्दे सावयवत्वं वादिप्रतिवादिनोरसिद्धमित्यर्थः। अन्य-

द्धः तद्भावासिद्धोऽनुमेयासिद्धश्चेति। तत्रोभयासिद्धः—उभयोर्वादिप्रतिवादिनोरसिद्धः यथाऽनित्यः शब्दः सावयवत्वादिति। अन्यतरासिद्धः—यथाऽनित्यः शब्दः कार्यत्वादिति। तद्भावासिद्धो—यथा धूमभावेनाग्न्यधिगतौ कर्तव्यायामुपन्यस्यमानो वाष्पो धूमभावेनासिद्ध इति। अनुमेयासिद्धो—यथा पार्थिवं द्रव्यं तमः कृष्णरूपवत्त्वादिति।

(१)यो ह्यनुमेयेऽविद्यमानोऽपि तत्समानजातीये सर्वस्मिन्नास्ति तद्विपरीते चास्ति स विपरीतसाधनाद्विरुद्धः यथा यस्माद्विषाणी तस्मादश्व इति।

---

तरासिद्धमाह यथेति। यद्यपि शब्दे परमार्थतः कार्यत्वं तथापि मीमांसकस्यासिद्धं तत्कथमनित्यत्वं साधयेत् यावन्न साध्यत इत्यन्यतरासिद्धोऽयं हेतुरित्यर्थः। तद्भावासिद्धमुदाहरति यथा धूमभावेनेति। धूमभावेन धूमस्वरूपेणेत्यर्थः। अनुमेयासिद्धमाह पार्थिवं द्रव्यमिति। तमः पार्थिवं द्रव्यं कृष्णरूपवत्त्वादिति प्रयोगः। आरोपितकार्ष्ण्यमात्रप्रतीतेस्तमसो द्रव्यान्तरत्वाभावेन तमो द्रव्यमित्याद्याश्रयासिद्धमित्यर्थः। विशेषणासिद्धादय उभयासिद्धादिष्वन्तर्भूता इति पृथङ्नोक्ता इति ध्येयम्।

(१)विरुद्धहेत्वाभासमाह यो ह्यनुमेय इति। उदाहरति यथेति। कश्चिद्यदा वनान्तरिते गोपिण्डे विषाणमुपलभ्यायं पिण्डोऽश्वो विषाणित्वादिति साधयति तदा विषाणित्वमश्वजातीयेऽविद्यमानमश्वविपरीते गोमहिष्यादौ विपक्षे विद्यमानं व्याप्तिबलेनाश्वत्वविरुद्धमनश्वत्वं साधयत् अभिमतसाध्यविपरीतसाधनाद्विरुद्धमित्युच्यते। इदञ्च सर्वत्रानश्वे सत्त्वाभावादावसत्त्वात् विपक्षैकदेशवृत्तिविरुद्धोदाहरणम्, समस्तविपक्षव्यापकविरुद्धोदाहरणन्तु नित्यः शब्दः कृतकत्वादिति बोध्यम्।

(१) यस्तु सन्ननुमेये तत्समानासमानजातीययोः साधारणः सन्नेव स सन्देहजनकत्वात् सान्दिग्धः यथा यस्माद्विषाणी तस्माद्गौरिति। एकस्मिंश्च द्वयोर्हेत्वोर्यथोक्तलक्षणयोर्विरुद्धयोः सन्निपाते सति संशयदर्शनादयमन्यः सन्दिग्ध इति केचित्। यथा मूर्तत्वामूर्तत्वं प्रति मनसः क्रियावत्त्वास्पर्शवत्त्वयोरिति। नन्वयमसाधारण एवाचाक्षुषत्वप्रत्यक्षत्ववत् संहतयोरन्यतरपक्षासम्भवात् ततश्चानध्यवसित इति वक्ष्यामः। ननु शास्त्रे तत्रतत्रोभयथा दर्शनं संश-

(१)समानासमानजातीययोरिति। सपक्षविपक्षयोरित्यर्थः। उदाहरति यथेति। यदाऽयं पिण्डो गौर्विषाणित्वादिति साध्यते तदा विषाणित्वं गवि महिषे च दर्शनात्सन्देहं जनयन् सन्दिग्धो हेत्वाभासः स्यादित्यर्थः। सपक्षविपक्षयोरेकधर्म्मदर्शनाद्यथा धर्मिणि सन्देहे न सन्दिग्धहेत्वाभासस्तथैकस्मिन् धर्मिणि तुल्यबलयोर्विरुद्धयोर्हेत्वोः संनिपाते संशयदर्शनादपि सन्दिग्धो हेत्वाभासः स्यात् इति एकदेशिमतखण्डनाय तन्मतमाह एकस्मिश्चेति। उदाहरणमाह यथेति। मनो मूर्तं क्रियावत्वाच्छरादिवत्, अमूर्तं च मनोऽस्पर्शत्वाद् गगनवदिति विरुद्धार्थप्रसाधकयोः क्रियावत्त्वास्पर्शवत्त्वयोर्हेत्वोः संनिपाते मनसि मूर्तत्वामूर्तत्वयोः संशय एवेत्यभिप्रायः। तत्र स्वमतमाह नन्वयमिति। क्रियावत्त्वास्पर्शवत्त्वयोः प्रत्येकं निर्णयहेतुत्वेन संशयाजनकत्वेऽपि तयोस्संनिपातोऽयमसाधारण एव संहतयोस्तयोर्मनोव्यतिरेकेणान्यतरपक्षे सपक्षे विपक्षे वाऽसंभवात्। यथाऽचाक्षुषत्वप्रत्यक्षत्वयोः प्रत्येकं गुणव्यभिचारेऽपि समुदितयोर्गुणव्यतिरेकेणान्यत्रासंभवः। ततश्चासाधारणत्वादेवानध्यवसितोऽयमध्यवसायं न करोतीति वक्ष्याम इति भाष्यार्थः। अनध्यवसितवचनेऽस्यान्तर्भाव

यकारणमपदिश्यत इति । न, संशयो विषयद्वैतदर्शनात् । संशयोत्पत्तौ विषयद्वैतदर्शनं कारणम् तुल्यबलत्वे च तयोः परस्परविरोधान्निर्णयानुत्पादकत्वं स्यान्न तु संशयहेतुत्वम् । न च तयोस्तुल्यबलत्वमस्ति अन्यतरस्यानुमेयोद्देशस्यागमबाधितत्वादयं तु विरुद्धभेद एव ।

---

इत्यर्थः । विरुद्धाव्यभिचारिणोऽस्य स्थापिते संशयहेत्वभावे शास्त्रविरोधं पूर्वपक्षी चोदयति नन्विति । तत्रतत्र स्थाने उभयथा दर्शनं उभाभ्यां विरुद्धधर्माभ्यां सहैकस्य धर्मिणो दर्शनं संशयकारणमिति शास्त्रेऽपदिश्यते कथ्यत इत्यर्थः । सूत्रार्थस्तु यथा येन धर्मेण परमाणौ मूर्तत्वाव्यभिचारिणा क्रियावत्त्वेन समं दृष्टं मनस्तस्मात्, अयथादृष्टं आत्मनि अमूर्तत्वाव्यभिचारिणा स्पर्शवत्त्वेन समं दृष्टं च मन इत्युभयथा दृष्टत्वात्संशयः–किं क्रियावत्त्वान्मूर्तं मन उतास्पर्शवत्त्वान्मूर्तमिति । परिहरति नेति । न त्वदुक्तविरोधो नेत्यर्थः । यतो विषयद्वैतदर्शनात् संशयो जायत इति । इदमेव विवृणोति संशयोत्पत्ताविति। यत्रोच्चैस्तरे स्थाणुर्वा पुरुषो वेति संशयो जायते तादृशस्य विषयस्य पूर्वं द्वैतदर्शनमुभयथादर्शनं स्थाणुत्वपुरुषत्वभ्यां सह दर्शनं हेतुर्न त्वेकस्मिन्धर्मिणि विरुद्धधर्मद्वयसंनिपातः संशयकारणं तथाच विरुद्धाव्यभिचारिधर्मद्वयोपानिपातात् संशय इति नोक्तसूत्रार्थः किन्तु पूर्वं यथादृष्टं स्थाण्वादि कालान्तरे देशान्तरे वा तत्समं दृष्ट्वा विशेषादर्शने सति संशयः । एवं पूर्वदृष्टमेव पुरुषं यथाऽवस्थादिविशेषेण दृष्टं जटिलं मुण्डितं वा ततोऽयथादृष्टमवस्थाभेदेन दृष्टं कालान्तरे दृष्ट्वा अवस्थाविशेषमपश्यतः स्मरतश्च संशयो भवति किमयमिदानीं जटिलो मुण्डो वेति तत्सूत्रार्थः । तुल्यबलत्वे चेति । निर्णयानुत्पादकत्वं स्यात् स्वसाध्यसाधकत्वं न स्यादित्यर्थः । न तु संशयहेतुत्वं विशेषानुपलम्भमात्रेण विरुद्धोभयविशेषोपस्थापनाभावादिति शेषः । पूर्वं तुल्यबलत्वमङ्गीकृत्य विरुद्धाव्यभिचारिणः संशयहेतुत्वं निर-

(१)यश्चानुमेये विद्यमानस्तत्समानासमानजातीययोरसन्नेव सोऽन्यतरासिद्धोऽनध्यवसायहेतुत्वादनध्यवसितः यथा सत्कार्यमुत्पत्तेरिति । अयमप्रसिद्धोऽनपदेश इति वचनादवरुद्धः । ननु चायं विशेषः संशयहेतुरभिहितः शास्त्रे तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्टत्वादिति, नान्यार्थत्वात् । शब्दे विशेष-

---

स्तं सम्प्रति तदेव न सम्भवति इत्याह न चेति । अन्यतरस्यानुमेयोद्देशस्यामूर्तं मन इत्यस्यागमेन 'तदभावादणु मनः' इति सूत्रेण बाधितत्वात् । ननु तर्ह्ययं को दोष इत्यत आहायन्त्विति । तथाच प्रतिज्ञालक्षणेऽविरोधिपदनिवर्तितानां प्रत्यक्षादिविरुद्धानां प्रतिज्ञाभासानामागमविरुद्धो विरुद्धभेद एव न सन्दिग्ध इति भावः ।

(१) अनध्यवसितापरपर्यायमसाधारणहेत्वाभासमाह यश्चेति । उदाहरति यथेति । सर्वं कार्यमुत्पादात्पूर्वमपि सदुत्पत्तेरिति सांख्यानां प्रयोगः । तेषां सति सपक्षे गगनादावसति विपक्षे गगनकुसुमादावभावान्नैकतरपक्षाध्यवसायजनकोऽयं हेतुरिति अनध्यवसित इत्यर्थः । अभिव्यक्तिमङ्गीकुर्वतां तेषान्तु नायं हेतुः स्वतोऽसिद्ध इति विभावनीयम् । सूत्रकारसम्मतिमस्मिन् हेत्वाभासे दर्शयति अयमिति । अनैकान्तिकवदसाधारणो धर्मः संशयहेतुस्तेनायं संदिग्धश्चानपदेश इति वचनेन सङ्ग्राह्यो युक्तो न पुनरप्रसिद्धवचनेनेत्यभिप्रायेणाशङ्कते ननु चेति । शास्त्रे सूत्रे । तच्च यथा 'तुल्यजातीयेष्वित्यादि दृष्टत्वादित्यन्तम्' । तुल्यजातीयेभ्योऽर्थान्तरभूतेभ्यश्च पदार्थानां विशेषो भवति । यथा पृथिव्यां गन्धवत्त्वं विशेषो तुल्यजातीयेभ्यो जलादिद्रव्येभ्यो गुणकर्मादिभ्यश्च भवति । शब्दे च श्रावणत्वं विशेषो दृश्यते । तत्किं शब्दस्य रूपादिभ्यस्तुल्यजातीयेभ्योऽयं विशेषः किं वा विजातीयेभ्यः । यदि शब्दो गुणस्तदा सजातीयरूपादिभ्यो विशेषोऽयम् । अथ द्रव्यं कर्म वा तदा विजातीयेभ्य इति शब्दे श्रावणत्वात् द्रव्यं गुणः कर्म वेति संशय इति संशयहेतुत्वा-

दर्शनात् संशयानुत्पत्तिरित्युक्ते, नायं द्रव्यादीनामन्यतमस्य विशेषः स्याच्छ्रात्रणत्वं किन्तु सामान्यमेव सम्पद्यते । कस्मात्? तुल्यजातीयेष्वर्थान्तरेभूतेषु द्रव्यादिभेदानामेकैकशो विशेषस्योभयथा दृष्टत्वादित्युक्तं न संशयकारणम्, अन्यथा षट्स्वपि पदार्थेषु संशयप्रसङ्गात् तस्मात् सामान्यप्रत्ययादेव संशय इति ॥

---

दस्य सन्दिग्धता युक्तेति पूर्वपक्ष्यभिप्रायः । परिहरति नान्यार्थत्वादिति । कोऽसावन्यार्थ इत्यत आह शब्दे विशेषदर्शनादित्यादिना । "श्रोत्रग्रहणो योऽर्थः सशब्दः" अ. २ आ. २ सू. २१ श्रोत्रग्राह्यमर्थं शब्दत्वेन प्रतिपाद्य तस्मिन् द्रव्यं गुणो वा कर्म वेति संशयः प्रदर्शितः सूत्रकारेण । तत्र परः शङ्कते शब्द इति । शब्दे यः संशयहेतुः श्रोत्रग्राह्यत्वधर्मो भवताऽङ्गीकृतः स च विशेषस्तस्य दर्शनात् संशयानुत्पत्तिः संशयस्य विरुद्धोभयस्मृतिपूर्वकत्वात् । सा च स्मृतिर्नासाधारणधर्मदर्शनाद्भवति तस्य केनचिद्विशेषेण सहानुपलम्भात् । इत्युक्ते—इति परेणाशङ्किते । सूत्रकाराशयेन समाधत्ते नायमिति । द्रव्यादीनामन्यतमस्य द्रव्यस्य गुणस्य कर्मणो वा श्रावणत्वं न विशेषः किन्तु सामान्यमेव । कुत इत्यत आह तुल्यजातीयेष्विति । द्रव्यादिभेदानां द्रव्यगुणकर्मणां मध्ये एकैकस्य द्रव्यस्य गुणस्य कर्मणो वा तुल्यजातीयेभ्योऽर्थान्तरभूतेभ्यश्च विशेषस्योभयथा दृष्टत्वात् । अत्र सप्तमी पञ्चम्यर्थे । यथा पृथिव्यास्तुल्यजातीयेभ्यो जलादिभ्यो विशेषः पृथिवीत्वं द्रव्यत्वेन सह दृष्टम् रूपस्य च रूपत्वं विशेषो गुणत्वेन सह दृष्टं तथा शब्दस्यापि श्रावणत्वं विशेषः गुणत्वेन, तस्मादेतदपि विशेषत्वेन रूपेण द्रव्यादीनां सामान्यमेव ततश्च सामान्यरूपेणास्य संशयहेतुत्वं भवतु असाधारणरूपेण तु न तद्धेतुत्वम् विशेषस्मारकत्वाभावादित्यर्थः । तस्यापि संशयहेतुत्वे दोषमाहान्यथेति । तेषामपि असाधारणधर्मयोगित्वाच्चतश्च संशयविरामाभाव इत्यर्थः । उपसंहरति तस्मा-

(२३) निदर्शनप्रकरणम् ।

(१)द्विविधं निदर्शनं साधर्म्येण वैधर्म्येण च । तत्रानुमेयसामान्येन लिङ्गसामान्यस्यानुविधानदर्शनं साधर्म्यनिदर्शनम् । तद्यथा यत् क्रियावत् तद्द्रव्यं दृष्टं यथा शर इति । अनुमेयविपर्यये च लिङ्गस्याभावदर्शनं वैधर्म्यनिदर्शनम् । तद्यथा यदद्रव्यं तत् क्रियावन्न भवति यथा सत्तेति ॥

(२४) निदर्शनाभासप्रकरणम् ।

(२)अनेन निदर्शनाभासा निरस्ता भवन्ति । तद्यथा नित्यः शब्दोऽमूर्तत्वात् यदमूर्तं दृष्टं तन्नित्यम् यथा परमाणुर्यथा कर्म यथा स्थाली यथा तमः अम्बरवदिति

---

दिति । विरुद्धविशेषोभयसहचरस्य साधारणधर्मदर्शनस्य तदुभयस्मारकत्वेन संशयहेतुता न त्वसाधारणधर्मदर्शनस्येत्यभिप्रायः ।
अत्र १३१ १३२ १३३ सूत्राणि ।

(२३) निदर्शनप्रकरणम् ।

(१)क्रमप्राप्तं निदर्शनस्वरूपं दर्शयितुमाह द्विविधमिति । साध्यसाधनानुगमनिदर्शकं साधर्म्यनिदर्शनं, साध्याभावेन साधनाभावनिदर्शकं च वैधर्म्यनिदर्शनमिति द्वैविध्यम् इति भावः । अन्यत्सुगमम् । अत्र ३४२ ३४३ सूत्रे ।

(२४) निदर्शनाभासप्रकरणम् ।

(२)अनेनेति । निदर्शनलक्षणेनेत्यर्थः । निदर्शनाभासाः केनचित्साधर्म्येण निदर्शनवदाभासमाना निरस्ता भवन्ति लक्षणाभावादिति शेषः । स्ववाक्ये तान्परिहर्तुं परवाक्ये चोपालम्भं कर्तुं तत्स्वरूपमाह तद्यथेति । यथा परमाणुरिति लिङ्गासिद्धो निदर्शनाभासः परमाणोरमूर्तत्वात् । यथा कर्मेति अनुमेयासिद्धः कर्मणो-

यद् द्रव्यं तत् क्रियावद्दृष्टमिति च लिङ्गानुमेयोभयाश्रयासिद्धाननुगतविपरीतानुगताः साधर्म्यनिदर्शनाभासाः।

(१)यदनित्यं तन्मूर्तं दृष्टम् यथा कर्म यथा परमाणुर्यथाऽऽकाशं यथा तमः घटवत् यन्निष्क्रियं तदद्रव्यञ्चेति लिङ्गानुमेयोभयाव्यावृत्ताश्रयासिद्धाव्यावृत्तविपरीतव्यावृत्ता वैधर्म्यनिदर्शनाभासा इति ॥

(२५)अनुसन्धानप्रकरणम्।

(२)निदर्शनेऽनुमेयसामान्येन सह दृष्टस्य लिङ्ग-

---

ऽनित्यत्वात्। यथा स्थालीत्युभयासिद्धः स्थाल्यां नित्यत्वामूर्तत्वयोस्साध्यहेत्वोरभावात्। तम इत्याश्रयासिद्धः तस्य वस्तुत्वाभावात्। अम्बरवदिति अननुगतो निदर्शनाभासः तत्रोभयसत्त्वेपि यदमूर्तं तन्नित्यमिति प्रतीत्यभावात्। अम्बरवदिति सामान्यनिदर्शनेऽप्रतिपन्नसाध्यसाधनयोरम्बरे न सद्भावप्रतीतिरित्यननुगतोऽयं निदर्शनाभासः।

(१)यथा कर्मेति लिङ्गाव्यावृत्तो वैधर्म्यदृष्टान्ताभासः कर्मणोऽमूर्तत्वात्। परमाणुरिति अनुमेयाव्यावृत्तोऽनुमेयस्य नित्यत्वस्य तत्र भावात्। आकाशमित्युभयाव्यावृत्तो ततोऽमूर्तत्वनित्यत्वयोरव्यावृत्तत्वात्। तम इति आश्रयासिद्धः। तस्य वस्तुत्वाभावेन किमाश्रया साध्यसाधनयोर्व्यावृत्तिः स्यात्। घटवदित्यव्यावृत्तः तत्रोभयव्यावृत्तिसत्त्वेऽपि यदनित्यं तन्मूर्तमित्यनुक्तेर्नोभयव्यावृत्तिप्रतिपत्तिर्विप्रतिपन्नस्येति अयमव्यावृत्तः। यन्निष्क्रियं तदद्रव्यमिति विपरीतव्यावृत्तः साध्यसाधनयोरिव तदभावयोर्व्याप्यव्यापकभावात्। अत्र १३१ सूत्रम्।

(२५) अनुसन्धानप्रकरणम्।

(२)उपनयापरपर्यायमनुसन्धानमाह निदर्शन इति। दृष्टान्ते साध्याविताभूतत्वेन दर्शितं लिङ्गं पक्षेऽनुसन्धीयत इति भावः। इदमेव

सामान्यस्यानुमेयेऽन्वानयनमनुसन्धानम् । अनुमेयधर्ममात्रत्वेनाभिहितं लिङ्गसामान्यमनुपलब्धशक्तिकं निदर्शने साध्यधर्मसामान्येन सह दृष्टमनुमेये येन वचनेनानुसन्धीयते तदनुसन्धानम् । तथा च वायुः क्रियावानिति । अनुमेयाभावे च तस्यासत्त्वमुपलभ्य न च तथा वायुर्निष्क्रिय इति ॥

(२६)प्रत्याम्नायप्रकरणम् ।

(१)अनुमेयत्वेनोद्दिष्टे चानिश्चिते च परेषां नि-

---

विवृणोति अनुमेयेति । प्रतिज्ञाहेतुवाक्याभ्यां साध्यप्रतिपादने लिङ्गस्य शक्तिरन्वयव्यतिरेकौ पक्षधर्मता च नावगतेत्यनुपलब्धशक्तिकं लिङ्गं दृष्टान्ते साध्यधर्मसामान्येन सह दृष्टमनुमेये येन वचनेनानुसन्धीयते तदनुसन्धानमिति । इदमत्र तात्पर्यम्—परार्थानुमान एव पञ्चावयववाक्यानामुपयोगात् यथा यथा परजिज्ञासोदयस्तथा तथा वाक्यानां प्रयोग आवश्यकः एवञ्च यथा साध्ये उक्ते कुत इति हेत्वाकाङ्क्षायां हेतुप्रयोगः । हेतुवचनेन च हेतुस्वरूपमात्रबोधो न पक्षधर्मताबोध एकस्य शब्दस्योभयार्थावाचकत्वात् । हेतुज्ञाने कथमस्य हेतुत्वमिति सामर्थ्यजिज्ञासायां साध्यप्रतीतेरविनाभावप्रतीतिनान्तरीयकत्वाद्व्याप्तिवचनेनाविनाभावे कथितेऽवधृतसामर्थ्यस्य हेतोः पक्षे सम्भव इति उदाहरणप्रयोगः । तदनन्तरञ्च पक्षधर्मताज्ञानार्थमनुसन्धानमुपगन्तव्यमिति । उदाहरति तथाचेति ।

अत्र ३४२ ३४३ सूत्रे ।

(२६) प्रत्याम्नायप्रकरणम् ।

(१) निगमनापराभिधं प्रत्याम्नायं दर्शयति अनुमेयत्वेनेति । प्रतिज्ञया पक्षेऽनुमेयत्वेन प्रतिपाद्यत्वेनोद्दिष्टे साध्यधर्मेऽनिश्चिते तस्यैव धर्मिणि प्रत्याम्नायः परेषां निर्णयाय प्रत्यावृत्त्याभिधानं येन वचने-

श्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः । प्रतिपाद्यत्वेनोद्दिष्टे चानिश्चिते च परेषां हेत्वादिभिरवयवैराहितशक्तीना परिसमाप्तेन वाक्येन निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः । तस्माद्द्रव्यमेवेति । न ह्येतस्मिन्नसति परेषामवयवानां समस्तानां व्यस्तानां वा तदर्थवाचकत्वमस्ति । गम्यमानार्थत्वादिति चेन्न अतिप्रसङ्गात् । तथाहि प्रतिज्ञानन्तरं हेतुमात्राभिधानं कर्तव्यम् विदुषामन्वयव्यतिरेकस्मरणात्

---

न क्रियते तन्निगमनमित्यर्थः । इदमेव विवृणोति प्रतिपाद्यत्वेनेति । प्रतिज्ञामात्रेण परेषां साध्यनिश्चयाभावात् तेषां हेत्वादित्रिभिर्वाक्यैस्त्रैरूप्ये दर्शिते सञ्जातानुमेयप्रतिपत्तिसामर्थ्यानां प्रत्याम्नाये कृते परिपूर्णेन वाक्येन निश्चयो भवतीति प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः प्रवर्तत-इत्यभिप्रायः । तदुदाहरति तस्मादिति । हेत्वादिभिः साध्यनिश्चयसम्भवे किमनेनात आह न ह्येतस्मिन्निति । स्वातन्त्र्यात्तेषां नैकार्थप्रतिपादकता, निगमने च सति आकांक्षयाऽङ्गाङ्गिभावेनैकार्थप्रतिपादकता स्यादिति भावः । शङ्कते गम्यमानार्थत्वादिति । स्वार्थपरार्थानुमानयोः प्रतिपत्तिसामग्री तु समानैव, स्वप्रतीतौ स्वतोऽनुसन्धानं परप्रतीतौ परेणेत्येतावानेव विशेषः तथाच परस्थलेऽपि लिङ्गसामर्थ्यादेवार्थबोधः वाक्यं तु लिङ्गोपक्षेपमात्रे चरितार्थम्, हेत्वादिभिश्चोपनयान्तैः पक्षधर्मतान्वयव्यतिरेकोपपन्नं लिङ्गं प्रतिपादितमिति कृतं निगममनेति शङ्कार्थः । समाधत्ते नातिप्रसङ्गादिति । अतिप्रसङ्गमेवाह तथाहीति । अत्रायमभिप्रायः-यथा विदुषां हेतुमात्रप्रयोगेणान्वयव्यतिरेकस्मरणसम्भवेन साध्यसाधकत्वसम्भवेऽपि व्याप्तिपक्षधर्मताद्यर्थमुपनयप्रयोग आवश्यकस्तथाऽबाधितविषयत्वासत्प्रतिपक्षत्वबोधार्थं निगमनमप्यावश्यकमन्यथा प्रकरणसमादीनामपि साधकत्वं स्या-

तदर्थावगतिर्भविष्यतीति तस्मादत्रैवार्थपरिसमाप्तिः । कथम्? अनित्यः शब्दः इत्यनेनानिश्चितानित्यत्वमात्रविशिष्टः शब्दः कथ्यते प्रयत्नानन्तरीयकत्वादित्यनेनानित्यत्वसाधनधर्ममात्रमभिधीयते । इह यत् प्रयत्नानन्तरीयकं तदनित्यं दृष्टम् यथा घट इत्यनेन साध्यसामान्येन साधनसामान्यस्यानुगममात्रमुच्यते । नित्यमप्रयत्नानन्तरीयकं दृष्टम् यथाऽऽकाशमित्यनेन साध्याभावेन साधनस्यासत्त्वं प्रदर्श्यते । तथा च प्रयत्नानन्तरीयकः शब्दो दृष्टो न च तथाऽऽकाशवदप्रयत्नानन्तरीयकः शब्द इत्यन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य साधनसामान्यस्य

---

दिति । उपसंहरति तस्मादिति । यस्मान्निगमने सति हेतोः समग्रं सामर्थ्यं प्रतीयते तस्तादत्रैव निगमनेऽर्थस्य साध्यस्य परिसमाप्तिः प्रतीतिपर्यवसानम् । एकदैवाखिलावयवानां रूपं संहृत्य प्रश्नपूर्वकं पञ्चावयववाक्यप्रयोगापेक्षां दर्शयति कथमित्यादिना । किं शब्दो नित्योऽनित्यो वेत्यन्यतरधर्मजिज्ञासायामनित्यः शब्द इत्यनेन प्रतिज्ञावचनेनानिश्चितेनानित्यत्वमात्रेण विशिष्टः शब्दः कथ्यते । तत्र को हेतुरित्यपेक्षायां प्रयत्नानन्तरीयकत्वात्पूर्वमसतः प्रयत्नानन्तरमुपलभ्यमानत्वादिति हेतुवचनेनानित्यत्वधर्मसाधनमात्रमभिधीयते । मात्रपदेन पक्षधर्मताया अन्वयव्यतिरेकयोश्चानभिधानम् बोध्यम् । अवगतसाधनस्य कथमिदं साध्यं गमयतीत्यपेक्षायामुदाहरणं साध्यसाधनयोरनुगमं करोति न तु स्वरूपान्तरमिति मात्रशब्दार्थः । शब्दे तदास्ति नवेति जिज्ञासायां तथाचेत्यादि अन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य दृष्टाविनाभावस्य प्रयत्नानन्तरीयकत्वस्य शब्दे धर्मिण्यनुसन्धानमुपस्थापनं गम्यते । तथा यत् प्रयत्नानन्तरीयकं तदनित्यमिति बहिर्व्याप्तिसंभवे कदाचित् प्रयत्नानन्तरी-

शब्देऽनुसन्धानं गम्यते। तस्मादनित्यः शब्द इत्यनेनानित्य एव शब्द इति प्रतिपिपादयिषिताऽर्थपरिसमाप्तिर्गम्यते। तस्मात् पञ्चावयवेनैव वाक्येन परेषां स्वनिश्चितार्थप्रतिपादनं क्रियते इत्येतत्परार्थानुमानं सिद्धमिति॥

## (२७)निर्णयस्य मानान्तरत्वखण्डनम्।

(१)विशेषदर्शनजमवधारणज्ञानं संशयविरोधी निर्णयः। एतदेव प्रत्यक्षमनुमानं वा। यद् विशेषदर्शनात् संशयाविरोध्युत्पद्यते स प्रत्यक्षनिर्णयः। यथा स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्यालोचनाद्विशेषेष्वप्रत्यक्षेषूभयविशेषानुस्मरणात् किमयं स्थाणुः पुरुषो वेति

---

यकः शब्दोऽनित्यो न भवेदिति विपक्षाशंकायां हेतोरसाधकत्वे तस्मादनित्यः शब्द इति प्रत्याम्नायो नित्यत्वप्रतिपादकप्रमाणाभावाच्छब्दो नित्यो न भवतीत्यर्थः। अनेनान्यव्यावृत्त्या विपरीतशंकानिवृत्तौ व्याप्तिविशिष्टाद्धेतोर्धर्मिण्युपसंहृनात् व्याप्तिग्राहकप्रमाणबलेन निर्विचिकित्सः साध्यं प्रत्येति नापरं किञ्चिदपेक्ष्यते इत्यनेन प्रत्याम्नायेनानित्य एव शब्द इति प्रतिपिपादयिषिताऽर्थस्य परिसमाप्तिर्गम्यते। उपसंहरति तस्मादिति। अत्र ३४१ ३४५ सूत्रे।

(२७)निर्णयस्य मानान्तरत्वखण्डनम्।

(१)केचिन्निर्णयं प्रत्यक्षानुमानाभ्यां प्रमाणान्तरमिच्छन्ति तान्प्रत्याह विशेषेति प्रत्यक्षमनुमानं वेति। प्रत्यक्षविषयेऽवधारणात्मकं ज्ञानं प्रत्यक्षनिर्णयः, अनुमानविषये चावधारणात्मकं ज्ञानमनुमाननिर्णय इति तयोः प्रत्यक्षानुमान्तर्भावः प्रदर्शितो भाष्यकारेण। उदाहरणमाह यथेत्यादिना। अत्र ३५२ ३५७ सूत्रे।

संशयोत्पत्तौ शिरःपाण्यादिदर्शनात् पुरुष एवायमित्यवधारणज्ञानं प्रत्यक्षनिर्णयः। विषाणमात्रदर्शनाद् गौर्गवयो वेति संशयोत्पत्तौ सास्नामात्रदर्शनाद् गौरेवायमित्यवधारणज्ञानमनुमाननिर्णय इति॥

(२८)स्मृतिप्रकरणम्।

(१)लिङ्गदर्शनेच्छानुस्मरणाद्यपेक्षादात्ममनसोः संयोगविशेषात् पट्वभ्यासादरप्रत्ययजनिताच्च संस्काराद् दृष्टश्रुतानुभूतेष्वर्थेषु शेषानुव्यवसायेच्छानुस्मरणद्वेषहेतुरतीतविषया स्मृतिरिति॥

(२९)आर्षज्ञानप्रकरणम्।

(२)आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्व-

---

(२८) स्मृतिप्रकरणम्।

(१)स्मृतिरूपां विद्यामाह लिङ्गदर्शनेच्छेत्यादिना। आदिशब्देन अ. ३ आ. २ सू. ४४ न्यायसूत्रोक्तानि प्रणिधानादीनि सङ्गृह्यन्ते तदपेक्षमाणादात्ममनसोः संयोगविशेषादिति स्मृतिहेतुप्रतिपादनम्। लिङ्गदर्शनादिवत् संस्कारोऽप्यस्य सहकारी केवलात्तस्मात्स्मरणानुपपत्तेरिति स्मृतिनिमित्तकारणमाह पट्विति। दृष्टश्रुतानुभूतेष्विति विषयसंकीर्तनमनुभूतेष्वनुमितेष्वित्यर्थः। शेषेत्यादिहेतुरित्यन्तं कार्यनिरूपणम्। तत्र शेषानुव्यवसायो प्रथमलिङ्गज्ञानापेक्षया तदनन्तर्भाव्यनुमेयज्ञानं तस्य हेतुर्व्याप्तिस्मरणं सुखसाधनतास्मृतिरिच्छाहेतुः प्रथमपदस्मृतिर्द्वितीयपदानुस्मरणहेतुः दुःखसाधकस्मरणं द्वेषहेतुरिति बोध्यम्। किन्त्वत्रार्थोऽतीतः पूर्वानुभूत इत्यतीतविषया स्मृतिः अत एव सा न प्रमाणमर्थपरिच्छेदे पूर्वानुभवपारतन्त्र्यादिति कन्दलीकाराः। अत्र ३४७ सूत्रम्।

(२९)आर्षज्ञानप्रकरणम्।

(२)आर्षमाहाम्नायेति। आम्नायो वेदः। धर्मादिष्वित्यत्राधर्मादि-

तीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगाद् धर्मविशेषाच्च यत् प्रातिभं यथार्थनिवेदनं ज्ञानमुत्पद्यते तदार्षमित्याचक्षते । तत्तु प्रस्तारेण देवर्षीणाम् । कदाचिदेव लौकिकानां यथा कन्यका ब्रवीति श्वो मे भ्राताऽऽगन्तेति हृदयं मे कथयतीति॥

(३०) सिद्धदर्शनान्तर्भावप्रकरणम् ।

(१) सिद्धदर्शनं न ज्ञानान्तरम् । कस्मात् ? प्रयत्नपूर्वकमञ्जनपादलेपखड्गगुलिकादिसिद्धानां द्रष्टॄणां सूक्ष्मव्यवहितविप्रकृष्टेष्वर्थेषु यद्दर्शनं तत्प्रत्यक्षमेव । अथ दिव्यान्तरिक्षभौमानां प्राणिनां ग्रहनक्षत्रसञ्चारादिनिमित्तं धर्माधर्मविपाकदर्शनमिष्टम् तदप्यनुमानमेव । अथ लिङ्गानपेक्षं धर्मादिषु दर्शनमिष्टं तदपि प्रत्यक्षार्षयोरन्यतरस्मिन्नन्तर्भूतमित्येवं बुद्धिरिति ॥

---

कालादयो आदिपदेन बोध्याः । इन्द्रियलिङ्गाद्यभावे यदर्थभानं सा प्रतिभा सैव च प्रातिभमित्युच्यते आर्षापरपर्यायम् । कारणाभावे तत्कथं भवेदतो धर्मविशेषादिति कारणनिर्देशः स च विद्यातपःसमाधिजः प्रकृष्टो धर्मः । प्रस्तारेण बाहुल्येन । उभयकोट्यनुल्लेखान्नायं संशयः संवादाच्च न विपर्यय इति बोध्यम् । अत्र ३५४ सूत्रम् ।

(३०) सिद्धदर्शनान्तर्भावप्रकरणम् ।

(१) सिद्धदर्शनमपि केचित् विद्यान्तरमङ्गीकुर्वन्ति तन्निरासायाह सिद्धदर्शनं न ज्ञानान्तरमिति । प्रश्नपूर्वकन्तदेवाह कस्मादित्यादिना । अथेति । प्रत्यक्षार्षयोरिति । यदि धर्मादिदर्शनमिन्द्रियजं तदा प्रत्यक्षम् अथेन्द्रियानपेक्षं तदार्षमिति विवेकः । उपसंहरति एवमिति । बुद्धिर्व्याख्यातेत्यर्थः । अन्यत्सुगमम् । अत्र ३५४ सूत्रम् ।

## (३१)सुखप्रकरणम् ।

(१)अनुग्रहलक्षणं सुखम् । स्रगाद्यभिप्रेतविषयसान्निध्ये सतीष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगादनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत् सुखम् । अतीतेषु विषयेषु स्मृतिजम् । अनागतेषु सङ्कल्पजम् । यत्तु विदुषामसत्सु विषयानुस्मरणेच्छासङ्कल्पेष्वाविर्भवति तद्विद्याशमसन्तोषधर्मविशेषनिमित्तमिति ॥

---

(३१) सुखप्रकरणम् ।

विद्याऽविद्यादिभेदविस्तृतां बुद्धिमुक्त्वा तत्कार्यत्वादनन्तरं सुखमाह अनुग्रहेति । अनुग्रहलक्षणं अनुग्रहस्वभावम् । अनुकूलस्वभावतयैव स्वविषयमनुभवं कुर्वत् पुरुषान्तरमनुगृह्णाति सुखमित्याह स्रगादीत्यादिना । संनिहितेष्वर्थे विषयान्तरव्यासक्तस्य सुखानुत्पादादिष्टोपलब्धेः कारणत्वं गम्यते वियुक्तस्य सुखाभावाद्विषयसंनिकर्षोऽपि कारणम् । धर्मादीत्यत्रादिपदेन स्वस्थतापरिग्रहः । अनुग्रहादीति कार्योपवर्णनम् । तत्रानुग्रहस्सुखसंवेदनम् । अभिष्वङ्गोऽनुरागः नयनादिप्रसादो वैमल्यम् । आदिना मुखप्रसादग्रहणम् । एतेषां सुखं हेतुरित्यर्थः । यत्त्विति । विदुषामात्मज्ञानिनामसत्सु विषयादिषु यदाविर्भवति तद्विद्यादिजन्यमित्यर्थः । विद्याऽऽत्मज्ञानम् शमो जितेन्द्रियत्वम् । संतोषः शरीरनिर्वाहातिरिक्तानभिकांक्षित्वम् । धर्मविशेषः प्रकृष्टो निर्वर्तकलक्षणो धर्मः । ये तु दुःखाभावमेव सुखमाहुस्तेषामानन्दात्मनाऽनुभवविरोधो हितं प्राप्स्यामि अहितं हास्यामि इति प्रवृत्तिद्वयानुपपत्तिश्च बोध्येति श्रीधराचार्याः । अत्र ३५५ सूत्रात् ३६० सूत्रपर्यन्तम्, २१३ सूत्रञ्च द्रष्टव्यम् ।

## (३२)दुःखप्रकरणम् ।

(१)उपघातलक्षणं दुःखम् । विषाद्यनभिप्रेतविषयसान्निध्ये सत्यनिष्टोपलब्धीन्द्रियार्थसन्निकर्षादधर्माद्यपेक्षादात्ममनसोः संयोगाद्यदमर्षोपघातदैन्यनिमित्तमुत्पद्यते तद्दुःखम् । अतीतेषु सर्पव्याघ्रचौरादिषु स्मृतिजम् । अनागतेषु सङ्कल्पजमिति ॥

## (३३)इच्छाप्रकरणम् ।

(२)स्वार्थं परार्थं वाऽप्राप्तप्रार्थनेच्छा । सा चात्ममनसोः संयोगात् सुखाद्यपेक्षात् स्मृत्यपेक्षाद्वोत्पद्यते । प्रयत्नस्मृतिधर्माधर्महेतुः । कामोऽभिलाषः राग सङ्कल्पः कारुण्यं वैराग्यम् उपधा भात्र इत्येवमादय इच्छाभेदाः ।

---

(३२) दुःखप्रकरणम् ।

(१)सुखप्रत्यनीकतया तदनन्तरं दुखमाहोपघातेति । उपजातं दुःखं प्रातिकूलस्वभावतया स्वात्मविषयमनुभवं कुर्वदात्मानमुपहन्तीत्याह।।निष्टोपलब्धीत्यादिना । अमर्षादिरिति कार्यकथनम् । अमर्षोऽसहिष्णुता उपघातो दुःखानुभूतिः दैन्यं विच्छायता । दुःखे सति तदनुभवलक्षण आत्मोपघातः स्यादित्यर्थः । अन्यत्स्पष्टम् । अत्र सुखप्रकरणसूत्राण्येव बोध्यानि ।

(३३) इच्छाप्रकरणम् ।

(२)इच्छामाह स्वार्थमिति । कारणमाह सा चेत्यादिना । अनागते सुखसाधने वस्तुनीच्छोपजायते तदुत्पत्तौ तद्विषयसाध्यमनागतमपि सुखं निमित्तकारणम् । अतिक्रान्ते सुखहेताविच्छोत्पत्तेः स्मृतिरपि हेतुः । प्रयत्नेत्यादि कार्यकथम् । तद्यथा उपादानेच्छया तदनुकूलः प्रयत्नः, स्मरणेच्छया स्मरणं, यागादिषु फलेच्छया प्रवृत्तस्य धर्मोत्पत्तिः प्रतिषिद्धेषु अधर्मोत्पत्तिश्चेति । कामादय इच्छाभेदा

मैथुनेच्छा कामः । अभ्यवहारेच्छाऽभिलाषः । पुनः पुनर्विषयानुरञ्जनेच्छा रागः । अनासन्नक्रियेच्छा सङ्कल्पः । स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा कारुण्यम् । दोषदर्शनाद्विषयत्यागेच्छा वैराग्यम् । परवञ्चनेच्छा उपधा । अन्तर्निगूढेच्छा भावः । चिकीर्षाजिहीर्षेत्यादिक्रियाभेदादिच्छाभेदा भवन्ति ॥

(३४)द्वेषप्रकरणम् ।

(१)प्रज्वलनात्मको द्वेषः। यस्मिन् सति प्रज्वलितमिवात्मानं मन्यते स द्वेषः । स चात्ममनसोः संयोगाद् दुःखापेक्षात् स्मृत्यपेक्षाद्वोत्पद्यते । प्रयत्नस्मृतिधर्माधर्महेतुः । क्रोधो द्रोहः मन्युरक्षमाऽमर्ष इति द्वेषभेदाः ॥

(३५)प्रयत्नप्रकरणम् ।

(२)प्रयत्नः संरम्भ उत्साह इति पर्यायाः । स द्विवि-

---

न तत्त्वान्तरमित्युक्तमेव दर्शयति मैथुनेच्छेत्यादिना । भाष्यं स्पष्टार्थम् । अत्र २५० २५१ २५२ २५३ २५४ ६ सूत्राणि ।

(३४) द्वेषप्रकरणम् ।

(१)द्वेषमाह प्रज्वलनेति । प्रत्यत्नेत्यादि द्वेषकार्योक्तिः । द्वेषादेनं हन्मीति प्रयत्नः, वेदार्थविप्लवकारिषु द्वेषाद्धर्मः, तदर्थपालकेषु द्वेषादधर्म इति बोध्यम् । अलक्षितविकारश्चिरानुबद्धापकारावसानो द्रोहः । शरीरादिविकारहेतुः क्षणभङ्गुरो द्वेषः क्रोधः । अपकारासमर्थस्यान्तर्निगूढो द्वेषो मन्युः । परगुणद्वेषोऽक्षमा । स्वगुणपरिभवाक्षमो द्वेषोऽमर्ष इति तद्भेदाः । अत्रापीच्छासूत्राण्येव योज्यानि ।

(३५) प्रयत्नप्रकरणम् ।

(२)क्रमप्राप्तं प्रयत्नमाह प्रयत्न इति । सदेहस्यात्मनो विपच्यमान-

धो—जीवनपूर्वकः इच्छाद्वेषपूर्वकश्च । तत्र जीवनपूर्वकः सुप्तस्य प्राणापानसन्तानप्रेरकः प्रबोधकाले चान्तःकरणस्येन्द्रियान्तरप्राप्तिहेतुः । अस्य जीवनपूर्वकस्यात्ममनसोः संयोगाद्धर्माधर्मापेक्षादुत्पत्तिः । इतरस्तु हिताहितप्राप्तिपरिहारसमर्थस्य व्यापारस्य हेतुः शरीरविधारकश्च । स चात्ममनसोः संयोगादिच्छापेक्षाद् द्वेषापेक्षाद्वोत्पद्यते ॥

(३६) गुरुत्वप्रकरणम् ।

(१) गुरुत्वं जलभूम्योः पतनकर्मकारणम् । अप्रत्यक्षं

---

कर्माशयसहितस्य मनसा सह संयोगः सम्बन्धो जीवनं तत्पूर्वकः प्रयत्नः कामर्थक्रियां जनयतीत्यत आह तत्रेति । अत्रायं प्रयोगः-सुप्तस्य प्राणादिक्रिया प्रयत्नकार्या क्रियात्वात् । न च तदानीमिच्छाद्वेषौ तद्धेतू संभवतः तस्माज्जीवनपूर्वकः प्रयत्न एव प्राणापानप्रेरक इति गम्यते । एवमयं प्रबोधकालेऽन्तःकरणस्य इन्द्रियान्तरप्राप्तिहेतुश्च । अत्रेयमनुमानप्रक्रिया—विषयप्राप्त्यनुमितान्तःकरणेन्द्रियसंयोगः प्रयत्नपूर्वकान्तःकरणक्रियाजन्योऽन्तःकरणेन्द्रियसंयोगजत्वात् जागरान्तःकरणेन्द्रियसंयोगवदिति । कारणमाहास्येति । द्वितीयमिच्छाद्वेषपूर्वकमाहेतरस्त्विति । गुरुत्वे सत्यपततः शरीरस्येच्छापूर्वकः प्रयत्नो विधारक इत्यर्थः । तत्कारणमाह स चेति । हितसाधनोपादानेषु इच्छापूर्वकः, दुःखसाधनपरित्यागे च द्वेषपूर्वकः प्रयत्नो जायत इत्यर्थः । अत्र २५४ २८१ २१२ ६ सूत्राणि ।

(३६) गुरुत्वप्रकरणम् ।

(१) गुरुत्वमाह गुरुत्वमिति । जलभूम्योरित्याश्रयकथनम् । पतनेत्यादि कार्यनिरूपणम् । अप्रत्यक्षमिति स्वभाववर्णनम् । केचित्त्वगिन्द्रियग्राह्यं गुरुत्वमाहुस्तेषामधःस्थितद्रव्यस्य स्पर्शोपलम्भवत् गुरुत्वोपलम्भप्रसङ्गः स्यात् । उपरिस्थितस्य गुरुत्वप्रतीतिस्तु

पतनकर्मानुमेयं संयोगप्रयत्नसंस्कारविरोधि । अस्य चाबादिपरमाणुरूपादिवन्नित्यानित्यत्वनिष्पत्तयः ॥

(३७)द्रवत्वप्रकरणम् ।

(१)द्रवत्वं स्यन्दनकर्मकारणम् । त्रिद्रव्यवृत्ति । तत्तु द्विविधम्—सांसिद्धिकं नैमित्तिकं च । सांसिद्धिकमपां विशेषगुणः । नैमित्तिकं पृथिवीतेजसोः सामान्यगुणः । सांसिद्धिकस्य गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः । सङ्घातदर्शनात् सांसिद्धिकमयुक्तमिति चेन्न दिव्येन तेजसा संयुक्तानामाप्यानां परमाणूनां परस्परं संयोगो द्रव्यारम्भकः सङ्घाताख्यः तेन परमाणुद्रवत्वप्रति-

---

हस्तादीनामधोगमनानुमानादिति । अतीन्द्रियं चेत्कथमस्य प्रतीतिरत आह पतनेति । संयोगेति । गुरुत्वस्य संयोगादिभिस्त्रिभिर्विरोधः तैः प्रतिबद्धस्य स्वकार्याकरणात् । तथाहि दोलारूढस्य संयोगेन प्रतिबन्धात् अपतनं, प्रयत्नेन प्रतिबन्धादपतनं च शरीरस्य, वेगेन प्रतिबन्धादपतनं बहिःक्षिप्तस्य शरादेरिति । अस्य चेति । यथाप्यपरमाणुरूपादयो नित्यास्तथा पार्थिवपरमाणुष्वपि गुरुत्वं, यथा चाबादिकार्यद्रव्ये कारणगुणक्रमेण रूपादयो जायन्ते आश्रयनाशान्नश्यन्ति च तथा गुरुत्वमपीति बोध्यम् । अत्र १८७ १९८ २०१ सूत्राणि ।

(३७) द्रवत्वप्रकरणम् ।

(१)द्रवत्वं व्युत्पादयति द्रवत्वमिति । सांसिद्धिकद्रवत्वममन्वानः शङ्कते सङ्घातदर्शनादिति । आप्यस्य हिमकरकादेः द्रव्यस्य सङ्घातस्य काठिन्यस्य दर्शनात् सांसिद्धिकद्रवत्वमित्ययुक्तमित्याशङ्कार्थः । समाधत्ते दिव्येनेति । सर्वत्रोदके स्वाभाविकद्रवत्वोपलम्भादपां सांसिद्धिकमेव द्रवत्वमिति निश्चिते यद्धिमकरकादौ द्रवत्वानुपलम्भस्तत्र दिव्येन तेजसा सम्बद्धानामाप्यपरमाणूनां परस्परसंयोगो द्रव्यारंभकः संघाताख्यस्तेन हिमकरकारम्भकपरमा-

बन्धात् कार्ये हिमकरकादौ द्रवत्वानुत्पत्तिः । नैमित्तिकं च पृथिवीतेजसोरग्निसंयोगजम् । कथम्? सर्पिर्जतुमधूच्छिष्टादीनां कारणेषु परमाणुष्वग्निसंयोगाद्वेगापेक्षात् कर्मोत्पत्तौ तज्जेभ्यो विभागेभ्यो द्रव्यारम्भकसंयोगविनाशात् कार्यद्रव्यनिवृत्तावग्निसंयोगादौष्ण्यापेक्षात् स्वतन्त्रेषु परमाणुषु द्रवत्वमुत्पद्यते ततस्तेषु भोगिनामदृष्टापेक्षादात्माणुसंयोगात् कर्मोत्पत्तौ तज्जेभ्यः संयोगेभ्यो द्व्यणुकादिप्रक्रमेण कार्यद्रव्यमुत्पाद्यते तस्मिंश्च रूपाद्युत्पत्तिसमकालं कारणगुणप्रक्रमेण द्रवत्वमुत्पद्यत इति ॥

(३८) स्नेहप्रकरणम् ।

(१) स्नेहोऽपां विशेषगुणः । संग्रहमृजादिहेतुः । अस्यापि गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः ॥

---

णुद्रवत्वप्रतिबन्धात् तेजःसंयोगेन परमाणूनां द्रवत्वं प्रतिबद्धमिति लवणादौ अनुमितं लवणस्याऽऽप्यत्वमिवात्रापि वह्निसंयोगनिमित्तं हिमकरकाद्याप्यत्वमित्यभिप्रायः । सांसिद्धिकमुक्त्वा नैमित्तिकमाह नैमित्तिकमिति । प्रक्रियाभाष्यं सुगमम् । हिमकरकादिविलयनेपीयं प्रक्रिया बोध्या । अत्र २०२ ५० ५४ ५५ २०६सूत्राणि ।

(३८) स्नेहप्रकरणम् ।

(१) स्नेहमाह स्नेहोऽपामिति । पिण्डीभावहेतुः संयोगविशेषः संग्रहः । मृजा परिशुद्धिः । मृदुत्वमादिपदेन ग्राह्यम् । अस्यापीति । यथा गुरुत्वं परमाणुषु नित्यं कार्ये च कारणगुणपूर्वकमाश्रयनाशाद्विनाशि च तथा स्नेहोऽपीति भावः । अत्र ५० सूत्रम् ।

## (३९) संस्कारप्रकरणम् ।

(१)संस्कारस्त्रिविधो वेगो भावना स्थितिस्थापकश्च । तत्र वेगो मूर्तिमत्सु पञ्चसु द्रव्येषु निमित्तविशेषापेक्षात् कर्मणो जायते नियतदिक्क्रियाप्रबन्धहेतुः स्पर्शवद्द्रव्यसंयोगविशेषविरोधी क्वचित्कारणगुणपूर्वक्रमेणोत्पद्यते ।

(२)भावनासञ्ज्ञकस्त्वात्मगुणो दृष्टश्रुतानुभूतेष्वर्थेषु स्मृतिप्रत्यभिज्ञानहेतुर्भवति ज्ञानमदुःखादिविरोधी । पटूभ्यासादरप्रत्ययजः पटुप्रत्ययापेक्षादात्ममनसोः संयो-

---

(३९)संस्कारप्रकरणम् ।

(१)संस्कारमाह संस्कारस्त्रिविध इति । पञ्चसु पृथिव्यप्तेजोवायुमनःसु नोदनाभिघातादिनिमित्ताविशेषापेक्षं कर्म वेगं करोति नान्यत्र स्वयमभावात् । नियतेति । यद्दिगाभिमुख्येन क्रियया वेगस्तद्दिगाभिमुख्येनैव क्रियासन्तानहेतुर्वेग इत्यर्थः । स्पर्शवदिति । विशिष्टेनात्यन्तनिबिडावयववृत्तिना स्पर्शवद्द्रव्यसंयोगेन वेगो विनाश्यते यः स्वयं विशिष्टः मन्दस्तु वेगः स्पर्शवद्द्रव्यसंयोगमात्रेण नश्यति यथाऽतिदूरं गतस्येषोः स्तिमितवायुप्रतिबद्धस्य । क्वचिदिति । वेगवदवयवारब्धे जलावयविनि कारणवेगेभ्योऽपि वेगो जायत इत्यर्थः ।

(२)भावनाख्यं संस्कारमाह भावनासंज्ञकस्त्विति । स्मृतिप्रत्यभिज्ञानहेतुरिति भावनाकार्यकथनम् । ज्ञानेति । प्रतिपक्षज्ञानेन संस्कारो विनाश्यते द्यूताद्यासक्त्या पूर्वाधीतविस्मरणात् । सुरामत्तस्य पूर्वस्मृतिलोपात् मदेन संस्कारविनाशः । जन्मान्तरानुभूतस्मरणाभावान्मरणादिदुःखमपि संस्कारनाशकम् । आदिशब्देन सुखादिपरिग्रहः । पटूभ्यासेति । पटुप्रत्ययादभ्यासप्रत्ययादादरप्रत्ययाच्च

गादाश्चर्येऽर्थे पटुः संस्कारातिशयो जायते। यथा दाक्षिणात्यस्योष्ट्रदर्शनादिति। विद्याशिल्पव्यायामादिष्वभ्यस्यमानेषु तस्मिन्नेवार्थे पूर्वपूर्वसंस्कारमपेक्षमाणादुत्तरोत्तरस्मात् प्रत्ययादात्ममनसोः संयोगात् संस्कारातिशयो जायते। प्रयत्नेन मनश्चक्षुषि स्थापयित्वाऽपूर्वमर्थं दिदृक्षमाणस्य विद्युत्सम्पातदर्शनवदादरप्रत्ययः तमपेक्षमाणादात्ममनसोः संयोगात् संस्कारातिशयो जायते यथा देवहृदे राजतसौवर्णपद्मदर्शनादिति।

(१)स्थितिस्थापकस्तु स्पर्शवद्द्रव्येषु वर्तमानो घनावयवसन्निवेशविशिष्टेषु कालान्तरावस्थायिषु स्वाश्रय-

---

संस्कारोऽयं जायत इत्यर्थः। प्रथमस्योदाहरणमाह यथा दाक्षिणात्यस्येति। दाक्षिणात्यस्योष्ट्रोऽत्यन्तमननुभूताकार इति आश्चर्यजनकस्तस्य दर्शनात्तस्य पटुः संस्कारो जायते कालान्तरेऽप्युष्ट्रानुभवस्मृतिजननदर्शनात्। अभ्यासप्रत्ययजमाह विद्येति। विद्या शास्त्रागमादिरूपा। शिल्पं पत्रभङ्गादिक्रिया। व्यायाम आयुधादिश्रमः। तेष्वभ्यस्यमानेषु तस्मिन्नेवार्थे पूर्वपूर्वसंस्कारापेक्षोत्तरोत्तरानुभवाहिताधिकाधिकसंस्कारोत्पत्तिक्रमेणोपान्त्यसंस्कारापेक्षादन्त्यानुभवात्संस्कारातिशयोत्पत्तिरिति बोध्यम्। आदरप्रत्ययजन्यं संस्कारमाह प्रयत्नेनेति। उदाहरणमाह यथा देवहृदे इति। देवहृदे चैत्रमासपौर्णमास्यामर्धरात्रे राजतानि सौवर्णानि च पद्मानि दृश्यन्ते इति प्रसिध्यनुरोधेन तद्दिने दिदृक्षया मिलितानामासन्नेऽर्धरात्रे प्रयत्नातिशयाच्चक्षुषि मनः स्थापयित्वा स्थितानामुत्थितेषु पद्मेषु क्षणमात्रदर्शनादादरप्रत्ययात् संस्कारातिशयः कालान्तरेऽपि स्फुटतरस्मृतिहेतुरुपजायते।

अत्र १९७ ३४७ सूत्रे।

(१)स्थितिस्थापकमाह स्थितिस्थापकस्त्विति। कार्यद्वारा स्थि-

मन्यथाकृतं यथावस्थितं स्थापयति । स्थावरजङ्गमविकारेषु धनुःशाखाशृङ्गदन्तास्थिसूत्रवस्त्रादिषु भुग्नसंवर्तितेषु स्थितिस्थापकस्य कार्यं संलक्ष्यते । नित्यानित्यत्वानिष्पत्तयोऽस्यापि गुरुत्ववत् ॥

(३९) धर्मलक्षणम् ।

(१)धर्मः पुरुषगुणः । कर्तुः प्रियहितमोक्षहेतुः अतीन्द्रियोऽन्त्यसुखसंविज्ञानविरोधी पुरुषान्तःकरणसंयोगविशुद्धाभिसन्धिजः वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः । तस्य तु साधनानि श्रुतिस्मृतिविहितानि वर्णाश्रमिणां सामान्यविशेषभावेनावस्थितानि द्रव्यगुणकर्माणि । तत्र

---

तिस्थापकसत्त्वं दर्शयन्नाह स्थावरेत्यादिना । भुग्नाः कुब्जीकृताः, संवर्तिताः पूर्वावस्थां प्रापिताः । अवनामितविमुक्तेषु धनुःशाखादिषु यत्पूर्वावस्थाप्राप्तिहेतुकर्मण एकार्थसमवेतमसमवायिकारणं स संस्कारः स्थितिस्थापक इत्यर्थः ॥

(३९)धर्मप्रकरणम् ।

(१)धर्म इति । गुणः पुरुषस्य न कर्मसामर्थ्यमित्यर्थः । प्रियेति । प्रियं सुखं, हितं तत्साधनं, मोक्ष आत्मगुणात्यन्तोच्छेदस्तेषां हेतुर्धर्म इत्यर्थः । अतीन्द्रियः अस्मदादिभिः केनचिदिन्द्रियेणाग्राह्यः । अन्त्यसुखसंविज्ञानविरोधीति । कार्यत्वाद्धर्मस्यावश्यं नाशो वक्तव्यस्स च नाहेतुक इति अन्त्यसुखसम्यक्ज्ञानेन धर्मो नाश्यते इत्यर्थः । पुरुषान्तःकरणेति । आत्ममनःसंयोगज इत्यर्थः आत्मविशेषगुणत्वात् सत्त्ववत् । विशुद्धोऽभिसन्धिः दम्भादिरहितः सङ्कल्पः तज्जश्च धर्म इति । वर्णेति । वर्णाश्रमिणां धर्मः प्रतिवर्णं प्रत्याश्रमं चाधिकृत्य विहितैः साधनैर्जन्यत इत्यर्थः । अतीन्द्रियस्य धर्मस्य साधनानि कुतोऽवगन्तव्यानीत्यत आह तस्य त्वि-

सामान्यानि—धर्मे श्रद्धा अहिंसा भूतहितत्वं सत्यवचनमस्तेयं ब्रह्मचर्यमनुपधा क्रोधवर्जनमभिषेचनं शुचिद्रव्यसेवनं विशिष्टदेवताभक्तिरुपवासोऽप्रमादश्च।

(१)ब्राह्मणक्षत्रियवैश्यानामिज्याध्ययनदानानि। ब्राह्मणस्य विशिष्टानि प्रतिग्रहाध्यापनयाजनानि स्ववर्णविहिताश्च संस्काराः। क्षत्रियस्य सम्यक्प्रजापालनमसाधुनि-

---

ति। श्रुतिस्मृत्युक्तानि वर्णाश्रमिणां सामान्यविशेषभावेनावस्थितानि द्रव्यादीनि धर्मस्य साधनानीत्यभिप्रायः। सर्वेषां वर्णाश्रमिणां सामान्यतया धर्मसाधनान्याह तत्रेति। श्रद्धा मनःप्रसादः। अहिंसा भूतानामनभिद्रोहसङ्कल्पः। भूतहितत्वं भूतानामनुग्रहः। सत्यवचनं यथार्थवचनम्। अस्तेयम् अशास्त्रपूर्वकं परस्वग्रहणं मया न कर्तव्यमिति सङ्कल्पः। ब्रह्मचर्यं स्त्रीसेवापरिवर्जनम्। अनुपधा भावशुद्धिः। क्रोधवर्जनं क्रोधपरित्यागः। अभिषेचनं स्नानम्। शुचिद्रव्यसेवनं शुचीनां तिलादीनां द्रव्याणां पर्वणि नियमेन सेवनं। विशिष्टदेवतायां त्रयीसंमतायां भक्तिः। उपवास एकादश्यादौ भोजननिवृत्तिः। अप्रमादो नित्यनैमित्तिकानां कर्मणामवश्यम्भावेन करणम्। एतानि प्रायशो सङ्कल्परूपाण्येव समानानि धर्मसाधनानीति भावः। अत्र २ २४१ २२९ ३६९ २४२ २४५ २४८ २४९ २४२ २४४ सूत्राणि।

(१)ब्राह्मणेति। इज्या यागहोमादि, अध्ययनं वेदपाठः, दानं स्वद्रव्यस्य परस्वत्वापादनम्। एतानि त्रैवर्णिकानां सामान्यानि साधनानीत्यर्थः। किन्तु दानमत्र यज्ञादिविशिष्टं ग्राह्यं शूद्रस्यापि सामान्यदानाधिकारात्। ब्राह्मणस्यासाधारणानि धर्मसाधनान्याह प्रतिग्रहेत्यादिना। प्रतिग्रहो विशिष्टाद्द्रव्यग्रहणम्। याजनमार्त्विज्यम्। एभिरेवार्जितानां द्रव्याणां ब्राह्मणस्य धर्माधिकारादेतानि तस्यैव धर्मसाधनानीत्यर्थः। संस्काराश्चाष्टचत्वारिंशत्, वैदिककर्मानुष्ठानयोग्यतासंपादनद्वारा धर्मसाधनानीति भावः। अनिवर्तनम-

ग्रहो युद्धेष्वनिवर्तनं स्वकीयाश्च संस्काराः । वैश्यस्य क्रयविक्रयकृषिपशुपालनानि स्वकीयाश्च संस्काराः । शूद्रस्य पूर्ववर्णपारतन्त्र्यममन्त्रिकाश्च क्रियाः । आश्रमिणां तु ब्रह्मचारिणो गुरुकुलनिवासिनः स्वशास्त्रविहितानि गुरुशुश्रूषाग्नीन्धनभैक्ष्याचरणानि मधुमांसदिवास्वप्नाञ्जनाभ्यञ्जनादिवर्जनं च । विद्याव्रतस्नातकस्य कृतदारस्य गृहस्थस्य शालीनयायावरवृत्त्युपार्जितैरर्थैर्भूतमनुष्यदेवपितृब्रह्माख्यानां पञ्चानां महायज्ञानां सायम्प्रातरनुष्ठानम् एकाग्निविधानेन पाकयज्ञसंस्थानां च नित्या-

---

पलायनम् । वैश्यस्येति । मूल्यं दत्वा परस्मात् द्रव्यग्रहणं क्रयः । मूल्यमादाय स्वद्रव्यदानं विक्रयः । वर्णानां विशिष्टधर्मसाधनान्युक्त्वाऽऽश्रमिणां तान्याहाश्रमिणां त्विति । धर्मसाधनमुच्यत इति शेषः । स्वशास्त्रविहितानि ब्रह्मचारिणमधिकृत्य शास्त्रेण विहितानि । अग्न्यादीनामाचरणानीति । तत्राग्नेराचरणमग्नौ प्रत्यहं होमः । इन्धनाचरणं होमार्थं वनादिन्धनाहरणम् । भैक्ष्याचरणं भैक्ष्यकरणम् । गृहस्थस्य तान्याह विद्येति । वेदाध्ययनायाङ्गीकृतं व्रतमधीते वेदे यो विससर्ज स विद्याव्रतस्नातकः तस्य । शालीनेति । यावता धान्येन कुम्भीपात्रं पूर्यते ऽयहमेकाहं वा वर्तनं भवति तावन्मात्रस्य परेण स्वयमानीय श्रद्धया दीयमानस्य परिग्रहः शालीना वृत्तिः । परप्रतिग्रहं विना प्रत्यहमनं भिक्षाटनं यायावरवृत्तिः । भूतयज्ञो बलिदानम् । मनुष्ययज्ञो अतिथिपूजा । देवयज्ञो श्राद्धम् । ब्रह्मयज्ञो वेदपाठः । अनुष्ठानमित्यस्याग्रिमषष्ठ्यन्तपदेषु अन्वयः । तथा च सति सामर्थ्यें एकाग्नेरौपासनिकस्याग्नेः विधानं विवाहकाले परिग्रहः तेन पाकयज्ञसंस्थानां पाकयज्ञविशेषाणामष्टकादीनां नित्यानामनुष्ठानमपि गृहस्थस्य धर्मसाधनमित्यर्थः ।

नां शक्तौ क्रियमाणानामग्न्याधेयादीनां च हविर्यज्ञसंस्थानामग्निष्टोमादीनां सोमयज्ञसंस्थानां च। ऋत्वन्तरेषु ब्रह्मचर्यमपत्योत्पादनं च। ब्रह्मचारिणो गृहस्थस्य वा ग्रामान्निर्गतस्य वनवासो वल्कलाजिनकेशश्मश्रुनखरोमधारणं च। वन्यहुतातिथिशेषभोजनानि वानप्रस्थस्य। त्रयाणामन्यतमस्य श्रद्धावतः सर्वभूतेभ्यो नित्यमभयं दत्त्वा संन्यस्य स्वानि कर्माणि यमनियमेष्वप्रमत्तस्य षट्पदार्थप्रसंख्यानाद्योगप्रसाधनं प्रव्राजितस्येति। दृष्टं च प्र-

---

अग्न्याधेयादीनामिति। वसन्ते क्रियमाणानामित्यर्थः। हविर्यज्ञसंस्थानां हविर्यज्ञविशेषाणां दर्शपौर्णमासादीनाम्। अग्निष्टोमोक्थ्यषोडशीवाजपेयातिरात्राप्तोर्यामाः सप्त सोमयज्ञविशेषाः सोमयज्ञसंस्थास्तेषां चानुष्ठानं धर्मसाधनमित्यर्थः। ऋत्वन्तरेषु ऋतुभिन्नकालेषु ब्रह्मचर्यं, ऋतुकालेष्वपत्योत्पादनं च गृहस्थस्य धर्मसाधनमित्यर्थः। वानप्रस्थस्य धर्मसाधनमाह ब्रह्मचारिणो गृहस्थस्य वेति। 'यदहरेव विरजेत् प्रव्रजेत्तदहरेवेति' श्रुतेः श्रद्धायां सत्यां ब्रह्मचारिणोपि वनवासो भवतीति। गृहस्थ वा वानप्रस्थव्रतं कुर्वतो वल्कलादिधारणं वन्यभोजनं फलमूलादिभोजनं हुतशेषभोजनं अतिथिशेषभोजनं च धर्मसाधनम्। प्राज्यपत्यादीष्टिपूर्वकं पुत्रे भार्यां निक्षिप्य प्रव्रजतो हुतशेषातिथिभोजने न धर्मसाधने, पत्न्याऽग्निना च सह वनं प्रस्थितस्य तेऽपि धर्मसाधने इति पृथगुक्तिः। यतिधर्ममाह त्रयाणामिति। अन्यतमस्येत्यनेन यत्याश्रमपरिग्रहे नियमो नास्तीति सूचितम्। यमेति। यमेष्वहिंसासत्यादिरूपेषु तपःशौचादिरूपेषु नियमेषु चाप्रमत्तस्यताननतिक्रमतः षट्पदार्थप्रसंख्यानात् षण्णां पदार्थानां तत्त्वज्ञानाद्योगस्यात्मज्ञानोत्पादनसमर्थस्य समाधिविशेषस्य प्रसाधनमुत्पादनं प्रव्रजितस्य धर्मसाधनम्। कथमेतेषां धर्मसाधनत्वन्तदाह दृष्टं चे-

योजनमनुद्दिश्यैतानि साधनानि भावप्रसादं चापेक्ष्यात्ममनसोः संयोगाद्धर्मोत्पत्तिरिति ॥

## (४०) अधर्मप्रकरणम् ।

(१) अधर्मोऽप्यात्मगुणः। कर्तुरहितप्रत्यवायहेतुरतीन्द्रियोऽन्त्यदुःखसंविज्ञानविरोधी । तस्य तु साधनानि शास्त्रे प्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसानृतस्तेयादीनि विहिताकरणम् प्रमादश्चैतानि दुष्टाभिसन्धिं चापेक्ष्यात्ममनसोः संयोगादधर्मस्योत्पत्तिः ॥

---

ति । दृष्टं लाभपूजादिप्रयोजनमनुद्दिश्यानभिसन्धाय यदैतानि साधनानि क्रियन्ते तदा तानि भावप्रसादमभिप्रायविशुद्धिं चापेक्ष्यात्ममनसोः संयोगाद्धर्मोत्पत्तिरिति । स एव च वैशेषिके शास्त्रे 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इत्यत्र धर्मशब्देन निःश्रेयसहेतुतया विवक्षित इत्यभिप्रायः । सांख्यास्तु "समाधिद्वारा दुःखविगमायात्मख्यातिरेवोपाय इति श्रुत्वा वनं गत्वा समाधिः क्रियते तस्माच्च प्रकृष्टसमाधिरूपधर्मोत्पत्तिः, तस्मिंश्च परिणते समाधावात्मस्वरूपसाक्षात्कारि विज्ञानमुदेतीति" प्राहुः। धर्मनिरूपणे २४९ सूत्रमारभ्य २५१ सूत्रान्तं भाष्यकारेण व्याख्या न कृता।

### (४०) अधर्मप्रकरणम् ।

(१) अधर्ममाहाधर्म इति । कर्तुरिति । अहितं दुःखसाधनं, प्रत्यवायो दुःखं, तयोर्हेतुः। हिंसेति । हिंसा परद्रोहः । अनृतं मिथ्यावचनम् । स्तेयं परस्वग्रहणमशास्त्रविहितम् । विहितस्यावश्यकर्तव्यस्याकरणमकर्तव्यता । प्रमादः अबुद्धिपूर्वकोऽतिक्रमः । अधर्मकार्याण्युक्त्वा तत्कारणमाहैतानीति । कामनापूर्वकेऽधर्मानुष्ठाने दुष्टाभिसन्धेः कारणता न त्वकामिक इति ध्येयम् । अत्र २४३ २४४ २४६ २४७ २२९ १३१ २३२ सूत्राणि ।

## (४१) (प्रासङ्गिकं) संसारापवर्गप्रकरणम् ।

(१)अविदुषो रागद्वेषवतः प्रवर्तकाद्धर्मात् प्रकृष्टात् स्वल्पाधर्मसहितात् ब्रह्मेन्द्रप्रजापतिपितृमनुष्यलोकेष्वाशयानुरूपैरिष्टशरीरेन्द्रियविषयसुखादिभिर्योगो भवति । तथा प्रकृष्टादधर्मात् स्वल्पधर्मसहितात् प्रेततिर्यग्योनिस्थानेष्वनिष्टशरीरेन्द्रियविषयदुःखादिभिर्योगो भवति । एवं प्रवृत्तिलक्षणाद्धर्मादधर्मसहिताद्देवमनुष्यतिर्यङ्नारकेषु पुनः पुनः संसारबन्धो भवति ॥

(२)ज्ञानपूर्वकात्तु कृतादसङ्कल्पितफलाद्विशुद्धे कुले जातस्य दुःखविगमोपायजिज्ञासोराचार्यमुपसङ्गम्योत्पन्न-

---

(४१) संसारापवर्गप्रकरणम् ।

(१)अधर्मसाधनमुक्त्वा तत्साध्यमाहाविदुष इति । अहमेव कर्ता भोक्ता चेत्यहङ्कारेण दुःखसाधनमपि सुखसाधनं मन्वानस्यात एव च तद्विषये रागवतो तदुपरोधिनि च द्वेषवतः प्रवर्तकाद्धर्मात् 'अहमितोऽपि श्रेष्ठो भूयासमिति' अभिलाषया कृतात् प्रकृष्टात् धर्मात् स्वल्पाधर्मयुक्तात् ब्रह्मादिमनुजान्तलोकेषु स्वस्वाश्रयानुरूपैरिष्टशरीरादिभिः सम्बन्धी भवतीत्यर्थः । विनाऽधर्मन्तत्र दुःखसंविन्न भवेदतः स्वल्पेति धर्मविशेषणम् । तथेति । प्रकृष्टादधर्माच्चाल्पधर्मसहितात् प्रेतादियोनिष्वनिष्टदेहादिभिर्योगो जायत इति भावः । उपसंहरति एवमिति । अत्र २९५ सूत्रम् ।

(२)एवं धर्मात्संसारं प्रतिपाद्य ततोऽपवर्गं प्रतिपादयति ज्ञानेति । अयमभिप्रायः—मोक्षानुकूलमसङ्कल्पितफलं कर्म विशुद्धकुले जन्म ग्राहयति, तत्र जातस्य प्रत्यहं दुःखैरभिहन्यमानस्य तद्विगमोपाये जिज्ञासा 'कुतोऽस्योपरम' इति संपद्यते । तदर्थं चाचार्यमु-

षट्पदार्थतत्त्वज्ञानस्याज्ञाननिवृत्तौ विरक्तस्य रागद्वेषाद्यभावात् तज्जयोर्धर्माधर्मयोरनुत्पत्तौ पूर्वसञ्चितयोश्चोपभोगान्निरोधे सन्तोषसुखं शरीरपरिच्छेदं चोत्पाद्य रागादिनिवृत्तौ निवृत्तिलक्षणः केवलो धर्मः परमार्थदर्शनजं सुखं कृत्वा निवर्तते । तदा निरोधात् निर्बीजस्यात्मनः शरीरादिनिवृत्तिः पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपशमो मोक्ष इति ॥

## (४२) शब्दप्रकरणम् ।

(१) शब्दोऽम्बरगुणः श्रोत्रग्राह्यः क्षणिकः कार्यकारणो-

---

पगस्य तदुपदेशात् तस्य षट्पदार्थज्ञानं भवति ततो विरोधिनोऽज्ञानस्य ज्ञानेन निवृत्तौ विच्छिन्नरागद्वेषसंस्कारस्य रागद्वेषयोरभावात्तज्जधर्माधर्मानुत्पत्तौ पूर्वसञ्चितयोश्च धर्माधर्मयोरुपभोगान्निवृत्तौ निवृत्तिफलककर्मान्तरात्सन्तोषसुखदं शरीरपरिच्छेदमुत्पाद्य रागादिनिवृत्तौ निवृत्तिलक्षणः—निवर्त्यते संसारोऽनया तत्स्वभावो धर्मः केवलाख्यः परमार्थदर्शनजमात्मदर्शनजं सुखमुत्पाद्य निवर्तते । यदाऽऽत्मदर्शनं कृत्वा धर्मो निवृत्तस्तदा निर्बीजस्य देहादिबीजधर्माधर्मरहितस्यात्मन उत्पन्नानां शरीरादीनां कर्मक्षयान्निवृत्तौ जातायामनागततदुत्पत्तौ च हेत्वभावादन्यदेहाद्यनुत्पत्तौ दग्धेन्धनानलवच्छरीरानुत्पादो मोक्षो भवतीति । ज्ञानमात्रान्मुक्तिः ज्ञानकर्मसमुच्चयाद्वेत्यादि तु अन्यत्र द्रष्टव्यम् ।

अत्र २५६ २१४ २१६ सूत्राणि ।

## (४२) शब्दप्रकरणम् ।

(१) क्रमप्राप्तं शब्दमाह शब्द इति । अम्बरगुण इति । आकाशविशेषगुणवत्त्वं तल्लक्षणमित्यर्थः । क्षणिक इति आशुतरविनाश्ययं न तु नित्य उच्चारणादूर्ध्वमनुपलब्धेः । व्यञ्जककल्पना तु सत्तायां प्रमा-

श्रयविरोधी संयोगविभागशब्दजः प्रदेशवृत्तिः समानासमानजातीयकारणः। स द्विविधो—वर्णलक्षणो ध्वनिलक्षणश्च। तत्र अकारादिर्वर्णलक्षणः शङ्खादिनिमित्तो ध्वनिलक्षणश्च। तत्र वर्णलक्षणस्योत्पत्तिः—आत्ममनसोः संयोगात् स्मृत्यपेक्षाद्वर्णोच्चारणेच्छा तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्मवायुसंयोगाद्वायौ कर्म जायते स चोर्ध्वं गच्छन् कण्ठादीनभिहन्ति ततः स्थानवायुसंयोगापेक्षमाणात् स्थानाकाशसंयोगात् वर्णोत्पत्तिः। अवर्णलक्षणोऽपि भेरीदण्डसंयोगापेक्षाद्भेर्याकाशसंयोगादुत्पद्यते। वेणुपर्वविभागाद् वेण्वाकाशविभागाच्च शब्दाच्च संयोगविभाग-

---

णाभावेनैवापास्ता। प्रत्यभिज्ञानन्तु सामान्यविषयमेव तीव्रमन्दादिभेदस्य व्यक्तिभेदसाधकत्वात्। विरोधीति। आद्यशब्दः स्वकार्येण विरुध्यतेऽन्त्यः स्वकारणेनोपान्त्यशब्देनान्यस्य विनाशहेतोरभावात्। मध्यस्तूभयथा विरुध्यत इत्यर्थः। संयोगेति। आद्यशब्दः संयोगाद्विभागाच्च जायते तत्पूर्वकस्तु शब्दादिति भावः। प्रदेशवृत्तिः अव्याप्यवृत्तिः। समानेति। शब्दजः शब्दः समानजातीयकारणः। संयोगजो विभागजश्चासमानजातीयकारणः। वर्णलक्षणस्योत्पत्तिरिति। कथ्यत इति शेषः। स्मृत्यपेक्षात्पूर्वानुभूतवर्णस्मृत्यपेक्षात्। तं निमित्तकारणं प्रयत्नं। वायुसंयोगादसमवायिकारणात् इत्यर्थः। वायौ कौष्ठ्यवायौ। स्थानवायुसंयोगादिति। निमित्तभूतात्तस्मात्स्थानाकाशसंयोगादसमवायिकरणाद्वर्णोत्पत्तिरित्यर्थः। भेर्याकाशेति। एवं दण्डी।यवेगापेक्षाद्भेरीदण्डसंयोगान्निमित्ताद्भेर्याकाशसंयोगादसमवायिकारणाच्च वर्णोत्पत्तिरित्यर्थः। वेणुपर्वविभागात्तदाकाशविभागाच्च ध्वनिरूपशब्दोत्पत्तिमुक्त्वा शब्दाच्च तदुत्पत्तिमाह शब्दाच्चेति। नान्वयं कुतः कल्पना इत्यत्राह श्रोत्रशब्दयोरिति। न

निष्पन्नाद्वीचीसन्तानवच्छब्दसन्तान इत्येव सन्तानेन श्रोत्रप्रदेशमागतस्य ग्रहणं नास्ति परिशेषात् सन्तानसिद्धिरिति ॥

इति प्रशस्तपादभाष्ये गुणपदार्थः समाप्तः ॥

---

श्रोत्रं शब्ददेशं गच्छति नापि शब्दः श्रोत्रं तयोर्निष्क्रियत्वादप्राप्तस्य च ग्रहणं न स्यादिन्द्रियाणां प्राप्यकारित्वनियमात्, अन्यथा तूपलब्धिर्न स्यात् इति वीचीतरङ्गन्यायेन शब्दसन्तानकल्पनाऽऽवश्यकीत्यर्थः। अत्र ७९ १००, १०४ सूत्रात् १११सूत्रान्तं च द्रष्टव्यम्।

इति भाष्यविवरणे गुणपदार्थः।



# अथ कर्मपदार्थनिरूपणम् ।

## (१) उत्क्षेपणादिकर्मप्रकरणम् ।

(१) उत्क्षेपणादीनां पञ्चानामपि कर्मत्वसम्बन्धः । एकद्रव्यवत्त्वं क्षणिकत्वं मूर्तद्रव्यवृत्तित्वम् अगुणवत्त्वं गुरुत्वद्रवत्वप्रयत्नसंयोगजत्वं स्वकार्यसंयोगविरोधित्वं संयोगविभागनिरपेक्षकारणत्वम् असमवायिकारणत्वं स्वपराश्रयसमवेतकार्यारम्भकत्वं समानजातीयानारम्भ-

---

ॐ नमस्त्रिपुराम्बायै ।

अथ कर्मपदार्थः ।

(१) उत्क्षेपणादिकर्मप्रकरणम् ।

(१) उत्क्षेपणादीनामन्योन्यसाधर्म्यमितरपदार्थवैधर्म्यञ्च प्रतिपादयन्नाहोत्क्षेपणादीनामिति । कर्मत्वसामान्येन सहोत्क्षेपणादीनां सम्बन्ध इत्यर्थः । कर्मत्वञ्च क्रियामात्रवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं तत्र च प्रत्यक्षमेव प्रमाणम् चलतीत्यादिप्रत्यक्षस्य लौकिकपरीक्षकसाधारणत्वात् । एकद्रव्यवत्त्वमिति । एकदैकस्मिन्द्रव्ये एकमेव कर्म वर्तते, एकं कर्मैकत्रैव द्रव्ये वर्तत इत्येकद्रव्यवत्त्वम् । यद्येकत्र द्रव्ये युगपद्विरुद्धोभयकर्मसमवायः स्यात् तदाऽन्योन्यप्रतिबन्धाद्दिग्विशेषसंयोगविभागानुपपत्तौ "संयोगविभागयोरनपेक्षं कारणं कर्म" इति कर्मलक्षणानुपपत्तिः स्यात् इति भावः । स्वकार्येति । स्वकार्यसंयोगविनाश्यत्वं न तु विभागनाश्यत्वमुत्तरसंयोगाभावप्रसङ्गात् । संयोगेति । यथा वेगारम्भे नोदनाभिघातविशेषापेक्षत्वं नैवं संयोगविभागारम्भे तदपेक्षत्वमित्यर्थः । असमवायिकारणत्वमिति । गुणवन्नैमित्तिकत्वं नेत्यर्थः । स्वपराश्रयेति । स्वपरयोराश्रये व्यासज्य समवेतं यत् संयोगविभागरूपं कार्यं तदारम्भकत्वमित्यर्थः । समानेति । अन्यथा गतिविनाशो न स्यात् इत्यर्थः । द्रव्यानारम्भकत्वमिति ।

कत्वं द्रव्यानारम्भकत्वं च प्रतिनियतजातियोगित्वम् । दिग्विशिष्टकार्यारम्भकत्वं च विशेषः ॥

(१)तत्रोत्क्षेपणं शरीरावयवेषु तत्सम्बद्धेषु च यदूर्ध्वभाग्भिः प्रदेशैः संयोगकारणमधोभाग्भिश्च प्रदेशैः विभागकारणं कर्मोत्पद्यते गुरुत्वप्रयत्नसंयोगेभ्यस्तदुत्क्षेपणम् ॥

(२)तद्विपरीतसंयोगविभागकारणं कर्मापक्षेपणम् ॥

(३)ऋजुनो द्रव्यस्याग्रावयवानां तद्देशैर्विभागः संयोगश्च मूलप्रदेशैर्येन कर्मणावयवी कुटिलः संजायते तदाकुञ्चनम् ॥

(४)तद्विपर्ययेण संयोगविभागोत्पत्तौ येन कर्मणावयवी ऋजुः सम्पद्यते तत्प्रसारणम् ॥

यदनियतदिक्प्रदेशसंयोगविभागकारणं तद्गमनमिति ॥

---

उत्तरसंयोगानिवृत्ते कर्मणि द्रव्यारम्भ इत्यर्थः । प्रतिनियतेति । प्रतिनियतजातय उत्क्षेपणत्वादयस्तद्योगित्वमित्यर्थः । इदं सर्वं पञ्चानां साधर्म्यं बोध्यम् । अत्र ७ १७ १०५ ६९ १९ १४ २० ३० ३६४ ११ २४ ३१ २१ २२ सूत्राणि क्रमशो बोध्यानि ।

(१)दिग्विशिष्टकार्यारम्भकत्वमेव दर्शयति तत्रेति । तत्सम्बद्धेषु मुसलादिष्वित्यर्थः ।

(२)तद्विपरीतेति । अधोदेशसंयोगादिकारणमित्यर्थः ।

(३)ऋजुन इति । तद्देशैरग्रादिसम्बद्धाकाशादिदेशैः । येन कर्मणा ।

(४)तद्विपर्ययेणेति । अग्रावयवानां मूलप्रदेशविभागादुत्तरदेशसंयोगे जाते इत्यर्थः । अत्र ३८ सूत्रम् ।

## (२)गमनप्रकरणम्।

एतत्पञ्चविधमपि कर्म शरीरावयवेषु तत्सम्बद्धेषु च (१)सत्प्रत्ययमसत्प्रत्ययं च यदन्यत्तदप्रत्ययमेव तेष्वन्येषु च तद्गमनामिति।

(२)कर्मणां जातिपञ्चकत्वमयुक्तम् गमनाविशेषात्। सर्वं हि क्षणिकं कर्म गमनमात्रमुत्पन्नं स्वाश्रयस्योर्ध्वमधस्तिर्यग्वाप्यणुमात्रैः प्रदेशैः संयोगविभागान् करोति सर्वत्र गमनप्रत्ययोऽविशिष्टस्तस्माद्गमनमेव सर्वमिति। न वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनात्—इहोत्क्षेपणं परत्रापक्षेपणमित्येवमादि सर्वत्र वर्गशः प्रत्ययानुवृत्तिव्यावृत्ती दृष्टे तद्धेतुः सामान्यविशेषभेदोऽवगम्यते। तेषामुदाद्युपसर्गविशेषात् प्रतिनियतदिग्विशिष्टकार्यारम्भत्वादुपलक्षणभेदोऽपि सिद्धः।

---

(२) गमनप्रकरणम्।

(१)सत्प्रत्ययमिति। प्रयत्नपूर्वकमप्रयत्नपूर्वकञ्चेत्यर्थः। यदन्यदिति। तेषु देहावयवेषु मुसलादिषु अन्येषु वा द्रव्येषु यत् तदप्रत्ययजं कर्म जायते सत्प्रत्ययादन्यत् तद्गमनमेव।

(२)शङ्कते कर्मणामिति। हेतुमाह गमनाविशेषादिति। गमनात् सर्वेषामविशेषादभेदादित्यर्थः। अविशेषमेवाह सर्वं हीति। सर्वत्र गच्छतीति प्रत्ययदर्शनात् उत्क्षेपणादिकं गमनमेवेति शङ्कार्थः। समाधत्ते नेति। वर्गशः-प्रतिवर्गं उत्क्षेपणादौ प्रत्ययानुवृत्तिव्यावृत्त्योर्दर्शनात्, गोवर्गेऽश्वादिवर्गव्यावृत्त्या प्रत्ययानुगमदर्शनात् यथा तत्र गोत्वं कल्प्यते तथाऽत्रापि उत्क्षेपणत्वादिकल्पना ज्यायसीति भावः। विवरणभाष्यं स्पष्टम्। तेषामिति। न केवलम-

(१)एवमपि पञ्चैवेत्यत्रधारणानुपपत्तिः । निष्क्रमणप्रवेशनादिष्वपि वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनात् । यद्युत्क्षेपणादिषु सर्वत्र वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनाज्जातिभेद इष्यते एवञ्च निष्क्रमणप्रवेशनादिष्वपि । कार्यभेदात् तेषु प्रत्ययानुवृत्तिव्यावृत्ती इति चेत् न उत्क्षेपणादिष्वपि कार्यभेदादेव प्रत्ययानुवृत्तिव्यावृत्तिप्रसङ्गः । अथ समाने वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिसद्भावे उत्क्षेपणादीनामेव जातिभेदो न निष्क्रमणादीनामित्यत्र विशेषहेतुरस्तीति न, जातिसङ्करप्रसङ्गात् । निष्क्रमणादीनां जातिभेदात् प्रत्ययानुवृत्तिव्यावृत्तौ जातिसङ्करः प्रसज्यते । कथम् ? द्वयोर्द्रष्ट्रोरेकस्मादपवरकादपवरकान्तरं

---

नुवृत्तिव्यावृत्तिप्रत्ययदर्शनादुत्क्षेपणत्वादिसामान्यभेदः किन्तु उदाद्युपसर्गभेदात्प्रतिनियतदिग्विशिष्टकार्यारम्भकत्वादपीत्यर्थः ।

(१)पुनः शङ्कते एवमपीति प्रवेशनादिष्वपीत्यन्तेन । निष्क्रमणादावपि वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनान्निष्क्रमणत्वादिकमभ्युपेयामिति शङ्कार्थः । सिद्धान्त्याशङ्कते कार्यभेदादिति । प्रतिबन्द्या पूर्वपक्षी समाधत्ते नेति । कार्यभेदेनैव निष्क्रमणत्वादिभेदो न जातिभेदेनेति स्थापयितुमाहाथेत्यादिना । तथा च विशेषहेत्वभावात्कथं न जातिभेदो निष्क्रमणत्वादीनामिति आशङ्क्य तत्र बाधकमाह जातिसङ्करप्रसङ्गादिति । अस्यार्थमाह निष्क्रमणादीनामिति । यदि निष्क्रमणत्वादिजातयोऽङ्गीक्रियन्ते तदैकस्यां व्यक्तौ विरुद्धानेकजातिसमवायः प्रसज्यत इत्यर्थः । प्रश्नपूर्वकं तमेव दर्शयति द्वयोरिति भवतीत्यन्तेन । यदीमौ द्रष्टृभेदेन जातौ प्रत्ययौ जातिकृतौ तदैकस्यां व्यक्तौ परस्परविरुद्धानि-

गच्छतो युगपन्निष्क्रमणप्रवेशनप्रत्ययौ दृष्टौ तथा द्वारप्रदेशे प्रविशति निष्क्रामतीति च। यदा तु प्रतिसीराद्यपनीतं भवति तदा न प्रवेशनप्रत्ययो नापि निष्क्रमणप्रत्ययः किन्तु गमनप्रत्यय एव भवति। तथा नालिकायां वंशपत्रादौ पतति बहूनां द्रष्टॄणां युगपद्भ्रमणपतनप्रवेशनप्रत्यया दृष्टा इति जातिसङ्करप्रसङ्गः। न चैवमुत्क्षेपणादिषु प्रत्ययसङ्करो दृष्टः तस्मादुत्क्षेपणादीनामेव जातिभेदात् प्रत्ययानुवृत्तिव्यावृत्ती निष्क्रमणादीनां तु कार्यभेदादिति।

(१)कथं युगपत्प्रत्ययभेद इति चेत्, अथ मतम्—"यथा जातिसङ्करो नास्ति एवमनेककर्मसमावेशोऽपि नास्तीत्येकस्मिन् कर्मणि युगपद्द्रष्टॄणां भ्रमणपतनप्रवेशनप्रत्ययाः कथं भवन्तीति"। अत्र ब्रूमः—न अवयवावयविनोर्दिग्विशिष्टसंयोगविभागानां भेदात्। यो हि द्रष्टा अवयवानां पार्श्वतः पर्यायेण दिक्-

---

क्रमणत्वप्रवेशनत्वजातिद्वयसमावेशाज्जातिसङ्करप्रसङ्गः स्यादिति भावः। उदाहरणान्तरमाह तथा नालिकायामित्यादिना। स्वपक्षे विशेषमाह न चैवमिति। उपसंहरति तस्मादिति।

(१)एकदैकत्र द्रव्ये एकमेव कर्म भवतीत्युक्तं ततः कथं युगपदनेककर्मप्रत्यय इत्याशङ्कते कथमिति। तद्विवृणोति अथेत्यादिना। समाधानं कुर्वन्नाहात्र ब्रूम इति। न—एवं नेत्यर्थः यतोऽवयवानामवयविनश्च दिग्देशविशिष्टानां संयोगविभागानां भेदाद्युगपदनेककर्मप्रत्यय इ-

प्रदेशैः संयोगविभागान् पश्यति तस्य भ्रमणप्रत्ययो भवति यो ह्यवयविन ऊर्ध्वप्रदेशैर्विभागमधःसंयोगं चापेक्षते तस्य पतनप्रत्ययो भवति । यः पुनर्नालिकान्तर्देशे संयोगं बहिर्देशे च विभागं पश्यति तस्य प्रवेशनप्रत्ययो भवतीति सिद्धः कार्यभेदान्निष्क्रमणादीनां प्रत्ययभेद इति । अत्रतूत्क्षेपणादीनां जातिभेदात् प्रत्ययभेदः निष्क्रमणादीनां तु कार्यभेदादिति ।

(१)अथ गमनत्वं किं कर्मत्वपर्यायः आहोस्वित्परं सामान्यमिति । कुतस्ते संशयः ? समस्तेषूत्क्षेपणादिषु कर्मप्रत्ययवद्गमनप्रत्ययाविशेषात् कर्मत्वपर्याय इति गम्यते । यतस्तूत्क्षेपणादिवद्विशेषसञ्ज्ञयाभिहितं तस्मादपरं सामान्यं स्यादिति । न । कर्मत्वपर्यायत्वात्—आत्मत्वपुरुषत्ववत्कर्मत्वपर्याय एव गमनत्वमि-

---

त्यर्थः । एतद्विवृणोति यो हीति । पार्श्वतः संयोगविभागकारणेष्ववयवकर्मसु भ्रमणप्रत्ययः अवयविक्रियायां कार्यभेदात् पतनप्रवेशनप्रत्ययावित्यर्थः । अन्यत्सुगमं भाष्यम् ।

अतिरिक्तसूत्राप्राप्तेरिदं भाष्यं कर्मविभाजकसूत्रव्याख्यानमेवेति गम्यते ।

(१)गमनत्वं कर्मत्वपर्याय उतापरं सामान्यमिति संशये सिद्धान्तिनः प्रश्नः कुतस्ते संशय इति । संशयं विभजते समस्तेष्विति । समाधत्ते नेति । गमनत्वस्येति शेषः । एतद्विवृणोति आत्मत्वेति । यथा समस्तभेदव्यापकत्वात् पुरुषत्वमात्मत्वपर्यायस्तथा गमनत्व कर्मत्वपर्याय इति भावः । तर्हि किमर्थं विशेषसंज्ञया पृथग्गमनग्रहणमित्यभिप्रायेणाशङ्कते अथेति । समाधत्ते नेति । सामान्यादित्य-

ति । अथ विशेषसंज्ञया किमर्थं गमनग्रहणं कृतमिति न, भ्रमणाद्यवरोधार्थत्वात् । उत्क्षेपणादिशब्दैरनवरुद्धानां भ्रमणपतनस्पन्दनादीनामवरोधार्थं गमनग्रहणं कृतमिति । अन्यथा हि यान्येव चत्वारि विशेषसंज्ञयोक्तानि तान्येव सामान्यविशेषसंज्ञाविषयाणि प्रसज्येरन्निति । अथवा अस्त्वपरं सामान्यं गमनत्वमनियतदिग्देशसंयोगविभागकारणेषु भ्रमणादिष्वेव वर्तते गमनशब्दश्चोत्क्षेपणादिषु भाक्तो द्रष्टव्यः स्वाश्रयसंयोगविभागकर्तृत्वसामान्यादिति ॥

## (३) सत्प्रत्ययकर्मप्रकरणम् ।

(१) सत्प्रत्ययकर्मविधिः । कथम् ? चिकीर्षितेषु यज्ञाध्ययनदानकृष्यादिषु यदा हस्तमुत्क्षेप्तुमिच्छत्यपक्षेप्तुं वा तदा हस्तवत्यात्मप्रदेशे प्रयत्नः सञ्जायते तं प्रयत्नं गुरुत्वं चापेक्षमाणादात्महस्तसंयोगाद्धस्ते कर्म भवति ह-

---

न्तेन । अनवरुद्धानामसंगृहीतानाम् । भ्रमणादयोपि ये लोकसिद्धास्तत्सङ्ग्रहाय गमनत्वस्य विशेषसंज्ञयाभिधानात् अन्यथोत्क्षेपणादीनामेव कर्मत्वमापतेतेति भावः । अथवा गमनत्वं भ्रमणादिष्वेव वर्तेत इत्याहाथवेति । तर्ह्युत्क्षेपणादिषु कुतो गमनप्रतीतिरत आह गमनशब्दश्चेति । उपचारबीजमाह स्वाश्रयेति । यथा गमनं स्वाश्रयसंयोगविभागौ करोति तथा उत्क्षेपणादयोऽपीति साधर्म्येणोत्क्षेपणादिषु गमनव्यवहार इत्यर्थः ।

(३) सत्प्रत्ययकर्मप्रकरणम् ।

(१) प्रयत्नपूर्वककर्मप्रकारमाह सत्प्रत्ययेति । तं प्रयत्नमिति । निमित्तकारणमित्यर्थः । आत्महस्तसंयोगादसमवायिकारणादित्य-

स्तवत् सर्वशरीरावयवेषु पादादिषु शरीरे चेति ।

(१)तत्सम्बद्धेष्वपि कथम्? यदा हस्तेन मुसलं गृहीत्वेच्छां करोति "उत्क्षिपामि हस्तेन मुसलमिति" तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्महस्तसंयोगाद्यस्मिन्नेव काले हस्ते उत्क्षेपणकर्मोत्पद्यते तस्मिन्नेव काले तमेव प्रयत्नमपेक्षमाणाद्धस्तमुसलसंयोगात् मुसलेऽपि कर्मेति । ततो दूरमुत्क्षिप्ते मुसले तदर्थेच्छा निवर्तते पुनरप्यपक्षेपणेच्छोत्पद्यते तदनन्तरं प्रयत्नस्तमपेक्षमाणाद्यथोक्तात् संयोगाद्धस्तमुसलयोर्युगपदपक्षेपणकर्मणी भवतः ततोऽन्त्येन मुसलकर्मणोलूखलमुसलयोरभिघाताख्यः संयोगः क्रियते, स संयोगो मुसलगतवेगमपेक्षमाणोऽप्रत्ययं

---

र्थः । क्वचित्तथैव पाठः । प्रयत्ने सत्यपि गुरुत्वाभावे उत्क्षेपणादेरशक्यकरणतया गुरुत्वस्यापि कारणत्वकथनम् । हस्तवदिति । पादादिक्रियोत्पत्तावपि पादवदात्मप्रदेशे प्रयत्नस्य निमित्तहेतुत्वम् पादात्मसंयोगस्यासमवायिकारणत्वमित्यादि बोध्यम् । अत्र १८१ सूत्रम् ।

(१)तत्सम्बद्धेष्वपीति । शरीरावयवसम्बद्धेष्वपीति अप्यर्थः । प्रश्ने उत्तरमाह यदेति । तदनन्तरं इच्छानन्तरम् । प्रयत्नः हस्तेन सह मुसलमुत्क्षिपामीति हस्तमुसलयोर्युगपदुत्क्षेपणेच्छया जायमानः प्रयत्नो युगपदुत्क्षेपणसमर्थो विशिष्ट एव जायते, तं निमित्तभूतमपेक्षमाणात् असमवायिकारणादात्महस्तसंयोगाद्यदा हस्ते उत्क्षेपणं कर्मोत्पद्यते तदा तस्मादेव निमित्तादुभयार्थात् जायमानाद्धस्तमुसलसंयोगादसमवायिकारणान्मुसलेऽपि कर्म कारणयौगपद्याज्जायते इत्यर्थः । अत्र १८१ १८२ सूत्रे ।

तत इति । यथोक्तात्—संयोगात्—हस्तात्मसंयोगाद्हस्तमु-

मुसले उत्पतनकर्म करोति । तत्कर्माभिघातापेक्षं मुसले संस्कारमारभते तमपेक्ष्य मुसलहस्तसंयोगोऽप्रत्ययं हस्तेऽप्युत्पतनकर्म करोति। यद्यपि प्राक्तनः संस्कारो विनष्टः तथापि मुसलोलूखलयोः संयोगः पटुकर्मोत्पादकः संयोगविशेषभावात् तस्य संस्कारारम्भे साचिव्यसमर्थो भवति।

(१)अथवा प्राक्तन एव पटुः संस्कारोऽभिघातादविनश्यन्नवस्थित इति । अतः संस्कारवति पुनः संस्कारारम्भो नास्त्यतो यस्मिन् काले संस्कारापेक्षादभिघातादप्रत्ययं मुसले उत्पतनकर्म तस्मिन्नेव काले तमेव संस्कारमपेक्षमाणात् मुसलहस्तसंयोगादप्रत्ययं हस्तेऽप्युत्पतनकर्मेति ॥

पाणिमुक्तेषु गमनविधिः । कथम्?(२)यदा तोमरं हस्तेन गृहीत्वोत्क्षेप्तुमिच्छोत्पद्यते तदनन्तरं प्रयत्नः

---

सलसंयोगाच्चेत्यर्थः । अप्रत्ययमिति । अप्रयत्नपूर्वकमित्यर्थः । अत्र १८१ १८२ २८३ सूत्राणि ।

प्राक्तनापक्षेपणसंस्कारस्याभिघातेन विनष्टत्वात् कथमपेक्षाहेत्वभावात् मुसलेऽप्रत्ययमुत्पतनकर्मोत्पतनसंस्कारमारभते इत्यत आह यद्यपीति। पटुकर्मोत्पादक इति। संस्कारजनककर्मोत्पादक इत्यर्थः । कुत इत्यत आह संयोगविशेषभावात् संयोगविशेषत्वादित्यर्थः। एतावता किमायातमत आह तस्येति ।

(१) प्रकारान्तरमाहाथवेति अस्मिन्नेव पक्षे हस्तमुसलोत्पतनकर्मणी । युगपद्भवत इत्याशयः। अत्र १८३ १८४ १८५ सूत्राणि ।

(२) पाणिमुक्तद्रव्येषु गमनप्रकारः कथमुत्पद्यते इति प्रश्ने आह

तमपेक्षमाणाद्यथोक्तात् संयोगद्वयात् तोमरहस्तयोर्युगपदाकर्षणकर्मणी भवतः। प्रसारिते च हस्ते तदाकर्षणार्थः प्रयत्नो निवर्तते तदनन्तरं तिर्यगूर्ध्वं दूरमासन्नं वा क्षिपामीतीच्छा सञ्जायते तदनन्तरं तदनुरूपः प्रयत्नस्तमपेक्षमाणस्तोमरहस्तसंयोगो नोदनाख्यः तस्मात् तोमरे कर्मोत्पन्नं नोदनापेक्षं तस्मिन् संस्कारमारभते। ततः संस्कारनोदनाभ्यां तावत् कर्माणि भवन्ति यावद्धस्ततोमरविभाग इति। ततो विभागान्नोदने निवृत्ते संस्कारादूर्ध्वं तिर्यग्दूरमासन्नं वा प्रयत्नानुरूपाणि कर्माणि भवन्त्यापतनादिति॥

तथा यन्त्रमुक्तेषु गमनविधिः। कथम्? यो बलवान् (२)कृतव्यायामो वामेन करेण धनुर्विष्टभ्य दक्षिणेन शरं सन्धाय सशरां ज्यां मुष्टिना गृहीत्वा आकर्षणेच्छां

---

यदेति। संयोगद्वयादात्महस्तसंयोगाद्धस्ततोमरसंयोगाच्चेत्यर्थः। क्वचित्तथैव पाठः। प्रयत्नो निवर्तते इति। तद्विरोधिप्रसारणप्रयत्नोत्पादादित्यर्थः। अत्र १८१ १८२ सूत्रे।

तदनुरूप इति। तिर्यक्क्षेपणेच्छायां तिर्यक्क्षेपणप्रयत्नः, ऊर्ध्वक्षेपणेच्छायामूर्ध्वक्षेपणप्रयत्नः, दूरक्षेपणेच्छायां महान्प्रयत्नः आसन्नक्षेपणेच्छायां शिथिलप्रयत्नो जायत इति भावः। तस्मान्नोदनात् यथोक्तादिच्छानुरूपप्रयत्नापेक्षात् इत्यपि योज्यम्। क्वचित्तथैव पाठः। अत्र १८९ १९० सूत्रे।

ततः संस्कारेति। तोमरपतनं यावत् संस्कारात्तदनुरूपाणि कर्माणि भवन्तीत्यर्थः। अत्र १९७ १९८ सूत्रे।

कृतव्यायामः—कृतायुधाभ्यासः। इच्छाया आकारमाह सज्ये-

करोति "सज्येष्वाकर्षयाम्येतद्धनुरिति" । तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्महस्तसंयोगादाकर्षणकर्म हस्ते यदैवोत्पद्यते तदैव तमेव प्रयत्नमपेक्षमाणाद्धस्तज्याशरसंयोगाद् ज्यायां शरे च कर्म प्रयत्नविशिष्टहस्तज्याशरसंयोगमपेक्षमाणाभ्यां ज्याकोटिसंयोगाभ्यां कर्मणी भवतो धनुष्कोट्योरित्येतत् सर्वं युगपत् । एवमाकर्णादाकृष्टे धनुषि नातः परमनेन गन्तव्यमिति यज्ज्ञानं ततस्तदाकर्षणार्थस्य प्रयत्नस्य विनाशस्ततः पुनर्मोक्षणेच्छा सञ्जायते तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्माङ्गुलिसंयोगादङ्गुलिकर्म तस्माज्ज्याङ्गुलिविभागः ततो विभागात् संयोगविनाशः तस्मिन् विनष्टे प्रतिबन्धकाभावाद्यदा धनुषि वर्तमानः स्थितिस्थापकः संस्कारो मण्डलीभूतं धनुर्यथावस्थितं स्थापयति तदा तमेव संस्कारमपेक्षमाणाद्धनुर्ज्यासंयोगाज्ज्यायां शरे च कर्मोत्पद्यते तत्स्वकारणापेक्षं ज्यायां संस्कारं करोति तमपेक्षमाण इषुज्यासंयोगो नोदनं तस्मादिषा-

---

ष्वित्यादि । युगपदिति । कारणयौगपद्यादित्यर्थः । तदाकर्षणार्थस्येति । धनुराकर्षणार्थस्येत्यर्थः । मोक्षणेच्छेति । शरस्य गुणस्य चेति आदिः । ज्याङ्गुलिविभाग इति । शरगुणाभ्यामिति शेषः । तत्स्वकारणापेक्षमिति । तत्कर्म स्वकारणापेक्षं धनुर्ज्यासंयोगापेक्षम् । संस्कारं वेगाख्यमित्यर्थः । तस्मादिति । संस्कारादित्यर्थः । ज्याविभक्तस्येषोरन्तराले क्रमशो बहूनि कर्माणि भवन्तीति कस्मा-

वाद्यं कर्म नोदनापेक्षमिषौ संस्कारमारभते । तस्मात् संस्कारान्नोदनसहायात् तावत् कर्माणि भवन्ति यावदिषुज्याविभागो विभागान्निवृत्ते नोदने कर्माण्युत्तरोत्तराणीषुसंस्कारादेवापतनादिति । बहूनि कर्माणि क्रमशः, कस्मात्? संयोगबहुत्वात् एकस्तु संस्कारोऽन्तराले कर्मणोऽपेक्षाकारणाभावादिति ॥

(१) एवमात्माधिष्ठितेषु सत्प्रत्ययमसत्प्रत्ययं च कर्मोक्तम् ।

(४) अप्रत्ययकर्मप्रकरणम् ।

(२) अनधिष्ठितेषु बाह्येषु चतुर्षु महाभूतेष्वप्रत्ययं कर्म गमनमेव नोदनादिभ्यो भवति । तत्र नोदनं गुरुत्वद्रवत्ववेगप्रयत्नान् समस्तव्यस्तानपेक्षमाणो यः संयोगविशेषो नोदनमविभागहेतोरेकस्य कर्मणः कारणम्

---

त्कल्प्यते न त्वेकमेवेत्यभिप्रायेणाशङ्कते बहूनीति । समाधत्ते संयोगबहुत्वादिति । क्षिप्तस्येषोरन्तराले बहवः संयोगा दृश्यन्ते तेन बहूनि कर्माणि भवन्तीति आश्रियते । अपेक्षाकारणाभावादिति । नोदनाभिघातयोरन्यतरापेक्षं कर्म संस्कारमारभते न कर्ममात्रं वेगाभावादित्यभिप्रायः । अत्र १८१ १८२ १९७ १९८ १९९ सूत्राणि ।

(१)उपसंहरति एवमिति ।

(४) अप्रत्ययकर्मप्रकरणम् ।

(२)अनधिष्ठितेष्विति । आत्मनाऽसाधारणेन सम्बन्धिनाऽधिष्ठितेषु बाह्येष्वप्रयत्नपूर्वकं गमनाख्यमेव कर्म भवति नोत्क्षपणापक्षेपणादिकमिति भावः। नोदनं किमत आह तत्रेत्यादि संयोगविशेष इत्यन्तम् । संयोगविशेषः कथं नोदनमुच्यते तत्राह नोदनमिति । नोद्यनोदकयोः

तस्माच्चतुर्ष्वपि महाभूतेषु कर्म भवति । यथा पङ्काख्यायां पृथिव्याम् ।

(१)वेगापेक्षो यः संयोगविशेषो विभागहेतोरेकस्य कर्मणः कारणं सोऽभिघातः । तस्मादपि चतुर्षु महाभूतेषु कर्म भवति । यथा पाषाणादिषु निष्ठुरे वस्तुन्यभिपतितेषु । तथा पादादिभिर्नुद्यमानायामभिहन्यमानायां वा पङ्काख्यायां पृथिव्यां यः संयोगो नोदनाभिघातयोरन्यतरापेक्ष उभयापेक्षो वा स संयुक्तसंयोगः तस्मादपि पृथिव्यादिषु कर्म भवति । ये च प्रदेशा न नुद्यन्ते नाप्यभिहन्यन्ते तेष्वपि कर्म जायते ।

---

परस्परविभागाजनककर्मणः कारणं यतो नोदनन्तत इत्यर्थः । उदाहरति यथेति । यदा पङ्कोपरि शनैः स्थापितं लोष्टं क्रमशः पङ्केन सहाऽधो गच्छति तदा गुरुत्वापेक्षो लोष्टपङ्कसंयोगो नोदनं, यदा तु प्रयत्नतो दूरमुत्थाप्य लोष्टेनाभिहन्यते पङ्कः तदा गुरुत्वप्रयत्नवेगापेक्षः संयोगो नोदनमित्यादूयूह्यम् ।

(१)अभिघातमाह वेगापेक्ष इति । अभिघात्याभिघातकयोः परस्परविभागो यतः कर्मणो जायते तस्यैव हेतुर्यः संयोगविशेषः सोऽभिघात इत्यर्थः । उदाहरति पाषाणादिष्विति । संयुक्तसंयोगमाह तथा पादादिभिरिति । एकत्र भूम्यां पादेन नुद्यमानायामभिहन्यमानायां वा ये प्रदेशा न नुद्यन्ते नाप्यभिहन्यन्ते वा तेष्वपि कर्म दृश्यते । तत्र च चलतां प्रदेशान्तराणां नुद्यमानाभिहन्यमानभूप्रदेशैः सह संयुक्तप्रदेशसंयोगः कारणम् । यत्राभिघातिद्रव्यं भूप्रदेशमभिहत्य किञ्चिदधो नीत्वोत्पतति तत्र प्रदेशान्तरक्रियायामुभयापेक्षसंयुक्तसंयोगो हेतुर्बोध्यः । अत्र १९९ २१० सूत्रे ।

(१) पृथिव्युदकयोर्गुरुत्वविधारकसंयोगप्रयत्नवेगाभावे सति गुरुत्वाद्यदधोगमनं तत्पतनम् । यथा मुसलशरीरादिषूक्तम् । तत्राद्यं गुरुत्वाद्द्वितीयादीनि तु गुरुत्वसंस्काराभ्याम् ॥

(२) स्रोतोभूतानामपां स्थलान्निम्नाभिसर्पणं यत्तद्द्रवत्वात् स्यन्दनम् । कथम् ? समन्ताद्रोधःसंयोगेनावयविद्रवत्वं प्रतिबद्धम् अवयवद्रवत्वमप्येकार्थसमवेतं तेनैव प्रतिबद्धमुत्तरोत्तरावयवद्रवत्वानि संयुक्तसंयोगैः प्रतिबद्धानि । यदा तु मात्रया सेतुभेदः कृतो भवति तदा समन्तात् प्रतिबद्धत्वादवयविद्रवत्वस्य कार्यारम्भो नास्ति सेतुसमीपस्थस्यावयवद्रवत्वस्योत्तरोत्तरे-

---

(१) गुरुत्वस्य कर्महेतुत्वमाह पृथिवीति । तत्राद्यमिति । गुरुत्वप्रतिबन्धकस्य हस्तसंयोगस्याभावे मुसलस्य यदधो गमनं तत्पतनं कर्माऽऽद्यं गुरुत्वाद्भवति तेन कर्मणा संस्कारः ततश्चोत्तरकर्माणि गुरुत्वसंस्काराभ्यां जायन्ते इत्यर्थः । गुरुत्वविधारकप्रयत्नाभावे यच्छरीरस्य पतनं क्षिप्तस्येषोरन्तराले वेगाभावाद्यत्तदपि गुरुत्वहेतुकमित्यर्थः । उत्तरकर्माणि पूर्ववत् । अत्र १८७ १९८ २०१ सूत्राणि ।

(२) द्रवत्वस्य कारणत्वमाह स्रोतोभूतानामिति । अपां यत्र स्थलान्निम्नाभिसर्पणं जायते तत्स्यन्दनं द्रवत्वाज्जायत इत्यर्थः । तेनैव प्रतिबद्धमिति । यस्मिन्नवयवे साक्षाद्रोधःसंयोगोऽस्ति तदवयवगतद्रवत्वं तेनैव रोधःसंयोगेन प्रतिबद्धमित्यर्थः । संयुक्तसंयोगैः प्रतिबद्धानीति । रोधःसंयुक्तेनावयवेन सह संयोगादवयवान्तरस्य द्रवत्वं प्रतिबद्धमित्यर्थः । कार्यारम्भो नास्तीति । दीर्घतरेण सेतुना सर्वतः प्रतिबद्धत्वान्महापरिमाणस्यावयविनो एकदेश-

षामवयवद्रवत्वानां प्रतिबन्धकाभावाद्वृत्तिलाभः । ततः क्रमशः संयुक्तानामेवाभिसर्पणम् । ततः पूर्वद्रव्यविनाशे सति प्रबन्धेनावस्थितैरवयवैर्दीर्घं द्रव्यमारभ्यते, तत्र च कारणगुणपूर्वक्रमेण द्रवत्वमुत्पद्यते । तत्र च कारणानां संयुक्तानां प्रबन्धेन गमने यदवयविनि कर्मोत्पद्यते तत् स्यन्दनाख्यमिति ॥

(१)संस्कारात् कर्म इष्वादिषूक्तम् । तथा चक्रादिष्ववयवानां पार्श्वतः प्रतिनियतदिग्देशसंयोगविभागोत्पत्तौ यदवयविनः संस्कारादनियतदिग्देशसंयोगविभागनिमित्तं कर्म तद्भ्रमणमिति । एवमादयो गमनविशेषाः ॥

प्राणाख्ये तु वायौ कर्म आत्मवायुसंयोगादिच्छाद्वेषपूर्वकप्रयत्नापेक्षाज्जाग्रत (२)इच्छानुविधानदर्शनात्,

---

च्छुतात्पमार्गेण निर्गमाभावादित्यर्थः । वृत्तिलाभ इति । अल्पस्यावयवस्य तेन मार्गेण निर्गतिसम्भवात् । ततः क्रमश इति । तत इति । प्राक्तनसंयोगविनाशे इत्यर्थः । तत्र–तस्मिन्द्रवत्वे उत्पन्ने सति कारणीभूतानामवयवानां प्रबन्धेन पंक्तीभावेनैकदेशतया गमने सति यदवयविनि कर्मोत्पद्यते तत् द्रवत्वात् स्यन्दनमित्यर्थः । अत्र २०२ सूत्रम् ।

(१)संस्कारादिति । अत्र यथापदमध्याहृत्य तथा चक्रादिष्वित्यन्वयो बोध्यः । तदेव दर्शयति अवयवानामिति । उपसंहरति एवमादय इति । अत्र १९७ सूत्रम् ।

(२) इच्छानुविधानदर्शनादिति । रेचकादौ इच्छानुविधायिनी प्राणक्रियोपलभ्यते नासारन्ध्रप्रविष्टे रजसि तन्निरासाय प्राणक्रिया द्वेषादपि भवति अतः प्रयत्नपूर्विकेत्यवगम्यते । सुप्तस्य जीवनपूर्वक-

सुप्तस्य तु जीवनपूर्वकप्रयत्नापेक्षात्। आकाशकालदिगात्मनां सत्यपि द्रव्यभावे निष्क्रियत्वं सामान्यादिवदमूर्तत्वात्। मूर्तिरसर्वगतद्रव्यपरिमाणम् तदनुविधायिनी च क्रिया सा चाकाशादिषु नास्ति तस्मान्न तेषां क्रियासम्बन्धोऽस्तीति ॥

(१)सविग्रहे मनसीन्द्रियान्तरसम्बन्धार्थं जाग्रतः कर्म आत्ममनःसंयोगादिच्छाद्वेषपूर्वकप्रयत्नापेक्षात् अन्वभिप्रायमिन्द्रियान्तरेण विषयान्तरोपलब्धिदर्शनात्। सुप्तस्य प्रबोधकाले जीवनपूर्वकप्रयत्नापेक्षात्। अपसर्पणकर्मोपसर्पणकर्म चात्ममनःसंयोगाददृष्टापेक्षात्। कथम्? यदा जीवनसहकारिणोर्धर्माधर्मयोरुपभोगात् प्रक्षयोऽन्योन्याभिभवो वा तदा जीवनसहाययोर्वैकल्यात्

---

प्रयत्नापेक्षादात्मवायुसंयोगात्, सुप्तप्राः क्रिया प्रयत्नकार्या प्राणक्रियात्वात् जाग्रतः प्राणक्रियावत्। स च प्रयत्नो नेच्छाद्वेषनिमित्तः सुप्तस्य तदभावात् तस्माज्जीवनपूर्वक एवेति निर्णीयते प्राणधारणस्य तत्पूर्वकत्वात्। क्रियात्वं मूर्तत्वव्याप्तं मूर्तत्वस्याकाशादिष्वभावात्सुतरां क्रियाभाव इत्याकाशादौ क्रियोत्पत्तिर्न विचारितेत्याहाऽऽकाशेति। अत्र २१० २१९ ६९ सूत्राणि।

(१)मनसि कर्मकारणमाह सविग्रहे इति। विषयान्तरोपलब्धिदर्शनादिति। अत्रायमनुमानप्रकारः—मनःक्रिया इच्छादिविशिष्टप्रयत्नसाध्या जागराद्यवस्थायामभिप्रायानतिक्रमेण चाक्षुषादिसाक्षात्कारदर्शनात्। एवञ्चान्तःकरणसम्बन्धमन्तरा बाह्येन्द्रियस्य विषयग्राहकत्वं नास्तीति इच्छाद्वेषपूर्वकात् प्रयत्नान्मनसि क्रियोत्पद्यत इति तात्पर्यम्। अत्र २२२ सूत्रम्।

तत्पूर्वकप्रयत्नवैकल्यात् प्राणनिरोधे सत्यन्याभ्यां लब्धवृत्तिभ्यां धर्माधर्माभ्यामात्ममनःसंयोगसहायाभ्यां मृतशरीराद्विभागकारणमपसर्पणकर्मोत्पद्यते । ततः शरीराद्बहिरपगतं ताभ्यामेव धर्माधर्माभ्यां समुत्पन्नेनातिवाहिकशरीरेण सम्बध्यते तत्सङ्क्रान्तं च स्वर्गं नरकं वा गत्वा आशयानुरूपेण शरीरेण सम्बद्ध्यते तत्संयोगार्थं कर्मोपसर्पणमिति । योगिनां च बहिरुद्रेचितस्य मनसोऽभिप्रेतदेशगमनं प्रत्यागमनञ्च । तथा सर्गकाले प्रत्यग्रेण शरीरेण सम्बन्धार्थं कर्मादृष्टकारितम् । एवमन्यदपि महाभूतेषु यत्प्रत्यक्षानुमानाभ्यामनुपलभ्यमानकारणमुपकारापकारसमर्थं च भवति तदप्यदृष्टकारितम् । यथा सर्गादावणुकर्म अग्निवाय्वोरूर्ध्वतिर्यग्गमने महाभूतानां प्रक्षोभणम् । अभिषिक्तानां मणीनां तस्करं प्रति गमनम् । अयसोऽयस्कान्ताभिसर्पणञ्चेति ॥

इति प्रशस्तपादभाष्ये कर्मपदार्थः समाप्तः ॥

---

प्राणनिरोधे सतीति । पतितेऽस्मिन्शरीरे इति शेषः । अन्याभ्यां देहान्तरोपभोग्याभ्यामित्यर्थः । अपसर्पणकर्मेति । तत्र चात्ममनस्संयोगोऽसमवायिकारणम् मनः समवायिकारणं लब्धवृत्ती धर्माधर्मौ निमित्तकारणमिति बोध्यम् । बहिरपगतमिति । तन्मन इत्यर्थः । अत्र २१५ सूत्रम् ।

बहिरुद्रेचितस्येति । बहिर्निःसारितस्येत्यर्थः । कर्म-मनःकर्म । इतीति प्रकरणसमाप्तौ । अत्र २०० २११ २१० २१५ २०५ सूत्राणि ।

इति श्रीभाष्यविवरणे कर्मपदार्थः ।

# अथ सामान्यपदार्थनिरूपणम् ।

## (१) सामान्यप्रकरणम् ।

(१)सामान्यं द्विविधम् परमपरञ्च । स्वविषयसर्वगतमभिन्नात्मकमनेकवृत्ति एकद्विबहुष्वात्मस्वरूपानुगमप्रत्ययकारि स्वरूपाभेदेनाधारेषु प्रबन्धेन वर्तमानमनुवृत्तिप्रत्ययकारणम् । कथम् ? प्रतिपिण्डं सामान्यापेक्षं प्रबन्धेन ज्ञानोत्पत्तावभ्यासप्रत्ययजनिताच्च संस्कारादतीतज्ञानप्रबन्धप्रत्यवेक्षणाद् यदनुगतमस्ति तत्सामान्यमिति ।

---

### अथ सामान्यपदार्थः ।

### (१) सामान्यप्रकरणम् ।

(१)क्रमप्राप्तं सामान्यपदार्थं निरूपयति । सर्वसर्वगतं सामान्यमिति मतमपाकुर्वन्नाह स्वविषयसर्वगतमिति । यत्सामान्यं यत्र पिण्डे वर्तते स तद्विषयस्तज्जातीये सर्वत्र गतं समवेतं सर्वत्र तत्प्रतीतेः । सर्वसर्वगतत्वाभावे तु अनुपलब्धिरेव प्रमाणम् । अनेकवृत्तीति । इदन्तु सामर्थ्याद्बोध्यम् । ननु द्वित्वादिकमपि अभिन्नस्वभावमनेकवृत्ति च तदत्र को विशेष अत आह एकद्विबहुष्विति । तथाच जातिरेकाद्विपिण्डादावात्मस्वरूपानुगमप्रत्ययं जनयति नैवं द्वित्वादिकमिति न क्षतिः । इदमेव विवृणोति प्रबन्धेनेति । सातत्येनेत्यर्थः । कथमनेकेषु पिण्डेषु सामान्यस्य वृत्तिरित्याशंयेनापृच्छ्यं सरयति प्रतिपिण्डमिति । अयमभिप्रायः—एकत्र पिण्डे सामान्यमुपलभ्य पिण्डान्तरे तस्य प्रत्यभिज्ञानादेकस्यानेकवृत्तित्वमवगम्यते अत एव च तत्र बाधकहेतवः प्रत्यक्षविरोधादपास्यन्त इति । अत्र ३५ सूत्रम् ।

(१)तत्र सत्तासामान्यं परमनुवृत्तिप्रत्ययकारणमेव । यथा परस्परविशिष्टेषु चर्मवस्त्रकम्बलादिष्वेकस्मान्नीलद्रव्याभिसम्बन्धात् नीलं नीलमिति प्रत्ययानुवृत्तिः तथा परस्परविशिष्टेषु द्रव्यगुणकर्मस्वविशिष्टा सत्सदिति प्रत्ययानुवृत्तिः सा चार्थान्तराद्भवितु मर्हतीति यत्तदर्थान्तरं सा सत्तेति सिद्धा । सत्तानुसम्बन्धात् सत्सदिति प्रत्ययानुवृत्तिः तस्मात् सा सामान्यमेव । अपरं द्रव्यत्वगुणत्वकर्मत्वादि अनुवृत्तिव्यावृत्तिहेतुत्वात् सामान्यं विशेषश्च भवति । तत्र द्रव्यत्वं परस्परविशिष्टेषु पृथिव्यादिष्वनुवृत्तिहेतुत्वात् सामान्यम् गुणकर्मभ्यो व्यावृत्तिहेतुत्वात् विशेषः । तथा गुणत्वं परस्परविशिष्टेषु रूपादिष्वनुवृत्तिहेतुत्वात् सामान्यं द्रव्यकर्मभ्यो व्यावृत्तिहेतुत्वाद्विशेषः । तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यं द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्वि-

---

(१)पूर्वोक्तं सामान्यविभागं विविच्य कथयति तत्रेति । सत्तायाः प्रत्यक्षत्वेऽपि विप्रतिपन्नम्प्रत्यनुमानमाह यथेति । अत्रेयमनुमानरीतिः—द्रव्यादौ सत्सदितिप्रतीतिः व्यतिरिक्तप्रत्ययनिबन्धना भिन्नेषु प्रतीत्यनुवृत्तित्वात् चर्मादिषु नीलप्रत्ययानुवृत्तिवत् । सामान्यमेवेति । यस्मातु सत्ता त्रिषु द्रव्यादिषु प्रत्ययानुवृत्तिं जनयति न व्यावृत्तिं त्तस्मात्सामान्यमेव न विशेष इत्येवकारार्थः । अत्र क्रमशो ३५ ३८ ३९ ४० ४१ ४८ सूत्राणि ३५ सूत्रञ्च द्रष्टव्यम् ।

द्रव्यत्वादिवत् पृथिवीत्वादीनामप्यनुवृत्तिव्यावृत्तिप्रतीतिहेतु-

शेषः । एवं पृथिवीत्वरूपत्वोत्क्षेपणत्वगोत्वघटत्वपटत्वादीनामपि प्राण्यप्राणिगतानामनुवृत्तिव्यावृत्तिहेतुत्वात् सामान्यविशेषभावः सिद्धः । एतानि तु द्रव्यत्वादीनि प्रभूतविषयत्वात् प्राधान्येन सामान्यानि स्वाश्रयाविशेषकत्वाद्भक्त्या विशेषाख्यानीति ॥

(१)लक्षणभेदादेषां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं सिद्धम् । अत एव च नित्यत्वम् । द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च परस्परतश्चान्यत्वम् । प्रत्येकं स्वाश्रयेषु लक्षणाविशेषाद्विशेषलक्षणाभावाच्चैक-

---

त्वात् सामान्यविशेषभावोऽस्तीत्याह एवमिति । प्राणिगतानि गोत्वादीनि । अप्राणिगतानि घटत्वादीनि । द्रव्यत्वादौ सामान्यस्वरूपं विशेषस्वरूपं वा पारमार्थिकमुभयस्वरूपं वेत्यत आह एतानीति । अत्र ३५ सूत्रम् ।

(१)ननु द्रव्यादिव्यतिरिक्तान्येव द्रव्यत्वादीनि न भवन्ति कुतः पृथक्कार्यं तेषां निरूप्यते अत आह लक्षणभेदादिति । तथाचानुवृत्तिप्रत्ययहेतुत्वरूपलक्षणभेदाद्व्यावृत्तिबुद्धिवेद्यद्रव्यादिव्यक्तिभ्योऽवश्यं द्रव्यत्वादिसामान्यानां भेदोऽङ्गीकार्यः लक्षणस्य समानासमानजातीयव्यवच्छेदार्थत्वात् इति भावः । नित्यत्वमिति । अभेदे व्यक्तिवदेषां विनाशोत्पादावापद्येतामित्यर्थः । सामान्यं व्यक्त्युत्पादविनाशेनोत्पादविनाशवत् व्यक्त्यन्तरावस्थाने चावस्थानान्नित्यमनित्यं चेति केचिन्मतन्तु न्यायकन्दल्यां व्यासत उक्तं तत्रैव सखण्डनं द्रष्टव्यं नेह विस्तराभयादुच्यते । द्रव्यादिष्विति । द्रव्यत्वादयः प्रत्येकं द्रव्यादिष्वेव नियताः प्रत्ययभेदश्चैतेषु दृश्यते तस्मात् द्रव्यादिषु प्रत्ययभेदाद्वृत्तिनियमाच्च द्रव्यत्वादीनां परस्परं भेदो बोध्य इत्यर्थः । अभेदात्मकं सामान्यमित्युक्तमेव स्पष्टय-

त्वम् । यद्यप्यपरिच्छिन्नदेशानि सामान्यानि भवन्ति तथाप्युपलक्षणनियमात् कारणसामग्रीनियमाच्च स्वविषयसर्वगतानि । अन्तराले च संयोगसमवायवृत्त्यभावादव्यपदेश्यानीति ॥

इति प्रशस्तपादभाष्ये सामान्यपदार्थः समाप्तः ॥

---

ति प्रत्येकमिति । लक्षणमनुगताकारज्ञानात्मकं तस्य प्रतिपिण्डमविशेषात् वैलक्षण्याभावात् विशेषे भेदे लक्षणस्य प्रमाणस्याभावाच्च सामान्यस्य स्वाश्रयेष्वभिन्नत्वमित्यर्थः । स्वविषय एव समवैति सामान्यं नान्यत्रेति यदुक्तं तत्र हेतुमाह यद्यपीति । अपरिच्छिन्नदेशान्यनियतदेशानि यत्रतत्रोपजायमानपिण्डेन सम्बन्धादिति शेषः । उपलक्षणमभिव्यञ्जकमवयवसंस्थानविशेषः तस्य नियमात् नियतत्वात् । कारणसामग्रीति । पिण्डोत्पादकसामग्रीत्यर्थः । इदमत्र तात्पर्यम्—यद्यपि सर्वं सामान्यं सर्वत्रोपजायमानेन स्वविषयेणैव पिण्डान्तरेणापि सम्बद्धुं शक्यते सास्नादिसंस्थानविशेषस्य गोत्वमात्रव्यञ्जकस्य गोमात्रनियतत्वात्, तथापि गोत्वस्य गव्येव समवायो नान्यत्रेति । एवं सामग्रीनियमादपि जातिसम्बन्धनियमो बोध्यः । एष हि तन्त्वादिस्वभावो यदेतैरुत्पन्ने द्रव्ये पटत्वं समवैति नान्यत् । न तावत्सामान्यमन्यतो गत्वा संबध्यतेऽन्यत्र निःष्क्रियत्वात् । तत्र यदि पूर्वं नासीत् तत्रोपजायमानेन पिण्डेनास्य सम्बन्धो न स्यात् दृश्यते तु सर्वत्र सम्बन्धस्तस्मात् सर्वं सर्वत्रास्तीति केचिन्मतमपाकुर्वन्नाह अन्तराले इति । अन्तरालमाकाशं वा दिग्द्रव्यं वा तेषु गोत्वादीनां न संयोगो न वा समवायः असम्बद्धावस्थाने च न कश्चिद्धेतुरतोऽन्तराले न सामान्यव्यवहार इत्यर्थः । कारणसामर्थ्याच्तु तत्रोपजायमानपिण्डे सामान्यं सम्बध्यत इति भावः । प्रतीयमानभेदेषु मणिसूत्रवदेकस्याकारस्याभावान्न सामान्यमिति अपोहरूपं वा तदिति च बौद्धमतखण्डनं कन्दल्यां द्रष्टव्यम् । अत्र ४२सूत्रात् ४७सूत्रान्तं द्रष्टव्यम् ।

इति श्रीभाष्यविवरणे सामान्यपदार्थः ।

# अथ विशेषपदार्थनिरूपणम् ।

## (१)विशेषप्रकरणम् ।

(१)अन्तेषु भवा अन्त्याः स्वाश्रयविशेषकत्वाद्विशेषाः । विनाशारम्भरहितेषु नित्यद्रव्येष्वण्वाकाशकालदिगात्ममनस्सु प्रतिद्रव्यमेकैकशो वर्तमानाः अत्यन्तव्यावृत्तिबुद्धिहेतवः । यथाऽस्मदादीनां गवादिष्वश्वादिभ्यस्तुल्याकृतिगुणक्रियावयवसंयोगनिमित्ता प्रत्ययव्यावृत्तिर्दृष्टा गौः शुक्लः शीघ्रगतिः पीनककुद्मान् महाघण्ट इति । तथास्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनस्सु च अन्यनिमित्तासम्भवाद् येभ्यो निमित्तेभ्यः प्रत्याधारं विलक्षणोऽयं विलक्षणोऽयमिति प्रत्ययव्यावृत्तिः देशकालविप्रकर्षे च परमाणौ स

---

### अथ विशेषपदार्थः ।

#### (१)विशेषप्रकरणम् ।

विशेषव्याख्यानायाह अन्तेष्विति । उत्पादविनाशयोरन्तेऽवस्थितत्वादन्तशब्दवाच्यानि नित्यद्रव्याणि तेषु भवाः स्थिता इत्यर्थः । स्वाश्रयभेदकत्वाच्च विशेषा अपि । इदमेवाह विनाशारम्भरहितेष्वित्यादिना । एकैकश इति । एकेनैव विशेषेण स्वाश्रयव्यावृत्तिसिद्धावनेकविशेषकल्पना निरर्थकैकत्रेति भावः । सिद्धे विशेषपदार्थे लक्षणं पूर्वोक्तं घटते नासिद्धे इत्याशङ्क्य तत्सद्भावं प्रतिपादयितुमवतारयति यथेत्यादिना । शुक्ल इति गुणनिमित्ता, शीघ्रगतिरिति क्रियानिमित्ता, पीनो ककुद्मानिति अवयवनिमित्ता, घण्टावानिति संयोगनिमित्ता प्रत्ययव्यावृत्तिर्बोध्या । यथाऽस्मदादीनां गवादिव्यक्तिषु प्रत्ययभेदो भवति तथा परमाण्वादिषु तद्दर्शि-

एवायमिति प्रत्यभिज्ञानं च भवति तेऽन्त्या विशेषाः ।

(१)यदि पुनरन्त्यविशेषमन्तरेण योगिनां योगजाद्धर्मात् प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं न स्यात् ततः किं स्यान्नैवं भवति । यथा च योगजाद्धर्मादशुक्ले शुक्लप्रत्ययः सञ्जायते अत्यन्तादृष्टे च प्रत्यभिज्ञानम् । यदि स्यान्मिथ्या भवेत् तथेहाप्यन्त्यविशेषमन्तरेण योगिनां न योगजाद्धर्मात् प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं वा भवितुमर्हति । अथान्त्यविशेषेष्विव परमाणुषु कस्मान्न स्वतः प्रत्ययव्यावृत्तिः कल्प्यते इति चेन्न तादात्म्यात् । इहातदात्मकेष्वन्यनिमित्तः प्रत्ययो भवति यथा घटादिषु प्रदीपात् न तु प्रदीपे प्रदीपान्तरात् । यथा गवाश्वमांसादीना स्वत एवाशुचित्वं तद्योगादन्येषां तथे-

---

नां परस्परापेक्षया प्रत्ययभेदेन भवितव्यं व्यक्तिभेदसम्भवात् । न चास्य व्यक्तिभेदो निमित्तं तदुपलम्भेपि स्थाण्वादिषु संशयदर्शनात् आकृत्यादीनां तुल्यत्वात् नान्यन्निमित्तम् । निमित्तहीनस्तु प्रत्ययभेदो न दृष्टः तस्माद्यदस्य निमित्तं स विशेष इति ।

(१)शङ्कते यदि पुनरिति । यथा योगजधर्मसामर्थ्याद्योगिनामतीन्द्रियार्थदर्शनं भवति तथा विशेषमन्तरेण प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं च स्यादिति शङ्कार्थः । समाधत्ते नैवमिति । योगजाद्धर्मादतीन्द्रियार्थदर्शनं भवेन्न पुनर्निर्निमित्तमेवेत्यभिप्रायः । स्पष्टं भाष्यम् । पुनश्चोदयति अथेति । तथाच यथा विशेषेषु न विशेषान्तरमङ्गीक्रियतेऽनवस्थाभयात्तथा च स्वत एव प्रत्ययव्यावृत्तिस्तैर्भवता कल्पनीया चेत्परमाणुष्वपि किं विशेषाः कल्प्यन्ते इत्याशङ्कार्थः । उत्तरयति नेति । विवृणोति इहेति । यथा घटादिष्वप्रकाशस्वभावेषु प्रकाशः

२२

ह्यपि तादात्म्यादन्त्यविशेषेषु स्वत एव प्रत्ययव्यावृत्तिः तद्योगात् परमाण्वादिष्विति ॥

इति प्रशस्तपादभाष्ये विशेषपदार्थः समाप्तः ॥

---

स्वभावात्प्रदीपादेः प्रकाशो भवति न प्रदीपे प्रदीपान्तरात् प्रकाशः किन्तु स्वत एवेति भावः । स्वत एव–स्वरूपादेव । अत्र ३७ सूत्रम् ।

इति भाष्यविवरणे विशेषपदार्थः ।



# अथ समवायपदार्थनिरूपणम् ।

## (१) समवायप्रकरणम् ।

(१) अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः । द्रव्यगुणकर्मसामान्यविशेषाणां कार्यकारणभूतानामकार्यकारणभूतानां वाऽयुतसिद्धानामाधार्याधारभावेनावस्थितानामिहेदमितिबुद्धिर्यतो भवति यतश्चासर्वगतानामधिगतान्यत्वानामविष्वग्भावः स समवायाख्यः सम्बन्धः । कथम्? यथेह कुण्डे दधीतिप्रत्ययः सम्बन्धे सति दृष्टस्तथेह तन्तुषु पटः इह वीरणेषु कटः इह द्रव्ये गुणकर्मणी इह द्रव्यगुणकर्मसु सत्ता इह द्रव्ये द्रव्यत्वम् इह गुणे गुणत्वम् इह कर्मणि कर्मत्वम् इह नित्यद्रव्येऽन्त्या वि-

---

### अथ समवायपदार्थः ।

#### (१) समवायप्रकरणम् ।

(१) समवायं निरूपयति अयुतेति । आधार्याधारभूतानां कार्यकारणभूतानामकार्यकारणभूतानां चेत्यर्थः । उद्देशव्याख्यानावसरे कृतव्याख्यानमेतत् । के ते अयुतसिद्धा अत आह द्रव्येत्यादि । कार्यकारणभूतानामकार्यकारणभूतानामिति नियमोक्तिः । तथा चावयवावयविनामनित्यद्रव्यतद्गुणानां नित्यद्रव्यतत्समवेतानामनित्यगुणानां कर्मतद्वतां च कार्यकारणभूतानां, नित्यद्रव्यतद्गुणानां सामान्यतद्वतामन्त्यविशेषतद्वतामकार्यकारणभूतानाञ्चायुतसिद्धानां समवायो भवतीति नियम एवेत्यर्थः । एवमाधार्याधारभावेनावस्थितानामित्यपि नियम एव । यतश्चेति । असर्वगतानां नियतदेशस्थितानामधिगतान्यत्वानामधिगतस्वरूपभेदाना-

शेषा इतिप्रत्ययदर्शनादस्त्येषां सम्बन्ध इति ज्ञायते ॥

न चासौ संयोगः सम्बन्धिनामयुतसिद्धत्वात्(१) अन्यतरकर्मादिनिमित्तासम्भवात् विभागान्तत्वादर्शनाद-धिकरणाधिकर्तव्ययोरेव भावादिति ॥

स च द्रव्यादिभ्यः पदार्थान्तरं भाववल्लक्षणभेदात् । (१)यथा भावस्य द्रव्यत्वादीनां स्वाधारेषु आत्मा-नुरूपप्रत्ययकर्तृत्वात् स्वाश्रयादिभ्यः परस्परतश्चार्था-न्तरभावः तथा समवायस्यापि पञ्चसु पदार्थेष्विहेतिप्र-त्ययदर्शनात् तेभ्यः पदार्थान्तरत्वमिति । न च संयो-गवन्नानात्वं भाववल्लिङ्गाविशेषात् विशेषलिङ्गाभावाच्च तस्माद्भाववत्सर्वत्रैकः समवाय इति ॥

---

मविष्वग्भावोऽस्वातन्त्र्यं समवायः सम्बन्ध इत्यर्थः । ज्ञायत इति । अनुमीयत इत्यर्थः । तत्प्रयोगश्चेत्थम्–इह तन्तुषु पट इत्यादि प्रतीतिः सम्बन्धहेतुका अवधारितप्रतीतित्वात् इह कुण्डे दधीतिप्रतीतिव-दिति ।

(१)अयुतसिद्धत्वादिति । संयोगस्तु युतसिद्धानामेव भवतीत्य-र्थः । अन्यतरेति हेत्वन्तरम् । इह त्वन्यतरकर्मादीनां निमित्तानामभावो भावोत्पादककारणसामर्थ्यभावित्वादित्यभिप्रायः । विभागान्तत्वादर्श-नाद्विभागनाश्यत्वस्य समवायेऽभावादित्यर्थः । अधिकरणेति । संयो-गस्तु स्वतन्त्रयोरपि यथोर्ध्वावस्थितयोरङ्गुल्योर्नायं तथेति भावः ।

(२)भाववल्लक्षणभेदादिति हेतुं विवृणोति यथेति । यथा भावस्य सत्तायाः द्रव्यत्वादीनाञ्च स्वस्वाधारेषु द्रव्यादिषु सत्सदिति द्र-व्यं द्रव्यमित्यादिरात्मानुरूपो यः प्रत्ययस्तस्य कर्तृत्वात् सत्तादी-नां स्वाश्रयेभ्यो भेदस्तथा समवायस्यापि इहेति प्रत्ययदर्शनाद्भे-

(१)ननु यद्येकः समवायो द्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वादिविशेषणैः सह सम्बन्धैकत्वात् पदार्थसङ्करप्रसङ्ग इति, न आधाराधेयनियमात् । यद्यप्येकः समवायः सर्वत्र स्वतन्त्रः तथाप्याधाराधेयनियमोऽस्ति । कथम् ? द्रव्येष्वेव द्रव्यत्वं गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वमिति। एवमादि कस्मात् ? अन्वयव्यतिरेकदर्शनात् । इहेतिसमवायनिमित्तस्य ज्ञानस्यान्वयदर्शनात् सर्वत्रैकः समवाय इति गम्यते । द्रव्यत्वादिनिमित्तानां व्यतिरेकदर्शनात् प्रतिनियमो ज्ञायते । यथा कुण्डदध्नोः संयोगैकत्वे भवत्याश्रयाश्रयिभा-

---

द इत्यर्थः । भाववदिति । लिङ्गाविशेषात् लक्षणैक्याद्विशेषे भेदे लक्षणस्य प्रमाणस्याभावाच्च यथा सत्तैका तथा समवायोऽपीति भावः।

(१)शङ्कते नन्विति। पदार्थसङ्कर इति । समवायस्यैकत्वे द्रव्यत्वस्य पृथिव्यादौ यः सम्बन्धः स एव गुणादौ गुणत्वादीनामिति यथा पृथिव्यां द्रव्यत्वसम्बन्धात् द्रव्यत्वं तथा तद्योगस्य गुणादावपि सत्त्वात् तेषामपि द्रव्यत्वं स्यादित्यादिः सङ्करो बोध्यः । समाधत्ते नेति। सङ्करो नेत्यर्थः। तत्र हेतुमाहाधाराधेयनियमादिति । न समवायसद्भावमात्रेण द्रव्यत्वं किन्तु द्रव्यसमवायेन द्रव्यत्वं स च द्रव्ये एव न गुणादाविति समाधानार्थः । आक्षेपप्रदर्शनपूर्वकमुत्तरबोधकं हेतुं विवृणोति यद्यपीत्यादिना । सम्बन्धान्तरं संयोगवत् न तद्वृत्तितानियामकमित्यर्थः । आधाराधेयनियमं प्रश्नपूर्वकं दर्शयति कथमित्यादिना । पुनः शङ्कते एवमादीति । द्रव्येष्वेव द्रव्यत्वमित्याद्याधाराधेयनियमः कथं त्वया ज्ञात इत्यर्थः । उत्तरयति अन्वयव्यतिरेकदर्शनादिति । द्रव्यत्वनिमित्तस्य प्रत्ययस्य द्रव्येष्वेवान्वयो गुणादिभ्यो व्यतिरेक इत्याद्यन्व-

वनियमः । तथा द्रव्यत्वादीनामपि समवायैकत्वेपि व्यङ्ग्यव्यञ्जकशक्तिभेदादाधाराधेयनियम इति ॥

(१)सम्बन्ध्यानित्यत्वेऽपि न संयोगवदानित्यत्वं भाववदकारणत्वात् । यथा प्रमाणतः कारणानुपलब्धेर्नित्यो भाव इत्युक्तम् तथा समवायोऽपीति । न ह्यस्य किञ्चित् कारणं प्रमाणत उपलभ्यते इति । कया पुनर्वृत्त्या द्रव्यादिषु समवायो वर्तते । न संयोगः सम्भवति तस्य गुणत्वेन द्रव्याश्रितत्वात् । नापि समवायस्तस्यैकत्वात् न चान्या वृत्तिरस्तीति । न । तादात्म्यात् । यथा द्रव्यगुणकर्मणां सदात्मकस्य भावस्य नान्यः सत्तायोगोऽस्ति । एवमविभागिनो वृत्त्यात्मकस्य समवायस्य नान्या वृत्तिरस्ति तस्मात् स्वात्मवृत्तिः । अत एवातीन्द्रियः सत्तादीनामिव प्रत्यक्षेषु वृ-

---

यव्यतिरेकदर्शनात् द्रव्यत्वादीनां नियमो ज्ञायत इत्यर्थः । ननु कुतोऽयं नियमो यत् द्रव्यत्वस्य पृथिव्यादिष्वेव समवायो नान्यत्रेति समवायस्याविशेषात् अत आह यथेति । संयोगस्यैकत्वेऽपि यथा कुण्डदध्नोराश्रयाश्रयिभावनियमः शक्तिनियमात्तथा समवायस्यैकत्वेपि द्रव्यत्वादीनामाश्रयाश्रयिभावनियमो व्यङ्ग्यव्यञ्जकशक्तिभेदादित्यभिप्रायः । द्रव्यत्वाभिव्यञ्जिका शक्तिर्द्रव्येष्वेव नान्यत्रेति तात्पर्यम्।

(१)किमयं संयोगवदनित्यो नित्यो वेति संशये सत्याह सम्बन्ध्यनित्यत्वेऽपीति । हेतुमेव विवृणोति यथेत्यादिना । सम्बन्धिनाशे संयोगविनाशो युक्तः तदुत्पादे सम्बन्धिनोः समवायिकारणत्वात्, समवायस्य तु सम्बन्धिनौ न कारणं सम्बन्धिमात्रत्वात्, यथा न कारणं तथोपपादितम् । तस्मान्नास्य सम्बन्धिविनाशेप्यवि-

त्त्वज्ञानं शास्त्रमुच्यते तदा धर्मविशेष ईश्वरनियोगप्रसादरूपो वक्तव्यः । श्रूयते हीश्वरनियोगप्रसादावधिगम्यं कणादो महर्षिः शास्त्रं प्रणीतवानिति । तत्त्वज्ञान(१)मात्मतत्त्वसाक्षात्कार इह विवक्षितस्तस्यैव सवासनमिथ्याज्ञानोन्मूलनक्षमत्वात् । (२) "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यत्र "द्वे ब्रह्मणी वेदितव्ये" इत्यत्र च वेदनपदस्य साक्षात्कारपरत्वात्, "पश्यत्यचक्षुः" इत्यत्रापि तथा । स च शास्त्रान्मनननिदिध्यासनादिपरम्परये(३)ति हेतुपञ्चम्या तथैवाभिधानात् ॥ ४ ॥

(४) इदानीमपवर्गभागितया सर्वपदार्थाश्रयतया च प्रथमोद्दिष्टस्य द्रव्यपदार्थस्य विभागं विशेषोद्देशञ्च कुर्वन्नाह—

**पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥ ५ ॥**

इतिकारोऽवधारणार्थः । तेन नवैव द्रव्याणि नाधिकानि न न्यूनानि वेत्यर्थः । ननु विभागबलादेव न्यूनाधिकसङ्ख्याव्यवच्छेदसिद्धौ किमितिकारेणेति चेत् उद्देशमात्रपरतयाऽपि सूत्रसम्भवे विभाग-

---

(१) आत्मतत्त्वसाक्षात्कारः स्वात्मतत्त्वसाक्षात्कारः । इहेति । तत्त्वज्ञानपदस्य शास्त्रपरत्वकल्प इत्यर्थः न तु एतत्सूत्रे इति । सूत्रव्याख्यावसानान्तमस्यैव कल्पस्य प्रपञ्चनादन्तरा पूर्वकल्पानुसरणे क्रमभङ्गापत्तेरिति भावः । तस्यैवेति । एवकारेणास्यां व्याख्यायामुपस्कारकृतः स्वरसः सूचितः । स्वात्मसाक्षात्कारस्यैवेत्यर्थः । स्वात्मगोचरमिथ्याज्ञानस्य संसारहेतुतया तस्यैव तद्विरोधित्वादिति भावः ॥

(२) ननु सामान्यतो ज्ञानार्थकस्य ज्ञाधातोः साक्षात्कारार्थत्वं विरुद्धमत आह तमेवेत्यादिना । तथा च दृशेश्चाक्षुषज्ञानार्थकस्यापि "पश्यत्यचक्षुः" इत्यादौ ज्ञानार्थकत्ववत् योग्यतया तत्त्वज्ञानमित्यत्र ज्ञाधातोरपि साक्षात्कारपरत्वमविरुद्धमिति भावः ।

(३) इतीति अत इत्यर्थः । यतो निःश्रेयसहेतुरात्मसाक्षात्कारः शास्त्रप्रयोज्यः तस्मादात्मसाक्षात्कार इह विवक्षित इति समुदायार्थः । ननु आत्मसाक्षात्कारप्रयोजकस्यास्य शास्त्रस्य परम्परया मुक्तिहेतुत्वे सूत्रे तत्त्वज्ञानादिति हेतुपञ्चम्याः साक्षाज्जनकत्वमसङ्गतं स्यादत आह हेतुपञ्चम्या इति । तथैव परम्पराकारणत्वरूपप्रयोजकत्वमेव । एवं च यथा पदार्थतत्त्वज्ञानं मुक्तौ आत्मसाक्षात्कारादिसम्पादनद्वारा प्रयोजकं तथा शास्त्रमपि तद्द्वारा प्रयोजकहेतुरिति भावः ॥

(४) सर्वपदार्थेषु द्रव्योद्देशप्राथम्यबीजं दर्शयन् क्रमानुरोधेन तद्विभागविशेषोद्देशावाह इदानीमिति । एतेन संगतिप्रदर्शनं सूचितम् । अपवर्गेति । अपवर्गो हि मुख्यप्रयोजनं तद्भागी चात्माऽतस्तज्जिज्ञासाया अन्यजिज्ञासाप्रतिबन्धकत्वात्तस्य च द्रव्यत्वात्प्रथममुद्देश इति भावः ॥

तात्पर्यस्फोरणार्थमेवेतिकाराभिधानात् । सुवर्णादीनामीश्वरस्य चात्रैवान्तर्भावात् अन्धकारस्य चाधिकत्वेनाशङ्क्यमानस्याभावत्वव्युत्पादनादेतदध्यवसेयम् । असमासकरणन्तु सर्वेषां प्राधान्यप्रदर्शनाय । लक्षणमेतेषान्तु वैधर्म्यावसरे सूत्रकृदेव दर्शयिष्यति । ननु सुवर्णं न तावत् पृथिवी निर्गन्धत्वात्, न जलं (१)स्नेहसांसिद्धिकद्रवत्वशून्यत्वात्, न तेजो गुरुत्ववत्त्वात्, अत एव न वायुर्न वा कालादि, ततो नवभ्यो भिद्यत इति चेन्न (२)आद्यद्वितीययोरनाभासत्वम् तृतीयस्य स्वरूपासिद्धत्वं ततः परं सिद्धसाधनं हेतोः स्वरूपासिद्धिश्च । साधयिष्यते च सुवर्णस्य तैजसत्वमिति ॥ ५ ॥

(३)गुणत्वेन रूपेण गुणानां सर्वद्रव्याश्रितत्वं द्रव्याभिव्यङ्ग्यत्वं द्रव्याभिव्यञ्जकत्वञ्चेति द्रव्यानन्तरं गुणानामुद्देशं विभागञ्चाह—

**रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वपरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥ ६ ॥**

चकारेण गुरुत्वद्रवत्वस्नेहसंस्कारधर्माध[illegible]ब्दान् समुच्चिनोति ते हि प्रसिद्धगुणभावा एवेति कण्ठतो नोक्ताः । गुणत्वञ्चामीषां यथास्थानं लक्षणतः स्वरूपतश्च वक्ष्यति । रूपरसगन्धस्पर्शानां (४)समानकालीनरूपरसगन्धस्पर्शसामानाधिकरण्यं नास्तीति सूचनार्थं समासः । सङ्ख्यापरिमाणयोस्तु समानकालीनसङ्ख्यापरिमाण-

---

(१) स्नेहेति । स्नेहशून्यत्वात् सांसिद्धिकद्रव्यत्वशून्यत्वादिति हेतुद्वयम् अन्यथाऽन्यतरवैयर्थ्यं स्यादिति भावः । अत एव गुरुत्ववत्त्वादेव ॥

(२) आद्यद्वितीययोरिति । आद्ये निर्गन्धत्वादित्यत्र द्वितीये स्नेहसांसिद्धिकद्रवत्वशून्यत्वादित्यत्र । नाभासत्वं न दुष्टत्वं सुवर्णस्य तेजोद्रव्यत्वादिति शेषः । स्वरूपासिद्धत्वमिति । तत्र गुरुत्वस्य पार्थिवभागप्रयुक्तत्वादित्यर्थः ॥

(३) द्रव्योद्देशानन्तरं कर्माद्युद्देशपूर्वं गुणोद्देशे बीजं दर्शयति गुणत्वेनेत्यादिना । द्रव्यसम्बन्धप्रकर्षो गुणजिज्ञासाया बलवत्त्वे हेतुरित्याशयः ॥

(४) समानकालीनेति । स्वकालीनेत्यनुक्त्वा समानकालीनेति अभिधानं स्वकालीनस्वभिन्नरूपादिबोधनार्थम् तेन स्वेन सह स्वस्य समानकालीनत्वसामानाधिकरण्ययोः सत्त्वेपि न दोषः । रूपेति । विभिन्नकालावच्छेदेन रूपादीनां सामानाधिकरण्यं वर्तत एवेत्युक्तं समानकालीनेति । समास इति । समासकरणेन पदान्तराव्यवहितस्वोच्चारकोच्चरितशब्दप्रतिपाद्यत्वरूपसाहचर्यं सूचितमसमासे विभक्तिरूपपदान्तरव्यवधानेनेदृशसाहचर्यं न स्यादिति भावः ॥

सामानाधिकरण्यसूचनायासमासो बहुवचननिर्देशश्च । यद्यप्येकत्वसमानाधिकरणं नैकत्वान्तरं न वा महत्त्वदीर्घत्वसमानाधिकरणं महत्त्वदीर्घत्वान्तरम् तथापि द्वित्वादीनामन्योन्यं सामानाधिकरण्यं महत्त्वदीर्घत्वादीनाञ्च विजातीयपरिमाणयोः सामानाधिकरण्यमस्त्येव । पृथक्त्वञ्च यद्यपि द्विपृथक्त्वादिसमानाधिकरणं तेन सङ्ख्यावद् बहुत्वेनैव निर्देष्टुमर्हति तथाप्यवधिव्यङ्ग्यत्वलक्षणं सङ्ख्यातो वैधर्म्यं सूचयितुमेकवचननिर्देशः । संयोगविभागयोर्द्वयोरप्येककर्मजन्यत्वसूचानाय द्विवचनम् । परत्वापरत्वयोरन्योन्याश्रयनिरूप्यतया दिक्काललिङ्गत्वाविशेषसूचनाय च द्विवचनम । बुद्धीनां विद्यादिभेदेन साङ्ख्याभिमतैकमात्रबुद्धिनिराकरणसूचनाय बहुवचनम् । सुखदुःखयोर्द्वयोरपि भोगत्वावच्छेदैककार्य्यजनकत्वम् अविशेषेण चादृष्टोन्नायकत्वम्, सुखस्यापि दुःखत्वेन भावनञ्च ख्यापयितुं द्विवचनम् । इच्छाद्वेषयोर्द्वयोरपि प्रवृत्तिं प्रति कारणत्वसूचनाय द्विवचनम् । प्रयत्नानां (१)विहितनिषिद्धगोचराणां दशविधानां पुण्यहेतुत्वं दशविधानाञ्च पापहेतुत्वमभिसन्धाय बहुवचनमित्यूह्येयम् ।

(२)यद्वा रूपरसगन्धस्पर्शानां भौतिकेन्द्रियव्यवस्थाहेतुत्वज्ञापनार्थं पाकजप्रक्रियाव्यवस्थापनार्थं वा ते समस्योक्ताः । सङ्ख्यायां द्वित्वबहुत्वादौ विप्रतिपत्तिरिति तन्निराकरणसूचनार्थं बहुत्वेनाभिधानम् । पृथक्त्वे तु सङ्ख्यावहुत्वेनैवास्यापि बहुत्वमिति सूचनायावधिज्ञानव्यञ्जनीयत्वं सङ्ख्यातो वैधर्म्यमिति सूचनाय च पृथगभिधानम् । परिमाणे तु दीर्घत्वह्रस्वत्वादिविप्रतिपत्तिनिरासाय बहुवचनम् । संयोगविभागयोरन्योन्यविरोधज्ञापनाय द्विवचनम् । परत्वापरत्वयोर्दैशिककालिकभेदेन भिन्नजातीयत्वसम्भवेन चतुष्ट्वापत्तौ गुणविभागो न्यूनः स्यात् इति तत्रापि द्विवचनमित्या(३)द्यूह्येयम् ।

(१) विहितनिषिद्धगोचराणामिति । विहितनिषिद्धपुण्यपापयोर्दशविधत्वात्तद्धेतुभूतप्रयत्नानामपि दशविधत्वमत्र बोध्यम् । तत्र विहितानि दानपरित्राणपरिचर्यारूपाणि त्रीणि शारीराणि । सत्यहितप्रियस्वाध्यायरूपाणि चत्वारि वाचिकानि, अस्पृहादयाश्रद्धारूपाणि त्रीणि मानसानीति । निषिद्धानि तु हिंसास्तेयप्रतिषिद्धमैथुनरूपाणि शारीराणि, अनृतपरुषसूचनासम्बद्धरूपाणि वाचिकानि, परद्रोहपरद्रव्येच्छानास्तिकतारूपाणि मानसानीति दशविधानि इत्यर्थः ॥

(२) उक्तविधसाहचर्यस्य समानरूपताप्रयोजकत्वानङ्गीकारे सूत्रस्यार्थान्तरमाह यद्वेति ॥

(३) इत्यादीति । प्रयत्नस्य प्रवृत्तिनिवृत्तिजीवनयोनिभेदात्त्रैविध्यमित्यादिकमादिपदग्राह्यमिति भावः ॥

एतेषाञ्च लक्षणमग्रे वक्ष्यते ॥ ६ ॥

(१)कर्मणां द्रव्यजन्यतया गुणजन्यतया च रूपवद्द्रव्यसमवाया-च्च प्रत्यक्षतेति द्रव्यगुणाभिधानानन्तरं कर्मोद्देशविभागावाह—

**उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥ ७ ॥**

उत्क्षेपणम् अवक्षेपणम् आकुञ्चनं प्रसारणं गमनमिति कर्माणि। इतिरवधारणार्थः, भ्रमणादेरपि गमनान्तर्गतत्वात्। अत्र च उत्क्षेपणत्वावक्षेपणत्वाकुञ्चनत्वप्रसारणत्वगमनत्वानि कर्मत्वसाक्षाद्व्याप्याः पञ्च जातयः। नन्वेतदनुपपन्नं गमनस्य कर्मपर्य्यायत्वात् सर्वत्र गच्छतीति बुद्धेर्दृष्टत्वादुत्क्षेपणत्वादीनां चतसृणां जातीनां परस्परात्यन्ताभावसमानाधिकरणानां सामानाधिकरण्याननुभवात् चतस्र एव कर्मत्वव्याप्या जातय इति चेत्। (२)सत्यं कर्मपर्य्याय एव गमनं पृथगभिधानन्तु भ्रमणरेचनस्यन्दनोर्ध्वज्वलनमनोन्नमनादीनां भिन्नभिन्नबुद्धिव्यपदेशभाजामेकेन शब्देन सङ्ग्रहार्थम्। (३)यद्वा गमनत्वमपि कर्मत्वव्याप्या पञ्चमी जातिरेव तेन भ्रमणरेचनादिष्वेव गमनप्रयोगो मुख्यः उत्क्षेपणावक्षेपणादिषु यदि गमनप्रयोगस्तदा भाक्तः। स्वाश्रयसंयोगविभागासमवायिकारणत्वमेव गौणमुख्यसाधारणो धर्मः। (४)गमनत्वजातेस्त्वनियतदिग्देशसंयोगविभागासमवायिकारणत्वमेव व्यञ्जकम्,तच्च भ्रमणादिषु सर्वत्रेति गमनग्रहणेनैव तेषां ग्रहणमिति। निष्क्रमणत्वप्रवेशनत्वादिका तु न जातिः एकस्मिन्नेव कर्मणि गृहाद् गृहान्तरं गच्छति पुरुषे कस्यचित् द्रष्टुः प्रविशतीति प्रत्ययः कस्यचित्तु निष्क्रामतीति तत्र(५)जातिसङ्करः स्यात्

---

(१) सङ्गतिप्रदर्शनपूर्वकं द्रव्यगुणोद्देशान्ते कर्मनिरूपणे बीजं स्फोटयन्नाह कर्मणामिति ॥

(२) सत्यमिति । तथा चोत्क्षेपणादिचतुष्टयान्यकर्मत्वमेवात्र गमनत्वम् तेनैव भ्रमणादिसंग्रहात्। न चोत्क्षेपणादेरपि तेनैव सङ्ग्रहसम्भवे पृथगुपादानवैयर्थ्यमिति वाच्यम् मुनेरिच्छामात्राधीनतयाऽत्र पर्यनुयोगासम्भवात् ॥

(३) गमनत्वं न कर्मत्वसाक्षाद्व्याप्यजातिरिति पूर्वकल्पमनादृत्याह यद्वेति ।

(४) गमनपदस्य भ्रमणादिषु मुख्यप्रयोगहेतुमुपपादयन्नाह गमनत्वजातेरिति । उत्क्षेपणावक्षेपणयोरतिव्याप्तिनिरासार्थमनियतपदम् । आकुञ्चनप्रसारणयोरतिव्याप्तिनिवारणार्थं देशेति ॥

(५) जातिसङ्कर इति । गृहं प्रविशति च पुरुषे प्रविशतीति, गृहान्निर्गच्छति च निष्क्रामतीति प्रत्येकमपि प्रत्ययसत्त्वात्सङ्कर इति भावः । एवमग्रेऽपि ॥

तथा भ्रमणादेरेकस्या जलप्रणाल्या निष्क्रम्यापरां प्रविशति निष्क्रामति प्रविशतीति प्रत्ययद्वयदर्शनादुपाधिसामान्यमेवैतद्व्यवसेयम् । (१)उत्क्षेपणादौ तु मुषलमुत्क्षिपामीतीच्छाजनितेन प्रयत्नेन प्रयत्नवदात्मसंयोगादसमवायिकारणाद्धस्ते तावदुत्क्षेपणं तत उत्क्षेपणविशिष्टहस्तनोदनादसमवायिकारणात् मुषलेऽप्युत्क्षेपणाख्यं कर्म युगपद्वा । तत ऊर्ध्वमुत्क्षिप्तयोर्हस्तमुषलयोरवक्षेपणेच्छाजनितप्रयत्नवदात्मसंयोगाद्धस्तनोदनाच्च युगपदेव हस्ते मुषले चावक्षेपणम् उलूखलपातानुकूलं सञ्जायते । ततो दृढतरद्रव्यसंयोगाद्यदकस्मान्मुषलस्योर्ध्वगमनं भवति तत्र नेच्छा न वा प्रयत्नः कारणं किन्तु संस्कारमात्रादेव मुषलस्योत्पतनम् तच्च गमनमात्रं नतूत्क्षेपणं भाक्तस्तत्रोत्क्षेपणव्यवहारः । एवमनुलोमप्रतिलोमवायुद्वयसङ्घट्टवशाद्वात्यास्तत्प्रेरिततूलकादौ चोत्क्षेपणव्यवहारो भाक्तः । एवं स्रोतोद्वयसङ्घट्टवशाज्जलोर्ध्वगमनेऽपि । एवमुत्क्षेपणावक्षेपणव्यवहारः शरीरतदवयवतत्संयुक्तमुषलतोमरादिष्वेव मुख्यः भवति हि हस्तमुत्क्षिपति मुषलमुत्क्षिपति तोमरमुत्क्षिपतीति एवमवक्षिपतीत्यपि । (२)आकुञ्चनन्तु सत्स्वेवावयवानामारम्भकसंयोगेषु परस्परमवयवानामनारम्भकसंयोगोत्पादकं वस्त्राद्यवयविकौटिल्योत्पादकं कर्म यतो भवति सङ्कुचति पद्मं सङ्कुचति वस्त्रं सङ्कुचति चर्मेति प्रत्ययः । एवमवयवानां पूर्वोत्पन्नानारम्भकसंयोगविनाशकं कर्म प्रसारणं यतो भवति प्रसरति वस्त्रं प्रसरति चर्म प्रविकसति पद्ममित्यादिप्रत्ययः । एतच्चतुष्टयभिन्नं यत् कर्मजातं तत्सर्वं गमनविशेषः । तत्र भ्रमणं प्रयत्नवदात्मसंयोगाद्धस्ते कर्मवता हस्तेन नोदनाख्यसंयोगादवघट्टनाच्च चक्रादौ तिर्यक्संयोगानुकूलं कर्म । एवं (३)रेचनाद्यपि व्याख्येयम् । स्फुटीकरिष्यति

(१) उत्क्षेपणमाह उत्क्षेपणादौ त्विति । अत्र समवायिकारणं हस्तः असमवायिकारणं प्रयत्नवदात्मसंयोगः कार्यं हस्तोत्क्षेपः, एवमग्रेऽपि । युगपद्वेति । यदा हस्तमुषलोत्क्षेपणे एकदैव भवतः तदा हस्तगात्रनोदनमसमवायिकारणं मुसलोत्क्षेपणे इति भावः ॥

(२) आकुञ्चनमाह आकुञ्चनमिति । अत्र वस्त्रं समवायि, अवयवारम्भकसंयोग असमवायि आकुञ्चनं कार्यमिति बोध्यम् ॥

(३) रेचनादीति । गुरुत्वासमवायिकारणकं नैमित्तिकद्रवत्ववद्वृत्त्युत्तरसंयोगानुकूलं कर्म रेचनम्, द्रवत्वासमवायिकारणकमुत्तरसंयोगानुकूलं कर्म स्यन्दनम् इत्याद्यूह्येयम् । तथा च रेचनत्वादयो गमनत्वव्याप्या जातय इति भावः ॥

चाग्रे। तदेतेषां कर्मणां विहितयागस्नानदानादिषु धर्मानुकूलप्रयत्नवदात्मसंयोगजन्यत्वं निषिद्धदेशगमनहिंसाकलञ्जभक्षणादिषु चाधर्मानुकूलप्रयत्नवदात्मसंयोगजन्यत्वमध्यवसेयमिति ॥ ७ ॥

द्रव्यादीनामुद्देशानन्तरं त्रयाणां साधर्म्यप्रकरणमारभते। (१)तत्र द्रव्यादीनां त्रयाणां साधर्म्यस्य तत्त्वज्ञानानुकूलतया प्रथमं शिष्याकाङ्क्षितत्वात् सामान्यादिपदार्थत्रयस्य उद्देशात् प्रागेव त्रयाणां साधर्म्यमाह—

**सदनित्यं द्रव्यवत्कार्य्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ॥ ८ ॥**

विशेषे सत्यपि अयमविशेषशब्दः साधर्म्यपरः। सदिति। सदाकारप्रत्ययव्यपदेशविषयत्वम् त्रयाणामेव सत्तायोगित्वात्। अनित्यमिति। ध्वंसप्रतियोगित्वं यद्यपि न परमाण्वादिसाधारणं (२)तथापि ध्वंसप्रतियोगिवृत्तिपदार्थविभाजकोपाधिमत्त्वं विवक्षितम्। द्रव्यवदिति। द्रव्यं समवायिकारणतयाऽस्यास्तीति द्रव्यवत्, एतदपि परमाण्वादौ नास्तीति द्रव्यसमवायिकारणकवृत्तिपदार्थविभाजकोपाधिमत्त्वं विवक्षितम्। कार्य्यमिति। (३)प्रागभावप्रतियोगिवृत्तिपदार्थविभाजकोपाधिमत्त्वं विवक्षितम्। कारणमिति। ज्ञानेतरकार्य्यनियतपूर्ववर्त्तिजातीयवृत्तिपदार्थविभाजकोपाधिमत्त्वम् तेन स्वसाक्षात्कारे विषयतया कारणं गोत्वादौ नातिप्रसक्तिर्न वा पारिमाण्डल्यादावजनकेऽव्याप्तिः। सामान्यविशेषवदिति। सामान्यं सद्विशेषोऽन्योन्यव्यावर्तकतया द्रव्यत्वगुणत्वकर्मत्वादि तद्वत्त्वमित्यर्थः। ननु "गां दद्यात्" "गौः पदा न स्प्रष्टव्या" इति श्रुतेर्धर्माधर्मजनकत्वं जातेरपीति कारणत्वमतिव्यापीति चेन्न (४)अवच्छेदकतामात्रेण

(१) सामान्योद्देशस्य कर्मनिरूपणानन्तरं युक्तत्वात्कथमन्तरा साधर्म्यप्रकरणमारभ्यत इत्याशङ्क्याह तत्रेति ॥

(२) तथापीति। यद्यपि ध्वंसप्रतियोगिवृत्तिजातिमत्त्वस्य परमाणुसाधारण्यात्पदार्थविभाजकोपाधिपदस्य वैयर्थ्यं सम्भवति तथापि जातिमत्त्वस्यैव लक्षणत्वसम्भवे तद्घटितस्य तस्य वैयर्थ्यापत्तेर्दुष्परिहरत्वात् ॥

(३) प्रागभावेति। प्रागभावप्रतियोगित्वरूपकार्यत्वस्य परमाणावसम्भवात् विशेष्यदलम् ॥

(४) अवच्छेदकतामात्रेणेति। जात्याकृतिविशिष्टव्यक्तेरेव दानस्पर्शयोग्यतयाऽवच्छेदकतामात्रेणैव तत्र जातिभानादिति भावः ॥

जातेर्विनियोगात् । उपलक्षणञ्चैतत् (१)स्वसमवायार्थशब्दाभिधेयत्वमपि त्रयाणां साधर्म्यं द्रष्टव्यम् । (२)यदि तु कार्य्यत्वानित्यत्वे-कारणवतामेव "कारणत्वञ्चान्यत्र पारिमाण्डल्यादिभ्यः" इति प्रशस्तदेवाचार्य्यैर्व्यवस्थितं साधर्म्यमुच्यते तदा पदार्थविभाजकोपाधिमत्तया (३)न विशेष्यं सूत्रोक्तरीत्या । (४)त्रयाणां गुणजनकत्वं गुणजन्यत्वञ्चान्यत्र (५)नित्यद्रव्येभ्य इति ॥ ८ ॥

इदानीं द्रव्यगुणयोरेव साधर्म्यमाह—

**द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ॥ ९ ॥**

एतदेव सूत्रान्तरेण स्पष्टयति—

**द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥ १० ॥**

अन्त्यावयविविभुद्रव्याणि तथान्त्यावयविगुणान् द्वित्वद्विपृथक्त्वपरत्वापरत्वादीन् गुणांश्च विहाय सजातीयारम्भकत्वं साधर्म्यं द्रष्टव्यम् । सजातीयारम्भकवृत्तिपदार्थविभाजकोपाधिमत्त्वं वा विवक्षितं तेनाजनकद्रव्यव्यक्तीनामप्युपग्रहः ॥ १० ॥

ननु कर्माणि कुतो न कर्मान्तरमारभन्त इत्यत आह—

**कर्म कर्मसाध्यं न विद्यते ॥ ११ ॥**

विदिरयं ज्ञानार्थो (६)न तु सत्ताभिधायी । सजातीयारब्ध-

(१) स्वसमवायेति । स्वसमवायशब्दाभिधेयत्वं, स्वसमवायार्थाभिधेयत्वं चेत्यर्थः । समवायानुयोगित्वं स्वसमवायशब्दार्थः ।

(२) भाष्यकारमतमाह यदित्विति ।

(३) न विशेष्यमिति । गगनादावतिव्याप्तेरिति शेषः । सूत्रकारस्यापीदमेवाभिमतम् ।

(४) कार्यकारणपदयोर्विशेषार्थपरतया व्याचष्टे त्रयाणां गुणजनकत्वमिति । सुखदुःखसाक्षात्कारभिन्नानुभवावृत्तिगुणनिष्ठजन्यतानिरूपितजनकतावच्छेदकाश्रयत्वमित्यर्थः । सुखदुःखयोः साक्षात्कारानतिरिक्तगुणाजनकत्वादव्याप्तिवारणाय भिन्नान्तम् । पारिमाण्डल्यस्य ज्ञाननिष्ठजन्यतानिरूपितजनकतावच्छेदकतात्वादतिव्याप्तिवारणायानुभवावृत्तिपदम् सूत्रकारमतेनास्य साधर्म्यात् अन्यत्र नित्यद्रव्येभ्य इत्युक्तेः । एवं गुणाजन्यत्वमपि गुणनिष्ठजनकतानिरूपितजन्यतावच्छेदकताश्रयधर्मवत्त्वमित्यर्थः ।

(५) नन्वयं भाष्यकाराभिप्रेतोऽर्थः सूत्रेण कथमुपलभ्यत इत्यत आहान्यत्रेति । तथा च सदनित्यमिति सूत्रैकदेशस्य नित्यसद्विशेषभिन्नमित्यर्थकरणादन्यत्र नित्यद्रव्येभ्य इदं साधर्म्यमित्यभिप्रायः ।

(६) नतु सत्ताभिधायीति । तथा च ज्ञानार्थकत्वे प्रमाणागोचरत्वादित्यर्थकरणेन कुत इति हेत्वाकाङ्क्षानिवृत्तिः नतु सत्तार्थकत्वेपीति भावः ।

द्रव्यगुणयोरिव कर्मसाध्ये कर्मणि प्रमाणं नास्तीत्यर्थः। इदमत्राकूतम्। कर्म यदि कर्म जनयेत् स्वोत्पत्त्यनन्तरमेव जनयेत् शब्दवत्। तथाच पूर्वकर्मणैव यावत्संयोगिद्रव्येभ्यो विभागे जनिते द्वितीयं कर्म केन सह विभागं जनयेत् विभागस्य संयोगपूर्वकत्वात्, संयोगान्तरस्य च तत्राधिकरणेऽनुत्पन्नत्वात, विभागाजनने तु (१)कर्मलक्षणक्षतेः। न च क्षणान्तरे कर्मान्तरं जनयिष्यतीति वाच्यम् समर्थस्य क्षेपायोगात्, अपेक्षणीयान्तराभावात्, पूर्वसंयोगनाशक्षणेऽपि जनने विभागजनकत्वानुपपत्तिरेव, उत्तरसंयोगोत्पत्तिकालेऽपि जनने तथैव। उत्तरसंयोगोत्पत्त्यनन्तरकालन्तु कर्मनाश एव। तथाच सुष्ठूक्तं 'कर्म कर्मसाध्यं न विद्यत' इति ॥ ११ ॥

गुणकर्मभ्यां द्रव्यस्य वैधर्म्यमाह—

न द्रव्यं कार्य्यं कारणञ्च बधति(२) ॥ १२ ॥

द्रव्यं न स्वकार्य्यं हन्ति न वा स्वकारणं हन्ति, (३)कार्य्यकारणभावापन्नयोर्द्रव्ययोर्वध्यघातकभावो नास्तीत्यर्थः। आश्रयनाशारम्भकसंयोगनाशाभ्यामेव द्रव्यनाशादिति भावः। बधतीति सौत्रो निर्देशः ॥ १२ ॥

गुणस्य कार्य्यकारणबध्यत्वमाह—

उभयथा गुणाः ॥ १३ ॥

कार्य्यबध्याः कारणबध्याश्चेत्यर्थः। आद्यशब्दादीनां कार्य्यबध्यत्वं चरमस्य तु कारणबध्यत्वम्, उपान्त्येन शब्देन अन्त्यस्य नाशात् ॥ १३ ॥

गुणानां कार्य्यकारणोभयविरोधित्वमुक्त्वा कर्मणः कार्य्यविरोधित्वमाह—

---

(१) कर्मलक्षणक्षतेरिति। संयोगविभागयोरनपेक्षं कारणं कर्मेति कर्मलक्षणेऽव्याप्तिः स्यादिति भावः।

(२) बधतीति सौत्रोऽयं धातुर्गणपाठेऽदर्शनात्।

(३) ननु कर्मवैधर्म्यं द्रव्येऽनुपपन्नं 'कार्यविरोधि कर्म' इति अग्रिमसूत्रेण कर्मणः कार्यनाश्यतायाः, अत्र च द्रव्ये कार्यनाशकत्वाभावस्योक्तत्वादत आह कार्यकारणभावापन्नयोरिति। तथाच कार्यद्रव्ये बध्यत्वं कारणे घातकत्वं कारणद्रव्ये बध्यत्वं कार्ये घातकत्वं च नास्तीति सौत्रक्रमानुरोध्यर्थक्रमेणार्थकरणे द्रव्ये कार्यनाश्यत्वाभावस्यापि लाभान्न वैधर्म्यानुपपत्तिः अस्मिन्पक्षे सूत्रस्थं द्रव्यपदं द्वितीयान्तं कर्म कार्यकारणपदे प्रथमान्ते कर्तृभूते इति भावः।

## कार्य्यविरोधि कर्म ॥ १४ ॥

कार्य्यं विरोधि यस्येति बहुव्रीहिः, स्वजन्योत्तरसंयोगनाश्यत्वात् कर्मणः । द्रव्याणां कार्य्यकारणाविरोधित्वं नियतमेव । गुणकर्मणोस्त्वनियमः, आश्रयनाशासमवायिकारणनाशनिमित्तनाशविरोधिगुणानां नाशकत्वस्य वक्ष्यमाणत्वात् ॥ १४ ॥

शिष्याकाङ्क्षानुरोधेन त्रयाणां साधर्म्यमभिधायेदानीं त्रयाणां लक्षणमारभमाण आह—

## क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम् ॥ १५ ॥

क्रियाश्च गुणाश्च विद्यन्तेऽस्मिन्निति क्रियागुणवत् । अत्र लक्षणशब्दश्चिह्नवचनः,(१)समानासमानजातीयव्यवच्छेदकव्यतिरेकिलिङ्गविशेषवचनश्च लक्ष्यतेऽनेनेतिव्युत्पत्तिबलात् । क्रियया कर्मणा द्रव्यमिदमिति लक्ष्यते गुणवत्त्वेन च समानासमानजातीयेभ्यो व्यावृत्तं द्रव्यं लक्ष्यते(२), तत्र समानजातीया भावत्वेन गुणादयः पञ्च, असमानजातीयस्त्वभावः, तेन द्रव्यं गुणादिभ्यो भिन्नं गुणवत्त्वात् यन्न गुणादिभ्यो भिद्यते तन्न गुणवत् यथा गुणादीति । (३)गुणवत्त्वं यद्यप्याद्यक्षणेऽवयविनि नास्ति तथापि गुणात्यन्ताभावविरोधिमत्त्वं विवक्षितम् गुणप्रागभावप्रध्वंसयोरपि गुणात्यन्ताभावविरोधित्वात् । एवं समवायिकारणत्वमपि षट्पदार्थभेदकमेव द्रव्यपदार्थस्य लक्षणम् । न च साध्याप्रसिद्धिर्गुणादिभेदस्य घटादावेव प्रत्यक्षसिद्धत्वात् । न चात्र सिद्धसाधनं घटत्वावच्छेदेनेतरभेदस्य सिद्धत्वेऽपि द्रव्यत्वावच्छेदेन साध्यत्वात्, पक्षतावच्छेदकभेदे न सिद्धसाधनं (४)यथा

---

(१) चिह्नपदस्य लिङ्गार्थत्वेन व्यतिरेकिलिङ्गमेवात्रेतरभेदानुमापकमित्याशयेनाह समानेति । तथा च व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमित्युक्त्या इतरभेदे साध्ये तस्यान्यत्राप्रसिध्याऽन्वयपरामर्शासम्भवाद्व्यतिरेकिलिङ्गपरामर्शमात्रजन्यानुमितिकरणतया केवलव्यतिरेकिलिङ्गत्वमिति भावः ।

(२) लक्ष्यतेऽनुमीयते तत्प्रकारमेवाह तेनेत्यादिना ।

(३) गुणवत्त्वमिति । गुणवद्वृत्तिपदार्थविभाजकधर्मवत्त्वमित्यर्थः अन्यथा नव्यमते गुणप्रागभावध्वंसयोस्तदत्यन्ताभावविरोधित्वे मानाभावादाद्यक्षणेऽवयविन्यव्याप्तितादवस्थ्यापत्तेः ।

(४) यथेति । तथा च यथा मनस्त्वावच्छेदेन नित्यत्वस्य सिद्धावपि वाङ्मनसोभयत्वावच्छेदेन नित्यत्वस्यासिद्धत्वान्न सिद्धसाधनं तथा घटत्वावच्छेदेन गुणादिभेदासिद्धावपि द्रव्यत्वावच्छेदेन गुणादिभेदस्यात्र साध्यत्वान्न सिद्धसाधनमिति भावः ।

नित्ये वाङ्मनसी इत्यत्र इति केचित्तन्न(१) पक्षतावच्छेदकावच्छिन्ने क्वचिदपि साध्यसिद्धौ पक्षताक्षतेस्तथाप्यावश्यकत्वात् । इतिशब्दश्च इत्यादिपरस्तेन सङ्ख्यावत्त्वपरिमाणवत्त्वपृथक्त्ववत्त्वसंयोगवत्त्वविभागवत्त्वान्यपि द्रव्यलक्षणत्वेन सङ्गृह्यन्ते ॥ १५ ॥

द्रव्यानन्तरं गुणानामुद्देशात् तल्लक्षणमाह—

**द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् ॥ १६ ॥**

द्रव्यमाश्रयितुं शीलमस्येति द्रव्याश्रयी । एतच्च द्रव्येऽपि(२) गतमत आह अगुणवानिति । तथापि कर्मण्यतिव्याप्तिरित्यत आह संयोगविभागेष्वकारणम् । तथापि संयोगविभागधर्माधर्मेश्वरज्ञानादीनामसङ्ग्रहः(३) स्यादत उक्तमनपेक्ष इति । अत्रानपेक्ष इत्यनन्तरं गुण इति पूरणीयम्, (४)संयोगविभागेष्वनपेक्षः सन् कारणं यो न भवति स गुण इत्यर्थः । संयोगविभागादीनां संयोगविभागौ प्रति

---

(१) मतान्तरण दूषयति तन्नेति । पक्षतावच्छेदकावच्छिन्नेति । एतन्मतेऽभावसाध्यकस्थले साध्यज्ञानाभाव एव पक्षतेति भावः । भावाभावसाधारणैकपक्षतावादिनां सिद्धान्तिनां मते तु अवच्छेदावच्छेदेनानुमितौ सामानाधिकरण्येन सिद्धिरविरोधिनीयं चावच्छेदावच्छेदेनैवानुमितिस्तथा च कथं सिद्धसाधनम् कथं वा तत्परिहाराय धर्मितावच्छेदकभेदप्रदर्शनायास इत्यपरार्थं तादृशग्रन्थस्याह पक्षतेति । धर्मितावच्छेदकाभेदेपीति भावः । क्वचिदपि साध्यसिद्धौ 'सामानाधिकरण्येन साध्यसिद्धावपि' 'पक्षताक्षतेः' 'पक्षताया अनपायस्य' 'तथापि' 'तथैव सिद्धिसामान्याभावविरहकालवदेव' 'आवश्यकत्वात्' 'अवश्याभ्युपगम्यमानत्वात्' । मतान्तरे व्यतिरेक्यनुमाने पक्षताऽसम्भवाद्व्यतिरेकिलिङ्गविशेषवचनश्चेत्यत्र व्यतिरेकिपदं केवलव्यतिरेक्यन्वयव्यतिरेकिसाधारणमन्यपरामर्शस्यापि सम्भवादिति भावः ।

(२) अपिना जात्यादिपरिग्रहः ।

(३) असङ्ग्रह इति । संयोगविभागयोः संयोगविशेषविभागविशेषजनकत्वस्याग्रे वक्ष्यमाणत्वात् धर्माधर्मेश्वरज्ञानप्रयत्नादीनां च जन्यमात्रं प्रति कारणत्वाच्च तत्र गुणलक्षणाव्याप्तिः स्यादिति भावः ।

(४) संयोगविभागेष्विति । संयोगमात्रस्य प्रवेशे कारणाकारणसंयोगे संयोगस्यानपेक्षकारणत्वात्, विभागमात्रप्रवेशे च कारणाकारणविभागे विभागस्यानपेक्षहेतुत्वादव्याप्तिस्स्यादत उभयप्रवेशः । तथा च संयोगस्य विभागं प्रति विभागस्य संयोगं प्रति चानपेक्षहेतुत्वाभावान्नाव्याप्तिरित्यर्थः । न चैवमनपेक्षपदं व्यर्थम् संयोगस्य विभागे विभागस्य च संयोगे कारणत्वसामान्यविरहादेवाव्याप्त्यसम्भवादिति वाच्यम् धर्माधर्मादीनां संयोगाद्युत्पत्तौ नियमेन संयोगाद्यपेक्षणात्तत्राव्याप्तिवारणायानपेक्षपदसार्थक्यसम्भवात् । तथा च संयोगविभागयोरनपेक्षं कारणं यत्तदन्यत्वे सति गुणवद्भिन्नत्वे सति द्रव्याश्रयित्वं गुणसामान्यलक्षणं पर्यवसितमित्यर्थः ।

सापेक्षत्वात् । (१)नित्यवृत्तिनित्यवृत्तिसत्ताव्याप्यजातिमत्त्वं गुणत्वम् । (२)संयोगविभागौ मिलितौ प्रति समवायिकारणत्वासमवायिकारणत्वरहिते सामान्यवति यत् कारणत्वं तद्गुणत्वाभिव्यञ्जकम् । संयोगविभागयोः प्रत्येकमेव संयोगविभागकारणकत्वं न मिलितयोः (३)धर्माधर्मेश्वरज्ञानादीनां द्वयोर्निमित्तकारणत्वमात्रं न समवायिकारणत्वं नाप्यसमवायिकारणत्वमिति तेषां सङ्ग्रहः । (४)यद्वा संयोगविभागसमवायित्वासमवायिकारणत्वशून्यत्वं सामान्यसमानाधिकरणं गुणत्वव्यञ्जकम् । (५)सामान्यवत्त्वे सति कर्मान्यत्वे च सत्यगुणवत्त्वमेव वा गुणलक्षणम् ॥ १६ ॥

गुणानन्तरमुद्दिष्टस्य कर्मणो लक्षणमाह—

**(६)एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ॥ १७ ॥**

एकमेव द्रव्यम् आश्रयो यस्य तदेकद्रव्यम्, न विद्यते गुणोऽस्मि-

---

(१) सूत्रस्येतिपदसूचितं लक्षणान्तरमाह नित्यवृत्ति इति । नित्यपरमाणुवृत्तिनित्यपरिमाणवृत्तिसत्ताव्याप्यजातिमत्त्वस्य गुणे सत्त्वाल्लक्षणसमन्वयः । परमाणुनिष्ठद्रव्यत्वमादाय द्रव्येऽतिव्याप्तिवारणाय प्रथमं नित्यवृत्तिपदम् । द्वितीयनित्यपदानुपादाने द्व्यणुकवृत्तिद्रव्यत्वस्य द्रव्ये सत्त्वादतिव्याप्तिः स्यादतस्तदुपादानम् । सत्तामादाय द्रव्यकर्मणोरतिप्रसक्तिनिरासार्थं सत्ताव्याप्येति । अन्यतरत्वमादाय तद्दोषतादवस्थ्याज्जातिपदम् ।

(२) संयोगविभागाविति । द्रव्ये गुणत्वापत्तिवारणाय समवायिकारणत्वरहितेति । प्रागभाववारणाय सामान्यवतीति । कारणत्वपदानुपादाने प्रमेयत्वादिधर्ममादाय सर्वेषां गुणत्वं स्यादतस्तदुपादानम् ।

(३) समवाय्यसमवायिपदप्रवेशप्रयोजनमाह धर्मेति ।

(४) पारिमाण्डल्ये कारणत्वानङ्गीकारेण तदसङ्ग्रहः स्यादतः कल्पान्तरमाह यद्वेति । तथा च जातिसामानाधिकरण्यवैशिष्ट्ये सति संयोगविभागोभयसमवायित्वाभावतदुभयासमवायिकारणत्वाभावोभयवत्त्वं गुणत्वव्यञ्जकमित्यर्थः । जातिशून्ये सत्यन्ताभावात्र तदुभयवत्त्वमित्यदोषः ।

(५) लघुलक्षणान्तरमाह सामान्यवत्त्वे सतीति ।

(६) कारणाकारणसंयोगविभागयोरतिव्याप्तिनिरासाय एकद्रव्यमिति । अनेकद्रव्याभिन्नत्वमित्यर्थः संयोगविभागयोरनेकद्रव्यत्वान्नातिव्याप्तिरिति भावः । परमाणुरवृत्तित्वेनानेकद्रव्यभिन्नत्वान्नातिव्याप्तिवारणायागुणमिति । रूपादावेकैकगुणेऽतिव्याप्तिनिरासार्थमन्त्यदलम् तथा च मिलितौ संयोगविभागौ प्रति अनपेक्षकारणं यत् तत्कर्मेति निष्कृष्टलक्षणमित्यर्थः संयोगो विभागो वा न तदुभयम्प्रत्यनपेक्षं कारणमिति न तत्रातिप्रसङ्गः । केचित्तु संयोगस्यानपेक्षं कारणमिति, विभागस्यानपेक्षकारणमिति, प्रत्येकं दलत्रययुक्तं लक्षणद्वयम् उभयोश्चरमदलानुपादाने रूपाद्येकैकगुणेऽतिव्याप्तिरिति प्राहुः ।

न्नित्यगुणम्, संयोगविभागेष्वनपेक्षकारणमिति (१)स्वोत्पत्त्यनन्तरोत्पत्तिकभावभूतानपेक्षमित्यर्थः। तेन समवायिकारणापेक्षायां पूर्वसंयोगाभावापेक्षायाञ्च नासिद्धत्वम्। (२)स्वोत्पत्त्यनन्तरोत्पत्तिकानपेक्षत्वं वा विवक्षितम् पूर्वसंयोगध्वंसस्यापि स्वोत्पत्त्यनन्तरानुत्पत्तिकत्वात्, अभावत्वेन तस्याद्यक्षणसम्बन्धाभावात्। (३)नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं कर्मत्वम्, (४)चलतीतिप्रत्ययासाधारणकारणतावच्छेदकजातिमत्त्वं वा, (५)गुणान्यनिर्गुणमात्रवृत्तिजातिमत्त्वं वा, (६)स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिविभागकारणतावच्छेदकजातिमत्त्वं वा। (७)स चायं चलतीतिप्रत्ययसाक्षिकः पदार्थो नाविरलदेशोत्पादनादिनोपपाद्यः, क्षणभङ्गस्याग्रे निराकरिष्यमाणत्वात्। लक्षणस्य इतरभेदसाधकताप्रकारः पूर्वोक्त एव ॥ १७ ॥

इदानीं कारणमुखेन त्रयाणामेव साधर्म्यप्रकरणमुपक्रमते—

---

(१) अनपेक्षत्वं विवृणोति स्वोत्पत्तीति। अत्र नित्यज्ञानेऽतिव्याप्तिवारणाय सविषयकान्यत्वे सतीति विशेषणं देयम्। तेन द्वितीयोत्पत्तिपदनिवेशेन, भावभूतपदप्रवेशप्रयोजनमाह पूर्वसंयोगाभावेति।

(२) भावभूतपदाप्रवेशनिबन्धनप्रयुक्तलाघवेन लक्षणान्तरमाह स्वेति। अभावत्वेनेति। अत्रेदमनुमानम्—ध्वंस आद्यक्षणसम्बन्धाभाववानभावत्वात्प्रागभाववत्। न च तथासति कथं ध्वंस उत्पन्न इति व्यपदेश इति वाच्यम् प्रतियोगिसम्बन्धप्रयुक्तस्य तद्व्यपदेशस्य गौणत्वात्। अत्र वाकारेणानास्था सूचिता घटादेराद्यक्षणसम्बन्धवत्तद्ध्वंसेप्याद्यक्षणसम्बन्धस्य प्रत्यक्षासिद्धतयाऽभावत्वहेतोर्व्यभिचारित्वात्। प्रतियोगिसम्बन्धोत्पत्तिस्वाकारे सम्बन्धस्यातिरिक्तपदार्थत्वापत्तेरिति विभावनीयम्।

(३) लक्षणान्तरमाह नित्येति। द्रव्यस्य सत्तासाक्षाद्व्याप्यजातिमत्त्वात्तत्रातिव्याप्तिवारणाय नित्यावृत्तीति। घटत्वादिकमादाय घटेऽतिव्याप्तिनिरासाय साक्षात्पदम्।

(४) कर्मत्वजातिः प्रत्यक्षसिद्धेत्यभिप्रायेणाह चलतीति।

(५) अगुणमिति सूत्रस्थलक्षणं विवृणोति गुणान्येति। गुणेऽतिव्याप्तिवारणाय गुणान्येति। द्रव्ये तद्वारणाय निर्गुणपदम्। तयोश्चातिव्याप्तिवारणाय मात्रपदं तदितरावृत्तीत्यर्थकम्।

(६) संयोगविभागेत्यादिसूत्रस्थलक्षणाभिप्रायेणाह स्वोत्पत्तीति। उत्पत्तिपदानुपादाने विभागप्रागभावेऽतिव्याप्तिः तदव्यवहितोत्तरक्षणविभागे तस्य हेतुत्वादत उत्पत्तिपदम्। प्रागभावस्योत्पत्तिविरहात्तन्निरासः।

(७) क्षणभङ्गवादाभिप्रायेणाशङ्कते सचेति। तथा च क्षणविनाशिनश्चलनाश्रयस्य वस्तुनः सजातीयप्रत्ययेनैव सम्भवात्तत्कारणतावच्छेदकतया कथं कर्मत्वजातिसिद्धिरिति शङ्कार्थः। निराकरोति क्षणभङ्गेति।

## द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम् ॥ १८ ॥

समानमेव सामान्यम् एकमित्यर्थः, अनयोः समाना मातेतिवत्। एकस्मिन्नेव द्रव्ये समवायिकारणे द्रव्यगुणकर्माणि वर्त्तन्ते इत्यर्थः। द्रव्यसमवायिकारणकवृत्तिजातिमत्त्वं त्रयाणां साधर्म्यम् ॥ १८ ॥

गुणासमवायिकारणकत्वं त्रयाणां साधर्म्यमाह—

## तथा गुणः ॥ १९ ॥

गुणासमवायिकारणकवृत्तिजातिमत्त्वं त्रितयसाधर्म्यम्। द्रव्याणां संयोगोऽसमवायिकारणम्, कार्य्यगुणानां रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वादीनां सजातीयकारणगुणासमवायिकारणकत्वम्, बुद्ध्यादीनामात्मगुणानां मनःसंयोगासमवायिकारणकत्वम्। पार्थिवपरमाणुगुणानामग्निसंयोगासमवायिकारणकत्वम्। (१)कर्मणान्तु वन्ह्यादिनोदनाभिघातगुरुत्वद्रवत्वसंस्काराद्दष्टवदात्मसंयोगप्रयत्नवदात्मसंयोगाद्यसमवायिकारणकत्वं यथायथं स्वयमूहनीयम्। क्वचिदेकस्यापि गुणस्य त्रयाणां द्रव्यगुणकर्मणामारम्भकत्वम्। तद्यथा वेगवत्तूलपिण्डसंयोगस्तूलपिण्डान्तरे कर्म करोति द्वितूलकञ्च द्रव्यमारभते तत्परिमाणञ्च। क्वचिदेको गुणो द्रव्यगुणावारभते यथा तूलपिण्डसंयोग एव वेगानपेक्षप्रचयाख्यो द्वितूलकं द्रव्यं तत्परिमाणञ्चारभते ॥ १९ ॥

क्वचिदेकस्य कर्मणोऽनेककार्य्यकारित्वमाह—

## संयोगविभागवेगानां कर्म समानम् ॥ २० ॥

---

(१) कर्मणामिति। अनाधिष्ठितेषु बाह्येषु चतुर्षु महाभूतेषु अप्रत्ययं कर्म नोदनादिभ्यो भवति नोदनं च संयोगविशेषो यथा पङ्कोपरि मन्दं व्यवस्थापिता प्रस्तरगुटिका क्रमशः पङ्केन सहाधो गच्छति स च गुरुत्वाधीनः प्रस्तरसंयोगो नोदनं तेनाधोगमनरूपा क्रिया भवतीत्यर्थः तत्रासमवायिकारणं नोदनम्। एवं वेगापेक्षाद्विभागकृतः कर्मणो हेतुभूतात्संयोगविशेषादभिघाताख्यात्पाषाणादिषु निष्ठुरे वस्तुन्यभिपतितेषु कर्म यज्जायते तत्राभिघातोऽसमवायिकारणम्। गुरुत्वप्रतिबन्धकहस्तसंयोगाभावे मुषलाधोगमनकर्मणि गुरुत्वम्, अपां स्थलान्निम्नाभिसर्पणरूपस्यन्दनकर्मणि च द्रवत्वम्, इष्वादिकर्मणि च संस्कारोऽसमवायीत्यर्थः। प्राणाख्ये वायौ यत्कर्म तत्रेच्छाद्वेषपूर्वकप्रयत्नापेक्ष-आत्मसंयोगो, पूर्वशरीरोपभोगसहचारिधर्माधर्मयोरुपभोगादिना क्षयेऽन्याभ्यां धर्माधर्माभ्यामात्ममनःसंयोगसहायाभ्यां मृतरशरीराद्विभागकारणं कर्म जायते तत्रादृष्टवदात्मसंयोगश्चासमवायीति बोध्यम् विस्तरस्तु भाष्ये द्रष्टव्यः।

कारणमित्यनुषङ्गः। यत्र(१) द्रव्ये कर्मोत्पन्नं तेन समं यावद्द्रव्यं संयुक्तमासीत् तावत्सङ्ख्याकान् विभागान् जनयित्वा तावतः संयोगानपि पुनरन्यत्र जनयति, वेगं पुनरेकमेव स्वाश्रये करोति वेगपदं स्थितिस्थापकमप्युपलक्षयति ॥ २० ॥

ननु क्रियावता द्रव्येणारम्भकसंयोगे जनिते तेन च द्रव्यमारब्धं यत्तदपि कर्मजन्यमेव कर्मणस्तत्पूर्ववर्तित्वादत आह—

न द्रव्याणां कर्म ॥ २१ ॥

कर्म द्रव्याणां न कारणमित्यर्थः ॥ २१ ॥

कुत एवमत आह—

व्यतिरेकात् ॥ २२ ॥

व्यतिरेकादिति। निवृत्तेरित्यर्थः। उत्तरसंयोगेन कर्मणि निवृत्ते द्रव्यमुत्पद्यते इति न कर्मणो द्रव्यकारणत्वं विनश्यदवस्थश्च कर्म न द्रव्यकारणम्। (२)किञ्च कर्म द्रव्यस्यासमवायिकारणं वा भवेन्निमित्तकारणं वा ? न तावदाद्यः द्रव्यस्यासमवायिकारणनाशनाश्यत्वेन अवयवकर्मनाशादेव द्रव्यनाशापत्तेः। न द्वितीयः महापटनाशेऽवस्थितसंयोगेभ्य एव खण्डपटोत्पत्तौ निष्कर्मणामेवावयवानां द्रव्यारम्भदर्शनाद्व्यभिचारात् ॥ २२ ॥

(३)बहूनामेकस्यारम्भकत्वमुक्त्वा इदानीमेकस्मिन् कार्ये बहूनामारम्भकत्वमाह—

द्रव्याणां द्रव्यं कार्यं सामान्यम् ॥ २३ ॥

द्रव्ये च द्रव्याणि चेति द्रव्याणि तेषां द्रव्याणाम्। तत्र द्वाभ्यां तन्तुभ्यां द्वितन्तुकः पटो बहुभिरपि तन्तुभिरेकः पट आरभ्यते। न-

(१) यत्रेत्यादिना द्रव्यादित्रये कर्मणोऽनेककार्यकारित्वकथनेन जातिघटितधर्मावच्छिन्ननानाकार्यतानिरूपितकारणत्वाश्रयवृत्तिजातिमत्त्वम् त्रयाणाम्, एकं वेगमित्यादिना च वेगान्तरस्य गुणजन्यत्वसूचनेन च गुणकर्मणोः संयोगाद्यसमवायिकारणवृत्तिपदार्थविभाजकधर्मवत्त्वं साधर्म्यं सूचितम्।

(२) विनिगमनाविरहात्संयोगवत्कर्मणोपि कारणत्वं स्यादत आह किञ्चेति।

(३) सजातीयैककार्यानेककारणवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्वयोरेव साधर्म्यं न कर्मणः इति अग्रिमसूत्रद्वयतात्पर्यं प्रकटयन्नवतारयति बहूनामिति।

न्वेकतन्तुकोऽपि पटो दृश्यते यत्रैकेनेव तन्तुना तानप्रतितन्त्रौ(१) भवत इति चेन्न तत्रैकस्य संयोगाभावेनासमवायिकारणाभावात् पटानुत्पत्तेः। न चांशुकतन्तुसंयोगोऽसमवायिकारणम् अवयवावयविनोरयुतसिद्धत्वेन(२) संयोगाभावात् आरभ्यारम्भकभावानभ्युपगमात्, मूर्त्तानां समानदेशताविरोधात्। दृश्यते तावदेवमिति चेन्न तत्र वेमाद्यभिघातेन महावयविनस्तन्तोर्नाशात् खण्डावयविनानातन्तूत्पत्तौ तेषामन्योन्यसंयोगात् पटोत्पत्तेः, वस्तुगत्या तत्र नानाभूतेषु तन्तुषु एकत्वाभिमानात् ॥ २३ ॥

ननु यथा द्रव्याणां द्रव्यं कार्य्यं गुणानाञ्च गुणस्तथा किं कर्मणामपि कर्म कार्य्यमित्यत आह–

गुणवैधर्म्यान्न कर्मणां कर्म ॥ २४ ॥

कार्य्यमिति शेषः। द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यमुक्तम्। तत्र कर्म कर्मसाध्यं न विद्यते इति सूत्रेण कर्मणां कर्मजनकत्वं प्रतिषिद्धमेव तदिहानूद्यते(३) इति भावः ॥ २४ ॥

इदानीं व्यासज्यवृत्तीनां गुणानाम् अनेकद्रव्यारभ्यत्वं दर्शयन्नाह–

द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च॥२५॥

अनेकद्रव्यारभ्या इति शेषः। द्वित्वादिसमभिव्याहृतं पृथक्त्वपदमपि द्विपृथक्त्वादिपरम्। एवञ्च द्वित्वादिकाः परार्धपर्य्यन्ताः सङ्ख्या द्विपृथक्त्वादीनि च संयोगा विभागाश्च द्वाभ्यां बहुभिश्चैव द्रव्यैरारभ्यन्ते इत्यने(४)कवृत्तित्वममीषाम्। तच्च समवाय्यन्योन्याभावसामानाधिकरण्यम् ॥ २५ ॥

नन्ववयविद्रव्याणां गुणानाञ्चोक्तानां यथा व्यासज्यवृत्तित्वं त-

(१) तानप्रतानौ इति पाठान्तरम्।

(२) अयुतसिद्धत्वेनेति। अयुतसिद्धयोरप्राप्तप्राप्तिरूपसंयोगस्यासम्भवादित्यर्थः। आरभ्येति। पटैकतन्त्वोरारभ्यारम्भकभावानङ्गीकारादिति भावः। तयोरयुतसिद्धत्वे हेतुमाह मूर्त्तानामिति। अयुतसिद्धत्वविरहिणामित्यर्थः तथा च तदंशुकतन्त्वोः समानदेशत्वादयुतसिद्धत्वमिति हृदयम्।

(३) उक्तार्थस्य सप्रयोजनमनुवचनमनुवादः। तथा च 'न कर्म कर्मसाध्यं' इत्यनेन कर्मणि यत्किञ्चित्कर्मसाध्यत्वे निषिद्धेपि बहुकर्मसाध्यत्वस्यानिषेधात्तत्प्रतिपत्तिरेवानुवादप्रयोजनमित्यर्थः।

(४) अनेकेति। अनेकद्रव्यारभ्यैककार्यवृत्तिपदार्थविभाजकधर्मवत्त्वं द्रव्यगुणयोः साधर्म्यमित्यर्थः।

था कर्मणामपि किं न स्यादत आह—

**(१)असमवायात् सामान्यकार्य्यं कर्म न विद्यते ॥२६॥**

असमवायादित्यत्र द्रव्ययोर्द्रव्येष्विति योज्यम्, तथा च न द्रव्ययोरेकं कर्म समवैति न वा द्रव्येष्वेकं कर्म समवैति, तेन सामान्यस्य समुदायस्य कार्य्यं कर्म न विद्यते । अत्रापि विदिर्ज्ञानार्थो न सत्तावचनः । यदि कर्म व्यासज्यवृत्ति स्यात् एकस्मिन् द्रव्ये चलति द्वयोर्द्रव्ययोर्बहुषु च द्रव्येषु चलतीति प्रत्ययः स्यात्, न चैतत् तस्मान्न कर्म व्यासज्यवृत्तीत्यर्थः । ननु शरीरतदवयवानां कर्म शरीरतदवयवैर्बहुभिरारभ्यत एव कथमन्यथा शरीरे चलति करचरणादावपि चलतीति–प्रत्ययः एवमन्यत्राप्यवयविनीति चेन्न अवयविकर्मसामग्र्या अवयवकर्मसामग्रीव्याप्तत्वात् तथोपलब्धेः, न तु वैपरीत्यं, न ह्यवयवे चलति सर्वत्रावयविनि चलतीति प्रत्ययः, अन्यथा कारणाकारणसंयोगात् कार्य्याकार्य्यसंयोगोऽपि न स्यात् कारणकर्मणैव कार्य्यस्यापि संयोगोपपत्तेः ॥ २६ ॥

पुनर्बहूनामेकं कार्य्यमाह—

**संयोगानां द्रव्यम् ॥ २७ ॥**

बहूनां संयोगानां द्रव्यमेकं कार्य्यमित्यर्थः । (२)निःस्पर्शानां द्रव्याणाम् अन्त्यावयविनां विजातीयद्रव्याणाञ्च ये संयोगास्तान् विहायेति द्रष्टव्यम् ॥ २७ ॥

इदानीं बहूनां गुणानामेकं गुणकार्य्यमाह—

**रूपाणां रूपम् ॥ २८ ॥**

रूपमेकं कार्य्यमित्यन्वयः । रूपपदमुभयमपि लाक्षणिकम्, अजहत्स्वार्था चेयं(३)लक्षणा । कारणैकार्थसमवायप्रत्यासत्त्या जन्यजनकभावाश्रयत्वञ्च शक्यलक्ष्यसाधारणो धर्मस्तेन रूपरसगन्धस्पर्शस्नेह-

---

(१) कर्मणस्तद्वैधर्म्यमाह असमवायादिति । सुगमोऽर्थः ।

(२) सूत्रे द्रव्यमित्युपलक्षणम् । नानागुणजन्यैककार्यवृत्तिजातिमत्त्वं द्रव्यादित्रिकसाधर्म्यमिति द्रष्टव्यम् । संयोगानामिति बहुवचनमविवक्षितम् निःस्पर्शादिद्रव्यसंयोगानां हेतुत्वाभावादित्याशयेनाह निःस्पर्शानामिति ।

(३) लक्षणेति । तथा चाजहत्स्वार्थलक्षणया रूपपदेन कारणैकार्थप्रत्यासत्त्या घटादिनिष्ठस्नेहादिगुणपरिग्रहः । च कारणगुणा अनेके कार्येषु एकमेव समानजातीयकं गुणमारभन्ते इत्यर्थः ।

सांसिद्धिकद्रवत्वैकत्वैकपृथक्त्वानि संगृह्यन्ते । एते हि कारणे वर्त्त-मानाः कार्य्येषु समानजातीयमेकमेव गुणमारभन्ते । द्विधा ह्यसमवा-यिकारणानाङ्गतिः । केचित् कारणैकार्थप्रत्यासत्त्या जनयन्ति, कारण-मिह समवायिकारणं तच्च जन्यस्य रूपादिलक्षणस्य कार्य्यस्य तेन रूपादिलक्षणकार्य्यस्य यत् समवायिकारणं घटादि तेन सह कपाले वर्तमानं रूपं कारणैकार्थसमवायेन घटरूपमारभते, एवं रसाद्यपि । क्वचित्तु कार्य्यैकार्थप्रत्यासत्त्याऽसमवायिकारणत्वम् यथा कारणमपि शब्दो नभसि कार्य्यमपि शब्दान्तरमारभते, नभस्येव रूपाद्यपि पार्थिवपरमाणावग्निसंयोगेन कार्य्यैकार्थसमवायप्रत्यासत्त्या जन्यते॥२८॥

एकस्य कर्मणोऽनेककार्य्यत्वमाह-

गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥ २९ ॥

उत्क्षेपणमेकं कार्य्यममीषामित्यर्थः । अत्र गुरुत्वस्य हस्तलोष्ठा-दिवर्त्तिनो निमित्तकारणत्वम्, प्रयत्नवदात्मसंयोगस्यासमवायिकारण-त्वं हस्तनिष्ठोत्क्षेपणस्य, लोष्ठनिष्ठोत्क्षेपणस्य तु हस्तनोदनमसम-समवायिकारणम् । अत्राप्युत्क्षेपणपदमवक्षेपणादावपि लाक्ष-णिकम् ॥ २९ ॥

ननु मूर्त्तगुणानां कार्य्याणां कारणगुणपूर्वकत्वं स्वाश्रयगुणपूर्व-कत्वञ्चोक्तम्, द्रव्यकर्मणोश्च न कर्म कारणमित्युक्तम् (१)तथाच कर्म-णः किमपि न कार्य्यमित्यायातम्, तथाचातीन्द्रियाणां सूर्य्यादिग-तीनाम् अनुमानमपि दुर्लभं लिङ्गाभावात् अतः संयोगविभागवेगा-नां कर्मेति सूत्रोक्तमेव स्मारयन्नाह-

संयोगविभागाश्च कर्मणाम् ॥ ३० ॥

जन्या इति शेषः । व्यक्त्यभिप्रायेण बहुवचनं संस्कारोऽप्युपल-क्षणीयः ॥ ३० ॥

ननु द्रव्यकर्मणी न कर्मकार्य्ये इति पूर्वमुक्तम्, संयोगविभागौ तु संयोगविभागकार्य्यावेव तथाचेदानीं कर्मणः कारणत्वाभिधानं विरुद्धमित्यत आह-

(१) तथा चेति । कर्मणः कार्यत्वाभावेऽभिमतक्रियावत्त्वहेतुकसूर्यगत्यनुमानं न स्यादित्यर्थः ।

कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम्॥ ३१॥

कारणसामान्यपदेन तत्प्रकरणमुपलक्ष्यते तेन कारणसामान्याभिधानप्रकरणे द्रव्यकर्मणी प्रति कर्मणोऽकारणत्वमुक्तं न तु सर्वथाप्यकारणमेव कर्मेति विवक्षितम्। येन 'संयोगविभागाश्च कर्मणामिति' सूत्रं व्याहन्येतेति भावः॥ ३१॥

इति शाङ्करे वैशेषिकसूत्रोपस्कारे प्रथमाध्यायस्य प्रथमाह्निकम्॥



# प्रथमाध्याये द्वितीयाह्निकम् ।

नन्वनेन प्रघट्टकेन द्रव्यादीनां त्रयाणां पदार्थानां कार्य्यैकत्वघटितं कारणैकत्वघटितञ्च साधर्म्यमुक्तम्, (१)तच्चानुपपन्नं कार्य्यकारणभावस्यैवासिद्धेरित्यत आह–

कारणाभावात्कार्य्याभावः ॥ १ ॥

दृश्यते हि मृच्चक्रसलिलकुलालसूत्रादौ समवहितेऽपि दण्डाभावाद् घटाभावः, भूसलिलादौ समवहितेऽपि बीजाभावादङ्कुराभावः, स च दण्डघटयोर्बीजाङ्कुरयोर्वा कार्य्यकारणभावमन्तरेणानुपपन्नः। अन्यथा वेमाद्यभावेऽपि घटाभावः शिलाशकलाद्यभावेऽप्यङ्कुराभावः स्यात्।(२)किञ्च घटपटादीनां कादाचित्कत्वमनुभूयते तदपि हेतुफलभावमन्तरेणानुपपन्नम्, न हि किञ्चित्कालासत्त्वे सति किञ्चित्कालसत्त्वरूपं कादाचित्कत्वं भावानां कारणापेक्षामन्तरेण सम्भवति तदा हि स्यादेव न स्यादेव वा नतु कदाचित् स्यात्(३) न हि भावो न भवत्येव नाप्यहेतोर्भवति नाप्यकस्मादेव भवति, न वा निरुपाख्यादेव शशविषाणादेर्भवति, (४)किन्तु दण्डवेमादेः सोपाख्यस्यावधेर्घटपटादौ कार्य्ये दर्शनात् अवधिस्तु कारणमेव।(५)एवं कार्य्यकारणभावाभावे प्रवृत्तिनिवृत्ती न स्याताम् तथा च निरीहं जगज्जायेत न हीष्टसाधनताज्ञानमन्तरेण प्रवृत्तिरनिष्टसाधनताज्ञानमन्तरेण निवृत्तिः ॥ १ ॥

(६)ननु सदेवोत्पद्यते नासत् "सदेव सौम्येदमग्र आसीत्" इत्यादिश्रुतिप्रामाण्यात् अन्यथाऽसत्त्वाविशेषे तन्तुभ्य एव पटो न कपा-

---

(१) तच्चेति । तथा चोपोद्घातसङ्गत्या साधर्म्यनिरूपणान्ते कार्यकारणभावं वर्णयतीत्यर्थः ।

(२) कार्यकारणभावे प्रत्यक्षप्रमाणं दर्शयित्वाऽनुमानमाह किञ्चेति । घटादिकार्यं सहेतुकं कादाचित्कत्वाद्यन्नैवं तन्नैवं यथाऽऽत्मादि इति अनुमानप्रकारो बोध्यः ।

(३) स्यादिति । तथा च कारणानपेक्षत्वेन घटादिकार्यसत्तातदभावयोः कालविशेषनैयत्यस्यानुचितत्वात्कादाचित्कत्वानुपपत्तिरिति भावः ।

(४) किन्त्विति । तथा च नियतावधिककार्यदर्शनात् भवनहेत्वादिनिषेधोऽनुपपन्न इति भावः इदमेवोदयनाचार्यैः स्फुटीकृतम्—

हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ।
स्वभाववर्णना नैवमवधेर्नियतत्त्वतः ॥ इति कारिकया ।

(५) बाधकान्तरमाह एवमिति । (६) सांख्यमतेनाशङ्कते नन्विति ।

लेभ्य इति नियमो न स्यादिति चेत् परिणामवादिभिरपि स्वीकृतकारणकैरयं नियमोऽभ्युपगन्तव्य एव, अन्यथा घटाभिव्यक्तिः कपालेष्वेव न तन्तुष्विति कथं स्यात्।(१)किञ्च यद्यभिव्यक्तिरपि पूर्वमासीदेव तदा तस्या अपि नित्यत्वे आविर्भावतिरोभावावेवोत्पादविनाशाविति रिक्तं वचः। अथाविर्भावतिरोभावौ कारणापेक्षौ, तदा घटपटादीनामपि कारणापेक्षैवासतामप्युत्पत्तिरित्यायातम्। यत्तु कारणं प्रति नियमानुपपत्तिरित्युक्तम्, तत्र स्वभावनियमनैवोत्तरम्(२)। स च स्वभावनियमोऽन्वयव्यतिरेकावगम्यो भवति, भवति हि दण्डमन्तरेण न घटो दण्डे सति घट इति सर्वसाक्षिकोऽनुभवः। (३)एवञ्चानन्यथासिद्धनियतपूर्ववर्त्तिजातीयत्वं (४)सहकारिवैकल्यप्रयुक्तकार्य्याभाववत्त्वं वा कारणत्वम्। यद्यपि "यवैर्यजेत व्रीहिभिर्वा" इत्यादौ नियतपूर्ववर्त्तित्वं नास्ति न हि यवकरणकयागनिष्पाद्ये फले व्रीहिकरणकयागस्य पूर्ववर्त्तित्वम् तथापि विकल्पितं विहितकारणं कारणमेव, फलैकजात्येऽपि द्वयोः कारणत्वोपपत्तेः। तथा च सहकारिवैकल्यप्रयुक्तकार्य्याभाववत्त्वं लोकवेदसाधारणी कारणता, नियतपूर्ववर्त्तित्वन्तु अन्वयव्यतिरेकगम्या कारणता लौकिकी, न हि "स्वर्गकामो यजेत" इत्यादौ व्यतिरेकभागोऽपि विषयः प्रवृत्तेरन्वयमात्रज्ञानादेवोपपत्तेः,अत एव(५)"विकल्पे उभयमशास्त्रार्थः"इत्यपि घटते,

---

(१) ननु यत्र कार्यं तादात्म्येन सत् तत्रैव कार्याभिव्यक्तिरिति नियमेन कपालेष्वेव घटोत्पत्तिरित्याशङ्क्याह किञ्चेति।

(२) उत्तरमिति। साङ्ख्यैर्यथा शब्दस्याकाशगुणत्वं न मनोगुणत्वमित्युच्यते तत्र को नियम इत्युनुयुक्ते स्वभाव एव नियमोऽभ्युपगन्तव्यः, तथात्रापि घटकारणत्वं कपालस्य न तन्त्वादीनामिति स्वभाव एव नियम इत्यर्थः।

(३) अन्वयव्यतिरेकघटितकारणत्वस्य पर्यवसितार्थमाह एवञ्चेति। दण्डत्वादावतिव्याप्तिवारणाय विशेषणदलम्। तद्घटेऽन्यत्रेत्यादिग्रन्थासिद्धिमत्यपि घटत्वावच्छिन्नेऽनन्यथासिद्धे तद्दण्डत्वादातिव्याप्तिवारणाय नियतपदम्। अरण्यस्थदण्डेऽव्याप्तिवारणाय जातीयत्वान्तम्।

(४) वैदिकस्थले विकल्पस्थलीयकारणतायां नियतपूर्ववृत्तित्वासम्भवात् तत्साधारणकारणतामाह सहकारीति। यवैर्व्रीहिभिर्वा यजेतेत्यादिवैकल्पिककारणतास्थलेऽसत्यपि व्रीहिकरणकयागे यवकरणकयागात्फलोत्पादेन कारणाभावकार्याभावयोरनुभवसाक्षिकप्रयोज्यप्रयोजकप्रतीत्यभावात् सहकारिपदम्। उदासीनेऽनन्यथासिद्धत्वविरहान्न तस्य हेतुत्वापत्तिरिति बोध्यम्।

(५) अत एव प्रवृत्तेरन्वयमात्रज्ञानादुपपत्तेरित्यर्थः। अन्यथा व्यतिरेकापेक्षायां विकल्पस्थले द्वयोः शास्त्रार्थतापातादिति भावः।

तज्जातीयस्य फलस्य एकेनैवोपपत्तेरपरानुष्ठानवैयर्थ्यात् । अत एव "श्रौतात् साक्षात् कर्मणः फलावश्यम्भावनियमः" इत्यप्युचितम् "आगममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषाय" इत्याचार्य्याभिधानमृज्वर्थतात्पर्य्यकमेव । (१)तृणारणिमणिस्थले तु कार्य्यवैजात्यमावश्यकं तत्रान्वयव्यतिरेकगम्यत्वात् कारणताया व्यतिरेकाद्यतिरेकस्यावश्यकत्वात् । विकल्पस्थले तु फलवैजात्यकल्पने राजसूयवाजपेयादावपि वैकल्पिकी कारणता स्यादिति(२) कार्य्यकारणभावनियममेवोपपादयन्नाह–

न तु कार्य्याभावात् कारणाभावः ॥ २ ॥

यदि कार्य्यकारणभावनियमो न भवति तदा कार्य्याभावादपि कारणाभावः स्यात् । कार्य्याभावः कारणाभावं प्रत्यतन्त्रं कारणाभावस्तु कार्य्याभावं प्रति तन्त्रम्, तेन(३) दुःखाभावार्थं जन्माभावे, जन्माभावार्थं प्रवृत्त्यभावे, तदर्थञ्च दोषाभावे, तदर्थं मिथ्याज्ञाननिवृत्तये, तदर्थञ्चात्मसाक्षात्काराय मुमुक्षूणां प्रवृत्तिः प्रयोजनमौपोद्(४)घातिकस्याप्यस्य द्विसूत्रकप्रकरणस्य ॥ २ ॥

(५)पदार्थत्रयोद्देशलक्षणानन्तरमिदानीमुद्दिष्टस्य सामान्यपदार्थस्य लक्षणमाह–

सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥ ३ ॥

---

(१) ननु तर्हि तृणारणिमणिस्थलेऽपि कार्यवैचित्र्यं नाङ्गीकार्यमत आह तृणादीति ।

(२) इतीति । इति हेतौ । यतः कार्यकारणभावोऽनुभवसिद्धस्तत इत्यर्थः । तथा चोक्तनियमेनैव कारणं प्रति नियमसम्भवे किमर्थं कार्यकारणभावस्वीकार इत्याक्षेपतात्पर्यम् इति केचिदिमं ग्रन्थं वर्णयन्ति । तदसत् स च स्वभावनियम इत्यादिनोपस्कारकारैरन्वयव्यतिरेकघटितकारणताया लौकिकस्थले, वैदिकस्थले चान्वयमात्रघटितकारणताया नियमरूपत्वाङ्गीकारेणोक्ततात्पर्यासङ्गतिप्रसङ्गात् । तथाच इति एवंरूपं कार्यकारणभावनियममन्यव्यावर्तकमाहेति सरलार्थ एव ग्राह्यः । अत एव तदनङ्गीकारे दोषमाह यदीत्यादिना ।

(३) अस्य कार्यकारणभावरूपनियमप्रकरणस्य शिष्यावधानाय साक्षात्प्रयोजनमाह तेनेति ।

(४) औपोद्घातिकस्य उपोद्घातसङ्गतिप्राप्तस्य । चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः । तथा च कार्यकारणभावाज्ञाने मुमुक्षूणामत्र शास्त्रे प्रवृत्तिर्न स्यादिति भावः ।

(५) कार्यकारणभावप्रदर्शनानन्तरं सामान्यविशेषनिरूपणेऽवसरसङ्गतिं सूचयन्नाह पदार्थेति । सूत्रे सामान्यपदं विशेषपदं च लक्ष्यपरम् विभागसहितम् । इति बुद्ध्यपेक्षमिति च लक्षणम् । इति पदस्योभयावाच्छिन्नामित्यर्थः तथाचानुवृत्तिव्यावृत्तिबुद्धिलक्षणं द्विविधसामान्यमित्यर्थः । तदेवाह परमित्यादिना ।

सामान्यं द्विविधं परमपरञ्च। तत्र परं सत्ता अपरं सत्ताव्याप्यं द्रव्यत्वादि। तत्र सामान्यस्य तद्विशेषस्य च लक्षणं बुद्धिरेव। अनुवृत्तबुद्धिः सामान्यस्य व्यावृत्तबुद्धिर्विशेषस्य। इतिना द्वयमवच्छिद्य परामृश्यते तेन बुद्ध्यपेक्षमिति नपुंसकनिर्देशः। वृत्तिकारस्तु विशे-(१)षान्वयमाह (२)परन्तु "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इत्यनेनैकवद्भावो नपुंसकता चेत्याह-बुद्धिरपेक्षा (३)लिङ्गं लक्षणं वा यस्य तद्बुद्ध्यपेक्षम्। तत्र (४)नित्यमनेकव्यक्तिवृत्ति सामान्यम्, (५)नित्यत्वे सति स्वाश्रयान्योन्याभावसामानाधिकरण्यं वा। परमपि सामान्यमपरमपि तथाऽ(६)परन्तु सामान्यं विशेषसंज्ञामपि लभते यथा द्रव्यमिदमित्यनुवृत्तप्रत्यये सत्येव नायं गुणो नेदं कर्मेति विशेषप्रत्ययः तथाच द्रव्यत्वादीनां सामान्यानामेव विशेषत्वम्॥

(७)ननु विधिरूपं सामान्यं नास्त्येव अनुगतमतेरतद्व्यावृत्त्यैवोपपत्तेः भवति हि गौरयमिति प्रतीतेरगोव्यावृत्तोऽयमिति विषयः जातिवादिनाऽपि गोत्वादिविशिष्टप्रत्ययस्य तद्विषयत्वाभ्युपगमात् न हि वैशिष्ट्यमतद्व्यावृत्तेरन्यत्, गवादिपदप्रवृत्तिनिमित्तप्यगोव्यावृत्त्यादिरेव। (८)किञ्च गोत्वं कुत्र वर्त्तते न तावद्गवि गोत्ववृत्तेः पूर्वं

(१) विशेषान्वयः प्रत्येकान्वयस्तस्य च सूत्रीयेतिपदस्यानतिप्रयोजक इत्यस्वरसं सूचयति आहेति।

(२) स्वमते नपुंसकत्वमेकत्वञ्च सङ्गमयति परन्त्विति।

(३) लिङ्गमिति। सामान्ये धर्मिणि परत्वापरत्वयोः साध्यतायाम् अनुवृत्तिव्यावृत्तिबुद्धी क्रमशो लिङ्गं इत्यर्थः। इतरव्यावर्तकोयमेव हेतुरिति भावः। व्यवहाराभिप्रायेणाह लक्षणं वेति।

(४) समानानां भावः सामान्यमिति सूत्रस्थसामान्यपदावयवलभ्यार्थमाह नित्यमिति। संयोगादावतिव्याप्तिनिरासाय धर्मवाचकयत्प्रत्ययस्य धर्मविशेषो नित्यत्वमित्यर्थः। गगनपरिमाणे नित्येऽतिव्याप्तिवारणाय समानपदलभ्यमनेकव्यक्तिवृत्तीतिपदम्। अत्राभावेऽतिव्याप्तिवारणाय वृत्तित्वपदं समवेतपरमित्यपि बोध्यम्।

(५) समानशब्दस्य भेदगर्भाभिप्रायेणाह नित्यत्वे सतीति।

(६) अपरसामान्यस्य सामान्यपदवाच्यत्वमिव विशेषपदवाच्यत्वमपि इत्याहापरन्त्विति।

(७) बौद्धः शङ्कते नन्विति। प्राचीननैयायिकमतेऽभावाभावस्य प्रथमाभावप्रतियोगितावच्छेदकसम्बन्धरूपत्ववद् इतरभेदस्यापि प्रथमभेदप्रतियोगितावच्छेदकताघटकसम्बन्धरूपत्वाभ्युपगमात् जातिवादिभी रङ्गीकृतः गोत्वादिसमवायो गवेतरभेदान्नातिरिच्यत इति अतद्व्यावृत्त्यैवोपपत्तौ नानुगतप्रतीतिहेतुर्विधिरूपं सामान्यमिति बौद्धविदुषामभिप्रायः।

(८) सामान्यविशेषखण्डनद्वारा जातिपदार्थं निराकरोति किञ्चेति।

तस्याभावात्, नाप्यगवि विरोधात्, यत्र गोपिण्ड उत्पद्यते तत्र कुत आगत्य गोत्वं वर्त्तते, न तावत्तत्रैवासीत् देशस्यापि तस्य गोत्वा(१)पत्तेः। नापि गोत्वमपि तदानीमेवोत्पन्नं नित्यत्वाभ्युपगमात्, नाप्यन्यत आगतं निष्क्रियत्वाभ्युपगमात्, (२)न च एकस्यैव नित्यस्य नानाव्यक्तिवृत्तित्वं कार्त्स्न्यैकदेशविकल्पानुपपत्तेः। न हि कृत्स्नमेकत्रैव वर्त्तते अन्यत्र तद्विशिष्टप्रत्ययानुदयप्रसङ्गात्। नाप्येकदेशेन, जातेरेकदेशस्याभावात्। (३)तदुक्तं—

न याति न च तत्रासीन्नचोत्पन्नं न चांशवत्।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः॥ इति।

(४)सामान्यमस्ति तच्च संस्थानमात्रव्यङ्ग्यं गोत्वघटत्वादिवत् न तु गुणकर्मगतमपीति सगोत्रकलहः।

(५)अत्रोच्यते सामान्यं नित्यं व्यापकञ्च व्यापकत्वमपि स्वरूपतः सर्वदेशसम्बद्धत्वम्। न देशानां गोव्यवहारापत्तिः समवायेन तद्व्यवहारस्याभ्युपगमात् काले रूपादिमत्त्वेऽपि कालो रूपवानित्यप्रतीतिव्यवहारवत्। (६) न च कालो नास्त्येव पञ्चस्कन्धसंज्ञाभेदमात्रमित्यभ्युपगमादिति वाच्यम् कालस्य साधयिष्यमाणत्वात्।

---

(१) गोत्वापत्तेरिति। यदि गोशरीरोत्पत्तिदेशे पूर्वत एव वर्तमानं गोत्वमुत्पद्यमानगोशरीरमाश्रयते तदा तद्देशेऽपि गौरिति व्यवहारः स्यादिति भावः।

(२) कार्त्स्न्यैकदेशविकल्पं जातौ खण्डयति नचेति।

(३) तत्र बौद्धमतेन प्रमाणं दर्शयति तदुक्तमिति। न यातीत्यनेन जातेः सक्रियत्वापत्तिः नचासीदिति देशस्य गोत्वापत्तिः नचोत्पन्नमित्येनानित्यत्वापत्तिः, नचांशवदित्यनेन जहातीत्यनेन च कार्त्स्न्यैकदेशविकल्पापत्तिः सूचितेति भावः।

(४) गुणत्वादिजातिमनङ्गीकुर्वतां वेदप्रमाण्याभ्युपगन्तृत्वेन सगोत्राणां मीमांसकानामपि जातौ विप्रतिपत्तिमाह सामान्यमिति।

(५) तदुभयमतं क्रमेण निरस्यन्नाह अत्रोच्यत इति। काल इति। कालिकसम्बन्धेनेत्यादिः, तथा च कालिकेन रूपवत्यपि काले रूपवानित्यप्रतीतिवत् दैशिकविशेषणतासम्बन्धेन गोत्ववत्यपि देशे न गोत्ववत्ताप्रतीतिरिति भावः।

(६) निदर्शनमसिद्धं कुर्वन् बौद्धः पुनः शङ्कते नचेति। रूपविज्ञानवेदनासंज्ञासंस्काराख्यपञ्चस्कन्धान्तर्गतालयविज्ञानस्यैव क्षणकूटादिरूपकालत्वेन बौद्धानामभिप्रेततया कालिकसम्बन्धस्यातिरिक्तस्याभावेन इदानीं घट इत्यादिप्रतीतिस्तन्मते संयोगेन घटाधिकरणदेशमेवावगाहते न कालिकेनेति कालात्मकरसादिप्रत्ययस्य रूपसम्बन्धाभावाच्च न कालो रूपवानित्यादिप्रतीत्यापत्तिरिति भावः।

(१) तथाच यत्र पिण्ड उत्पद्यते तत्रस्थमेव गोत्वं तेन सम्बध्यते जातः सम्बद्धश्चेत्येकः काल इत्यभ्युपगमात् । एतेन कीदृश्याश्रये वर्त्तते इत्यत्र यत्र प्रतीयते इत्युत्तरम् । कुत्र प्रतीयते इत्यत्र यत्र वर्त्तते इत्युत्तरम् । गोत्ववृत्तेः पूर्वं स पिण्डः कीदृगासीदित्यत्र नासीदित्येवोत्तरम् । एवञ्च "न याति न च तत्रासीत्" इत्यादिकं परिदेवन-(२)मात्रम् । अतद्व्यावृत्तिरेव गोत्वमित्यत्र गौरयमिति विधिमुखः प्रत्यय एव बाधकः । न ह्यनुभवोऽपि व्याख्यायते (३)तदुक्तम्—

विधिजः प्रत्ययोऽन्योऽयं व्यतिरेकासमर्थकः" इति ।

न हि गौरयमिति प्रत्ययेऽगोव्यावृत्तिरपि भासते । कार्त्स्न्यैकदेशविकल्पस्तदा भवेत् यद्येकस्य सामान्यस्य कार्त्स्न्यं भवेदेकदेशो वा । कृत्स्नता ह्यनेकाशेषता(४) सा चैकस्मिन्नोपपन्ना । (५)गौरयमित्याद्यनुभव एवासद्विषयो न वस्तुव्यवस्थापनक्षम इति । अत्रोत्तरं वक्ष्यते ।

(६)प्राभाकरास्तु संस्थानमात्रव्यङ्ग्यं सामान्यमाचक्षते । तद्यद्यनुगतप्रतीतिसाक्षिकं तदा किमपराद्धं गुणकर्मगतैः सामान्यैः भवति हि रूपरसादावनुगतधीः सा च जातिव्यवस्थापिकैव बाधकाभावात् । रूपत्वादिजातिषु (७)न तावद्व्यक्त्यभेदो बाधकः आकाशत्वादिवत्, रूपरसादिव्यक्तीनामनेकत्वात् । नापि बुद्धित्वज्ञानत्वादिवत् घटत्वकलसत्वादिवद्वा तुल्यत्वं बाधकम् । तच्चान्यूनानतिरिक्तव्यक्तिकत्वम् गुणत्वापेक्षया न्यूनव्यक्तिकत्वात् नीलत्वाद्यपे-

---

(१) तथा चेति । जात्याकृतिव्यक्तयः पदार्था इति सूत्रेण व्यक्त्युत्पत्तिकाले तन्निष्ठमेव सामान्यं विज्ञानवादिमतेऽसद्रूपमपि अदृष्टं किञ्चिद्विज्ञानमुत्तरस्मिन्विज्ञाने फलं जनयद्यथा व्यक्तीभवति तथा व्यक्तीभवतीति नानित्यत्वादिदोषप्रसक्तिरिति हृदयम् ।

(२) परिदेवनमवहेलनमित्यर्थः ।

(३) विधिरूपजातिप्रत्ययस्यातद्व्यावृत्तिरूपाभावासाधकत्वे प्रमाणं दर्शयति तदुक्तमिति । व्यतिरेकोऽतद्व्यावृत्तिः ।

(४) अनेकेति । अशेषत्वमुद्देश्यतावच्छेदकव्यापकयावत्त्वम् तच्चैकस्मिन्गवादावनुपपन्नमित्यर्थः ।

(५) शङ्कते गौरयमिति । वक्ष्यते असद्वादखण्डनावसरे इत्यर्थः ।

(६) सगोत्वैकदेशीयानां प्राभाकराणां मतं निरस्यन्नाह प्राभाकरा इति ।

(७) व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रह इति जातिबाधकविशेषाभावकूटेन तत्सामान्यमुपपादयन्नाह न तावद्व्यक्त्यभेद इति ।

क्षया चाधिकव्यक्तिकत्वात्। अत एव न सङ्करः भूतत्वमूर्त्तत्ववत्, परस्परात्यन्ताभावसामानाधिकरण्ये सति जात्यन्तरेण सामानाधिकरण्याभावात्। नाप्यनवस्था रूपत्वादिगतसामान्यान्तरानभ्युपगमात्। नापि रूपहानिर्विशेषत्ववत्, यदि विशेषाः द्रव्याश्रितत्वे सति जातिमन्तः स्युः गुणाः कर्माणि वा स्युः विभुवृत्तित्वे सति यदि जातिमन्तः स्युर्गुणाः स्युरिति यथा विशेषपदार्थस्वरूपहानिस्तथा प्रकृतेऽभावात्। नापि समवायत्ववदसम्बन्धः समवाये समवायाभ्युपगमेऽनवस्थाभयात्तथास्तु, प्रकृते तु समवायस्यैव सम्बन्धस्याभ्युपगमात्। यद्यपि समवायत्वजातिबाधको व्यक्त्यभेद एव तथापि यन्मते उत्पादविनाशशीलाः बहवः समवायास्तन्मते द्रष्टव्यम्। अभावत्वादिजात्यभ्युपगमे वा बाधकमेतत्। विवादपदमनुगतबुद्धिः अनुगतनिमित्तसाध्या अबाधितानुगतमतित्वात्(१) दामकुसुमबुद्धिवत् इति जातौ मानमिति वृत्तिकारास्तच्चि(२)न्त्यम्॥ ३॥

सामान्यं विशेष इति द्वैविध्यं यदुक्तं तदुपपादयन्नाह—

**भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव॥ ४॥**

(३) भावः सत्ता अनुवृत्तेरेव हेतुः न तु व्यावृत्तेरपि हेतुः। तथा च विशेषसंज्ञां न लभते॥ ४॥

केषां सामान्यानां विशेषसंज्ञेत्यपेक्षायामाह—

**द्रव्यत्वं गुणत्वं कर्मत्वञ्च सामान्यानि विशेषाश्च॥५॥**

चकारः पृथिवीत्वादीनि-द्रव्यगतजातीः, रूपत्वादीनि-गुणगतजातीः उत्क्षेपणत्वादीनि-कर्मगतजातीः समुच्चिनोति। द्रव्यत्वमित्यादावसमासः परस्परं व्याप्यव्यापकभावाभावसूचनार्थः। सामान्यानि विशेषाश्चेत्यत्राऽसमासः सामान्यत्वे सत्येव विशेषत्वं यथा ज्ञायेत तदर्थम्, अन्यथा सामान्यविशेषा इति षष्ठीसमासभ्रमः स्यात्, तथाच सामान्यत्वे सति विशेषत्वं न प्रतीयेत। ननु द्रव्या-

---

(१) भ्रमवारणायाबाधितपदम्।

(२) तच्चिन्त्यमिति। चिन्ताबीजन्तु तादृशबुद्धेरनुगतधर्मप्रकारकप्रत्ययत्वे तेनैव जातिसिद्धावलमनुमानेन, तदनङ्गीकारे तादृशनिमित्तं पराभिमतमतद्व्यावृत्तिरूपमेव कुतो नेत्यर्थान्तरमिति नानुमानेन तत्सिद्धिरिति भावः।

(३) नन्वभिन्नवस्तुवृत्तिपरत्वापरत्वाभ्यां कथं सामान्यपदार्थस्य विभाग इत्यत आह भाव इति। तथा च सत्तामन्तर्भाव्य परत्वस्य भिन्नवस्तुवृत्तित्वेन न विभाजकत्वानुपपत्तिरिति भावः।

कारानुगतमतिसाक्षिकं न द्रव्यत्वम्, पृथिव्यादौ (१)कथञ्चित् तत्सत्त्वेऽपि वाय्वाकाशादौ तदसम्भवात्। न च गुणत्वावच्छिन्नकार्य्यसमवायिकारणतावच्छेदकतया तत्सिद्धिः नित्यानित्यवृत्तितया गुणत्वस्य कार्य्यतानवच्छेदकत्वात्, (२)गुणत्वार्थमपि पर्य्यनुयोगस्य तादवस्थ्यात् । मैवम् (३)संयोगत्वावच्छिन्नकार्य्यसमवायिकारणतावच्छेदकतया द्रव्यत्वसिद्धेः । सा हि न पृथिवीत्वाद्यवच्छेद्या न्यूनवृत्तित्वात्, नापि सत्तावच्छेद्याऽधिकवृत्तित्वात् अवश्यं ह्यवच्छेदकेन भवितव्यम्, अन्यथाकस्मिकतापत्तेः । तत्र परमाणुषु द्व्यणुकासमवायिकारणवत्तया द्व्यणुकेषु त्र्यणुकासमवायिकारणवत्तया विभुचतुष्टयस्य सर्वमूर्त्तसंयोगितयैव सिद्धेः मनसि इन्द्रियमनःसंयोगाधारतया वायौ तृणादिनोदनाश्रयतया प्रत्यक्षद्रव्येषु प्रत्यक्षतयैव संयोगाभ्युपगमस्यावश्यकत्वात् । अजस्तु संयोगो नास्त्येव येन संयोगत्वस्यापि कार्य्याकार्य्यवृत्तितया कार्य्यातावच्छेदकता न स्यात्। एवं ४) विभागसमवायिकारणतावच्छेदकतयाऽपि द्रव्यत्वसिद्धेः सुप्रतिपदत्वात्।

गुणत्वन्तु (५)संयोग विभागसमवायिकारणत्वासमवायिकारणत्वशून्ये सामान्यवति यत् कारणत्वं तदवच्छेदकतयैव सिद्धमित्युक्तत्वात् । कर्मत्वमपि प्रत्यक्षद्रव्येषु चलतीति प्रत्ययसाक्षिकम् । अन्यत्र तु संयोगविभागानुमेयम् . संयोगविभागोभयासमवायिकारणतावच्छेदकतयाऽपि कर्मत्वसिद्धेरावश्यकत्वात्। (६)अत एवादित्यस्य देशान्तरप्राप्त्या गत्यनुमानम्, तत्र च

(१) घृतादिपृथिव्यां पृथिवीत्वसन्देहाद्द्रव्यत्वस्यापि सन्देह अत: कथंचिदिति।

(२) गुणत्वार्थमिति। गुणत्वजातिरेव कथं सिद्ध्यतीति प्रश्नस्य तुल्यत्वादित्यर्थः।

(३) संयोगत्वेति। तथा च संयोगत्वावच्छिन्नसंयोगनिष्ठकार्यतानिरूपितद्रव्यनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटनिरूपितदण्डनिष्ठकारणतावत् स चान्यूनानतिरिक्तवृत्तिर्धर्मो द्रव्यत्वमित्यनुमानेन द्रव्यत्वजातिसिद्धिरिति भावः।

(४) नित्यसंयोगाङ्गीकर्तृमतसाधारण्येन द्रव्यत्वजातिसिद्धिमाह एवमिति। अनुमानप्रयोगरीतिः पूर्वोक्तैव।

(५) संयोगेति। अत्रापि पूर्ववदुभयकारणताशून्य इत्यर्थो बोध्यः नातः संयोगविशेषकारणे संयोगेऽव्याप्तिः। एवं विभागेऽपि।

(६) अत एव कर्मणः संयोगादिकारणत्वादेव । अनुमानप्रयोगस्तु आदित्यो गतिमान् देशान्तरप्राप्तिमत्त्वात् इति।

देशान्तरस्याकाशादेरतीन्द्रियत्वेऽपि तत्किरणसंयोगविभागयोस्तन्मण्डलेन प्रत्यक्षत्वात् (१)तत एव गत्यनुमानम् । (२)देशान्तरप्राप्तिमान् आदित्यः अविनाशित्वे द्रव्यत्वे च सति प्राङ्मुखोपलब्धस्य प्रत्यङ्मुखेन तेनैवोपलभ्यतया प्रत्यभिज्ञायमानत्वादिति देशान्तरप्राप्त्या अनुमितया आदित्यगत्यनुमानमित्युद्योतकराचार्य्याः ॥ ५ ॥

ननु य एव विशेषपदार्थ उद्दिष्टः स एव किं सामान्यविशेषत्वेनाभिधीयते इति शिष्याकाङ्क्षामपनयन्नाह—

**अन्यत्रान्त्येभ्यो विशेषेभ्यः ॥ ६ ॥**

अन्त्या विशेषा नित्यद्रव्यवृत्तयो येऽभिहिताः तान् वर्जयित्वा सामान्यविशेषाभिधानमित्यर्थः । अन्तेऽवसाने भवन्तीत्यन्त्या,(३)यतो न व्यावर्त्तकान्तरमस्तीत्याचार्य्याः । उत्पादविनाशयोरन्तेऽवसाने भवन्तीत्यन्त्या नित्यद्रव्याणि तेषु भवन्तीत्यन्त्या विशेषा इति वृत्तिकृतः(४) । ते हि विशेषा एव व्यावृत्तिबुद्धिहेतवो न तु सामान्यरूपा अपीति ॥ ६ ॥

सत्तासामान्यमित्यत्र बहूनां विप्रतिपत्तिरतस्तत्र प्रमाणमाह—

**सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥ ७ ॥**

इतिकारेण प्रत्ययव्यवहारयोः प्रकारमुपदिशति । तथाच द्रव्यादिषु त्रिषु सत्सदिति-प्रकारको यतः प्रत्ययः सदिदं सदिदमि-

---

(१) तत एव देशान्तरप्राप्त्यैव । तथा च देशान्तरस्याकाशादेरतीन्द्रियत्वेपि अत्र सूर्यमण्डलमेव देशान्तरम् तेन तत्किरणसंयोगविभागयोः प्रत्यक्षतया देशान्तरप्राप्त्या गत्यनुमानं निराबाधमिति भावः ।

(२) आकाशस्यातीन्द्रियत्वेन तत्संयोगविभागयोरप्यतीन्द्रियतया प्रत्यक्षासम्भवादलिङ्गत्वेपि अनुमानं भवतीति न्यायवार्तिककारमतसिद्धानुमानं दर्शयति देशान्तरेति । तैलवर्तिविकारवशेन प्रतिक्षणभङ्गुरे प्राङ्मुखेन प्रत्यङ्मुखेन च दृष्टे सोयमिति प्रत्यभिज्ञाते च दीपे व्यभिचारवारणाय अविनाशित्व इति हेतौ विशेषणम् । सूर्यरूपादौ व्यभिचारनिरासाय द्रव्यत्वे सतीति च । अत्र च पूर्वं प्राग्दिशि स्थितः पश्चात्केनचित्प्रतीचीमानीतो मण्यादिर्दृष्टान्तो बोध्यः ।

(३) फलितार्थमाह यत इति । एकमात्रवृत्तयो जातिशून्याश्चेत्यर्थः । गुणस्याप्येकमात्रवृत्तित्वात् अभावस्य जातिशून्यत्वाच्च तत्र तत्रातिव्याप्तिवारणाय पदद्वयप्रवेशो बोध्यः । एकमात्रवृत्ताभावविशेषेऽतिव्याप्तिवारणाय वृत्त्यन्तं समवायेन निवेश्यम् ।

(४) वृत्तिकृत इति । एतन्मते सूत्रस्थान्त्येभ्य इति पदे एकशेषोऽङ्गीकर्तव्यस्तथा च अन्त्या नित्या, अन्त्याश्च नित्यद्रव्यवृत्तयश्चेति एकशेषसमासेन नित्यत्वे सति नित्यद्रव्यवृत्तित्वं विशेषलक्षणं पर्यवसितम् । न चात्मन्यतिव्याप्तिः नित्यद्रव्यद्वयावृत्तित्वेन विशेषणीयत्वात् । नन्वेवमपि गगनपरिमाणेऽतिव्याप्तिस्तदवस्थैवेति चेन्न गुणत्वशून्यत्वेनापि विशेषणीयत्वात् ।

त्याकारकः शब्दप्रयोगो वा यदधीनः सा सत्ता ॥ ७ ॥

ननु द्रव्यगुणकर्मभ्यः पृथग्भावेन सत्ता नानुभूयतेऽतो द्रव्याद्यन्यतममेव सत्ता यतो हि यद् भिन्नं भवति तत्ततो भेदेनानुभूयते यथा घटः पटात्, न च सत्ता तेभ्यो भेदेनानुभूयते इति तदात्मिकैवेत्यत आह—

द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता ॥ ८ ॥

द्रव्यादयोऽननुगताः सत्ता चानुगता। तथाच अनुगतत्वाननुगतत्वलक्षणविरुद्धधर्माध्यासेन तेभ्यो भेदस्य सिद्धत्वात्(१)। यत्तु तेभ्योऽन्यत्र नोपलभ्यते तदयुतसिद्धिबलात् घटपटयोस्तु युतसिद्धिः। न च व्यक्तिस्वरूपमेव सत्ता, व्यक्तीनामननुगमात्। स्वरूपत्वं यद्यनुगतं तदा सैव सत्ता, अननुगतैरपि स्वरूपैरनुगतव्यवहारश्चेत्तदा गोत्वादिभिरपि गतम्। (२)अत एव यत्र सत्ता समवेति तादृशैराधारैरेव तद्व्यवहारोपपत्तौ किं सत्तयेत्यपास्तम्। अत एवार्थक्रियाकारित्वं प्रामाणिकत्वं वा सत्त्वमित्ययुक्तं तदननुसन्धानेऽपि सन् इति प्रत्ययात् ॥ ८ ॥

भेदकान्तरमाह—

गुणकर्मसु च भावान्न कर्म न गुणः ॥ ९ ॥

न गुणो न कर्मेति वक्तव्ये व्यत्ययेनाभिधानं न द्रव्यमित्यपि सूचयति। न हि कर्म कर्मसु वर्त्तते न वा गुणो गुणेषु न वा द्रव्यं गुणे कर्मणि वा, सत्ता तु गुणे कर्मणि च वर्त्तते तेन द्रव्यगुणकर्मवैधर्म्यात्तेभ्यो भिन्नैव सत्ता ॥ ९ ॥

भेदकान्तरमाह—

(३)सामान्यविशेषाभावेन च ॥ १० ॥

यदि सत्ता द्रव्यं गुणः कर्म वा स्यात् तदा सामान्यविशेषवती स्यात्। न च सत्तायां सामान्यविशेषा द्रव्यत्वादय उपलभ्यन्ते न हि भवति सत्ता द्रव्यं गुणः कर्म वेति केषाञ्चिदनुभवः ॥ १० ॥

---

(१) सिद्धत्वादिति। तथा च सत्ताया अननुगतद्रव्यादिस्वरूपत्वे तादृशानुगतप्रत्ययापलापः स्यादिति भावः ॥

(२) अत एवानुगतव्यवहारादेव।

(३) ननु गुणादिरूपायाः सत्तायास्तादात्म्येन गुणादिवृत्तित्वं स्यादतो भेदकान्तरं दर्शयति सामान्येति। तथा च सत्ताया द्रव्यादिरूपत्वे तत्रापि द्रव्यत्वादिप्रकारकबुद्धेः प्रमात्वं स्यादिति भावः।

एवं सत्ताया द्रव्यगुणकर्मभ्योऽर्थान्तरत्वमभिधाय द्रव्यत्वस्य तेभ्योऽर्थान्तरत्वमाह—

**अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥ ११ ॥**

अनेकं द्रव्यं समवायितया यस्यास्ति तदनेकद्रव्यवत् । अनेकपदमिह सर्वपरं तेन पृथिवीत्वादिभ्यो भेदः, नित्यत्वन्तु सामान्यलक्षणप्राप्तमेव तेनावयविभ्यो भेदः(१), अनेक(२)द्रव्यवत्त्वञ्च अनेकद्रव्यमात्रसमवेतत्वं तेन सत्ताया भेदः। तेन(३) नित्यमनेकद्रव्यमात्रसमवेतं द्रव्यत्वम्, अजः संयोगो नेष्यत इत्युक्तम्। द्रव्यत्वञ्च साधितमेव। द्रव्यत्वमुक्तमिति । द्रव्यत्वमपि सत्तावदेव व्याख्यातमित्यर्थः ॥ ११ ॥

ननु द्रव्यत्वमपि जातिः स्याश्रयादभिन्नमेव स्यात् को दोष इत्यत आह—

**सामान्यविशेषाभावेन च ॥ १२ ॥**

यदि द्रव्यत्वं जातिर्द्रव्याद्यात्मिकैव स्यात् तदा तस्यां पृथिवीत्वजलत्वतेजस्त्वादयः सामान्यविशेषाः स्युरित्यर्थः । न हि भवति द्रव्यत्वं पृथिवी जलं तेजो वेति केषाञ्चित् प्रत्यय इत्यर्थः ॥ १२ ॥

गुणत्वमाह—

**तथा गुणेषु भावाद् गुणत्वमुक्तम् ॥ १३ ॥**

(४)गुणेष्वेव भावात् समवायात् गुणत्वं द्रव्यगुणकर्मभ्यो भिन्नं सत्तावदेवोक्तमित्यर्थः ॥ १३ ॥

भेदकान्तरमाह—

---

(१) भेद इति। एतेनावयविनि द्रव्ये व्यभिचारवारणार्थैवानेकपदस्य सर्वपरत्वोपादानसम्भवे पृथिवीत्वभेदार्थन्तदित्यनुचितमिति परास्तम् जातिसामान्यलक्षणाक्रान्तनित्यत्वपदेनैवोक्तव्यभिचारवारणसम्भवे पृथिवीत्वभेदसिद्ध्यर्थन्तदुपादानस्य युक्तत्वात् ।

(२)ननु तथाप्यनेकपदस्य सर्वपरताऽयुक्ताऽस्य हेतोः सत्तायां व्यभिचारेण जात्यन्तरभेदासाधकत्वात् अत आह अनेकेति । तथा च द्रव्यादिभेदसाधकत्ववत् जात्यन्तरभेदसाधकत्वमप्यस्य हेतोर्नानुपपन्नमिति भावः ।

(३) तेनावयविभेदसिद्ध्यर्थं नित्यपदोपादानेन, नित्यमनेकद्रव्यमात्रसमवेतं द्रव्यत्वमिति फलितार्थ इत्यर्थः । नेष्यत इति। तथा च तत्र नातिव्याप्तिरिति भावः । ननु तादृशद्रव्यत्वे किं प्रमाणमत आह द्रव्यत्वं चेति ।

(४) गुणेष्वेवेति। तथा च बहुवचनैवकाराभ्यां साकल्येतरावृत्तित्वयोर्लाभात् गुणेतरावृत्तित्वे सति सकलगुणवृत्तित्वं गुणत्वमित्यर्थः। एवमग्रेपि ।

**सामान्यविशेषाभावेन च ॥ १४ ॥**

यदि द्रव्यगुणकर्मभ्यो गुणत्वमतिरिक्तं न भवेत्तदा द्रव्यत्वगुणत्वकर्मत्वं तदवान्तरजातिमत्तया उपलभ्येतेत्यर्थः ॥ १४ ॥

द्रव्यगुणकर्मभ्यो भेदकं कर्मत्वस्याह—

**कर्मसु भावात् कर्मत्वमुक्तम् ॥ १५ ॥**

कर्मस्वेव भावात् समवायात् कर्मत्वमपि जात्यन्तरं द्रव्यगुणकर्मभ्यो भिन्नमुक्तं सत्तावदित्यर्थः ॥ १५ ॥

भेदकान्तरमाह—

**सामान्यविशेषाभावेन च ॥ १६ ॥**

कर्मत्वं यदि द्रव्याद्यात्मकं भवेत्तदा द्रव्यत्वादिसामान्यविशेषस्तत्र समवेयादित्यर्थः । (१)सेयमेकाकारा चतुःसूत्री सत्ताद्रव्यत्वगुणत्वकर्मत्वानां चतसृणां जातीनां द्रव्यगुणकर्म[illegible]प्रतिपादनाय एकप्रकरणेनोक्तेत्यवधेयम् ॥ १६ ॥

ननु सत्ता द्रव्यगुणकर्मसु वर्त्तमाना द्रव्यत्वाद्यवच्छेदभेदेन भिन्नैव कथं न स्यादत आह—

**सदितिलिङ्गाविशेषाद् विशेषलिङ्गाभावाच्चैको भावः ॥ १७ ॥**

सदित्याकारकं ज्ञानं शब्दप्रयोगो वा सत्ताया लिङ्गम् । तच्च द्रव्यगुणकर्मसु समानमविशिष्टम् । तेन भावः सत्ता एकैव तेषु वर्त्तते अन्यथा द्रव्यत्वादिभिस्तुल्यव्यक्तिकतया सत्ता वा न स्यात् तानि वा न स्युः । (२)विशेषलिङ्गाभावाच्चेति । विशेषो भेदस्तत्र यल्लिङ्गमनुमानं तदभावाच्च न भेद इत्यर्थः । भवति हि स एवायं दीप इत्यनुगमस्तत्र यथा विशेषलिङ्गं दीर्घह्रस्वत्वादिपरिमाणभेदस्तथात्र विशेषलिङ्गं नास्तीति भावः ॥ १७ ॥

इति श्रीभगवत्कणादसूत्रोपस्कारे शाङ्करे प्रथमाध्यायस्य द्वितीयमाह्निकम् ।

---

(१) नन्वेकाकारसूत्रचतुष्टयस्य सामान्यविशेषाभावेनेत्यस्यैकार्थतया पौनरुक्त्यापत्तिरत आह सेयमिति । तथा च सत्तादिविभिन्नपक्षकद्रव्यादिभेदसाध्यकद्रव्यत्वपृथिवीत्वादिप्रकारकप्रमाविशेष्यात्वाभावहेतुकानुमानानां पक्षहेतुभेदेन भिन्नत्वात् न पौनरुक्त्यमित्यर्थः ।

(२) ननु माऽस्तु सत्ता जात्यन्तरमत आह विशेषेति ।

## द्वितीयाध्याये प्रथमाह्निकम् ।

द्वितीयाध्यायस्य प्रथमाह्निकस्य नवानां द्रव्याणां लक्षणमर्थः । तत्र पृथिव्यप्तेजसां लक्षणप्रकरणम्, ईश्वरसिद्धिप्रकरणम्, आकाशानुमानप्रकरणम् । तत्र प्रथमोद्दिष्टायाः पृथिव्या लक्षणमाह—

**रूपरसगन्धस्पर्शवती पृथिवी ॥ १ ॥**

रूपं नीलपीताद्यनेकप्रकारं पृथिव्या एव, तथाच (१)नीलरूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणम् । एवं रसः कटुकषायाद्यनेकप्रकारकः पृथिव्यामेव, तथाच कटुरससमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणम् । एवं कषायादिपदप्रक्षेपेण लक्षणान्यूहनीयानि । गन्धो द्विविधः सुरभिरसुरभिश्च तथाच (२)गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणम् तथा(३)गन्धसमानाधिकरण-गन्धासमानाधिकरणगुणासमानाधिकरण—जात्यधिकरणद्रव्यत्वं द्रष्टव्यम् । न च पाषाणादौ गन्धरसयोरननुभवात् तत्राव्यापकमिदमुभयमपीति वाच्यम् तत्रापततो गन्धरसयोरननुभवेऽपि तदीयभस्मसु तदुपलम्भात्, (४)य एवावयवाः पाषाणारम्भकास्त एव तद्भस्मारम्भका अपीति नाव्याप्तिः । कथं तर्हि सुरभिः समीरणः तिक्तं कारवेल्लजलमिति-प्रतीतिरिति चेन्न पार्थिवोपाधिकत्वात् तयोर्गन्धरसयोः । स्पर्शोऽप्यनुष्णाशीतः पाकजः पृथिव्यामेव तथाच पाकजस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणम् । पाकजत्वञ्च

---

(१) नीलरूपेति । वायौ अतिव्याप्तिवारणाय समानाधिकरणान्तम् । जले तद्वारणाय नीलपदम् । द्रव्यत्वमादाय पुनर्जलादावतिव्याप्तिनिरासाय द्रव्यत्वव्याप्येति । अन्यतरत्वमादाय तद्वारणाय जातिपदम् । एवमग्रेपीदृग्पदानां लक्षणघटकानां व्यावृत्तिर्बोध्या विशेषस्तु तत्र तत्र वक्ष्यते ।

(२) गन्धसमानाधिकरणेति । उत्पत्तिकालावच्छिन्नघटादावव्याप्तिवारणाय गन्धवत्त्वं परित्यज्य गन्धसमानाधिकरणेत्यादि ।

(३) आत्मन्यतिव्याप्तिवारणाय गन्धसमानाधिकरणेति जातिविशेषणम् । द्रव्यत्वमादायातिव्याप्तिवारणाय गुणासमानाधिकरणेति जातौ विशेषणम् । गन्धसमानाधिकरणस्यापि पृथिवीत्वस्य रूपसमानाधिकरणत्वात्पृथिव्यामव्याप्तिवारणाय गन्धासमानाधिकरणेति गुणविशेषणम् बोध्यम् । अत्र जात्यधिकारणत्वपर्यन्तं लक्षणं द्रव्यत्वमित्यस्य पृथिव्याः द्रव्यपदार्थबोधकतामात्रत्वात् ।

(४) अत्र यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्त्या भस्मनि पाषाणोपादानपृथिवीपरमाणूपादेयत्वसिद्ध्या पाषाणपरमाणोः पृथिवीत्वेन तज्जन्यपाषाणेपि तेनैव हेतुना गन्धानुमानमिति भावः ।

(१)विशेषान्तरव्यङ्ग्यं पृथिवीस्पर्श एव, विशेषान्तरञ्च शिरीषलवङ्गीकुसुमादौ स्पर्शविशेषे स्फुटतरम्. न त्वेवं जलादिस्पर्शे। यद्यप्यवयविनि पाकादग्निसंयोगात् स्पर्शादयो न जायन्ते (२)तथापि तत्परम्पराप्रभवतया तत्रापि वैजात्यविशेषोऽनुसरणीयः ।

ननु लक्षणमिदं व्यतिरेकिलिङ्गमितरभेदसाधकं व्यवहारसाधकं वा ? तत्र पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् यन्नेतरभिन्नं तन्न गन्धवत् यथा जलादि, इतरभेदाभावव्यापकाभावप्रतियोगिगन्धवती चेयं, तस्मादितरभिन्ना। (३)तत्रेतरभेदस्य साध्यस्य प्रसिद्धौ ततो हेतोर्व्यतिरेके सपक्षविपक्षव्यावृत्ततयाऽसाधारण्यम् अव्यतिरेके चान्वयित्वम्। अप्रसिद्धौ च अप्रसिद्धविशेषणः पक्षः। तथाच(४)तत्र न सन्देहो, न वा सिषाधयिषा (५)न वा तद्विशिष्टज्ञानरूपाऽनुमितिः। (६)किञ्च व्यतिरेकयोर्व्याप्तिस्तथाच न व्याप्तस्य पक्षधर्मत्वं पक्षधर्मस्य न व्याप्तत्वमिति वैधर्म्यम्(७) । अत एवोपनयवैयर्थ्यमपि व्या-

---

(१) विशेषेति। विशेषो काठिनत्वमृदुत्वादिः।

(२) तथापीति। अवयविस्पर्शेऽवयवस्पर्शस्तत्र च पाकः कारणमिति अवयविस्पर्शेऽपि परम्परया पाकजन्यत्वात् वैजात्यमंगीकार्यमिति भावः।

(३) तत्रेति। तत्र=उक्तपञ्चावयववाक्यप्रयोगेन इतरभेदसाधकानुमितौ। साध्यस्येति। साध्यप्रकारकनिश्चये इत्यर्थः। ततो=साध्यप्रकारकनिश्चयधर्मिणि, व्यतिरेके=हेतोरभावे सपक्षविपक्षव्यावृत्तत्वेनासाधारण्यम्। अव्यतिरेके=हेतोः सत्त्वेऽन्वयित्वम्, अन्वयव्याप्तिज्ञानजन्यानुमितिकरणत्वे व्यतिरेकित्वानुपपत्तिरित्यर्थः।

(४) अप्रसिद्धविशेषणपक्षत्वे का हानिरत आह तथा चेति। साध्यनिश्चयाधीनस्य सन्देहकारणस्य साध्यतदभावसहचारिधर्मवद्धर्मिज्ञानादिरूपस्याभावात्सन्देहरूपपक्षताऽसत्त्वान्नानुमितिरिति तात्पर्यम्।

(५) केवलसिषाधयिषारूपपक्षतामते अनुपपत्तिं प्रदर्श्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वेऽप्याह नवेति। पक्षतावच्छेदकव्यापकेतरभेदप्रातियोगिकत्वावच्छिन्नसंसर्गताकतत्पक्षकतत्साध्यकानुमितिरित्यर्थः तस्याश्चोक्तसंसर्गताकज्ञानरूपतया तद्विशिष्टविषयकज्ञानत्वेनेतरभेदसंसर्गतावच्छेदकप्रकारकज्ञानं विनाऽवच्छेदकावच्छेदेनानुमितिः कथं स्यादिति भावः।

(६) नन्ववच्छेदकावच्छेदेनानुमितौ साध्यांशे प्रकारतया पक्षतावच्छेदकावच्छेद्यत्वं भासते नतु पक्षतावच्छेदकव्याप्यकत्वादिकं संसर्गांशे विशिष्टवैशिष्ट्यावगाहिसंसर्गज्ञानमपि वा न संसर्गतावच्छेदकप्रकारकनिश्चयजन्यमत आह किञ्चेति।

(७) वैधर्म्यमिति। व्याप्तस्य=साध्याभावस्य, न पक्षधर्मत्वं न प्रकृतहेतुत्वं, प्रकृतहेतोश्च न व्याप्तत्वमिति वैधर्म्यमित्यर्थः। वैधर्म्याच्च व्याप्तिपक्षधर्मताविशिष्टहेतुप्रतिपादनरूपोपनयसार्थक्यमप्यसम्भवीत्युपनयवैयर्थ्यमेतदेवाह अत एवेत्यनेन। नन्विति। अगृहीतव्याप्तिकमुपनयेन न व्याख्यायत इति भावः।

ख्यायते न त्वगृहीतव्याप्तिकमपि । तदुक्तम्—

साध्याप्रसिद्धिर्वैधर्म्यं व्यर्थतोपनयस्य च ।
अन्वयेनैव सिद्धिश्च व्यतिरेकिणि दूषणम् ॥ इति ।

एवं व्यवहारसाध्यकेऽपि । तत्र यद्यपि व्यवहारः पृथिवीपदवाच्यत्वम् तच्च पृथिवीत्वजातावप्यस्ति तत्र च पृथिवीत्वं हेतुर्नास्तीत्यसाधारण्यम्(१) तथापि पृथिवीत्वप्रवृत्तिनिमित्तकपृथिवीपदवाच्यत्वं साध्यमिति नासाधारण्यम्। (२)यद्वा पृथिवीत्वं काचित्कपदप्रवृत्तिनिमित्तं जातित्वात् घटत्ववदिति सामान्यतः सिद्धौ पृथिवीपदं पृथिवीत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वात् यन्नैवं तन्नैवमिति साध्यम्। तथाचात्रापि साध्याप्रसिद्धिरेवेति चेत् ।

(३)मैवम् इतरेषां जलादीनाम् भेदस्य घट एव प्रसिद्धेः । वाय्वादेरतीन्द्रियस्यापि भेदस्य अन्योन्याभावस्य घटादौ प्रत्यक्षत एव सिद्धत्वात् अन्योन्याभावग्रहे अधिकरणयोग्यतामात्रस्य तन्त्रत्वात् स्तम्भः पिशाचो न भवतीत्यादौ तथा दर्शनात् । नचैवं घट एव तर्हि दृष्टान्तोऽस्तु किं व्यतिरेकिणा ।

ऋजुमार्गेण सिद्ध्यन्तं को हि वक्रेण साधयेत् ।

इति वाच्यम् अव्यतिरेकिलिङ्गं चेदनाभासं(४), तदाऽयमपि मार्गो वक्ररुचिं प्रत्यप्रतिहत एव । साध्याप्रसिद्धेर्निरासे तन्मूलकदोषाणां निरस्तत्वात् । व्यतिरेकसहचारेण अन्वयव्याप्तेरेव ग्रहात् व्यतिरेकव्याप्त्याऽन्वयव्याप्तेरनुमानाद्वा न (५)वैषम्यम्। नचोपनय-

---

(१) असाधारण्यमिति । यद्यपि साध्यासामानाधिकरण्यस्यासाधारणत्वे इदमसाधारण्यमत्रासम्भवि तथापि सपक्षविपक्षव्यावृत्तत्वरूपप्राचीनमतसिद्धासाधारण्यं भवत्येवेति ध्येयम् ।

(२) ननु पृथिवीत्वप्रवृत्तिनिमित्तकत्वेऽपि पृथिवीपदवाच्यत्वस्यासिद्ध्या तादृशविशिष्टसाध्याप्रसिद्धिरिति आशङ्कायामाह यद्वेति ।

(३) नन्वित्यादिना शङ्कितं समाधत्ते मैवमित्यादिना ।

(४) अनाभासमिति । तथा च घटस्यापि पृथिवीपदवाच्यत्वादिरूपसाध्यसन्देहात्पक्षतुल्यतेति दृष्टान्तासिद्धिराभासो वक्ररुचिणा भवता देय इति वक्रमार्गोऽयं व्यतिरेकिरूपः स्वीकृत इति भावः ।

(५) न वैषम्यमिति । व्यतिरेकसहचारज्ञानजन्येनाप्यन्वयव्याप्तिग्रहेण गदाधरभट्टाचार्यैरन्वयव्याप्त्यनुमितेः स्वीकृतत्वादत्र न हेतोर्व्यतिरेकित्वानुपपत्तिरिति न वैषम्यभावः । ननु यदि व्यतिरेकसहचारो व्यतिरेकव्याप्तिज्ञानं विनैवान्वयव्याप्तिज्ञानमुत्पादयति तर्हि कृतन्तद्ग्राहकोदाहरणादिनाऽतो द्वितीयो हेतुर्व्यतिरेकव्याप्त्यन्वयव्याप्तेरनुमानाद्वेति । एवमपि व्यतिरेकित्वं तादृशहेतौ निरपवादमेवेति न वैषम्यमित्यर्थः ।

वैयर्थ्यम्, गृहीतव्याप्तेरेव हेतोः पक्षे उपसंहारात्। तदुक्तम्—

(१)नियम्यत्वनियन्तृत्वे भावयोर्यादृशी मते।
त एव विपरीते तु विज्ञेये तदभावयोः॥ इति।

(२)व्यवहारस्तु गन्धवती पृथिवीत्युपदेशादेव यथा कम्बुग्रीवादिमान् घटपदवाच्य इति। तथा कुत्रचिदेव घृतादौ मृदादौ च गन्धवत्त्वेनोपलक्षणेन पृथिवीत्वे पृथिवीपदप्रवृत्तिनिमित्तत्वं येनोपदेशाद् गृहीतम्, गन्धवत् सर्वं पृथिवीत्वेन प्रवृत्तिनिमित्तेन पृथिवीपदवाच्यं गन्धवत्त्वात् यन्नैवं तन्नैवमिति व्यतिरेकी तस्याप्यवतरत्येव। ननु भेदसाधकव्यतिरेकिणि भेदो वैधर्म्यं स्वरूपभेदो वा अन्योन्याभावो वा? न तावदाद्यौ प्रत्यक्षत एव तदवगमात्। न तृतीयः अभावभेदस्यापि साध्यत्वेन (३)तदन्योन्याभावस्य तत्राभावात्, (४)तेन सह स्वरूपभेदे साध्ये साध्याननुगमादिति चेन्न अभावप्रतियोगिकान्योन्याभावस्यापि साध्यत्वात् स यद्यतिरिक्तस्तदाऽस्त्येव न चेत् (५)स्वरूपमादाय तत्पर्य्यवसानात्। (६)वस्तुतो (७)भिन्न एव तद्वैधर्म्यस्य तदन्योन्याभावव्याप्यत्वात्, (८)न चानवस्था यावत्येवानुभवस्तावत्येवाविश्रामात् अन्यत्र त्वननुभवेनैव

---

(१) नियम्यत्वेति। नियम्यत्वनियन्तृत्वे व्याप्यत्वव्यापकत्वे। तत्साध्यहेतुकान्वयव्याप्तिवत् तत्साध्यहेतुकव्यतिरेकव्याप्तिरपि तत्साध्यहेतुकानुमितिजनकतावच्छेदिकेत्यर्थः।

(२) व्यवहारसाध्यकव्यतिरेक्यनुमितिहेतुत्वमपि गन्धवत्त्वादिहेतोर्व्यवस्थापयति व्यवहारस्त्विति।

(३) ननु पृथिवीतरत्वस्याभावसाधारण्येन तद्भेदस्य साध्यस्य पृथिव्यां सत्त्वात्तदभावस्तत्रानिष्ट एवेत्यत आह तदन्योन्याभावेति। अभावभेदभेदस्यापि यत्किंचिदभावभेदरूपत्वेन साध्यतया पक्षसत्त्वमावश्यकं तन्न सम्भवति अभावभेदस्याधिकरणरूपत्वेन पृथिव्यादिरूपतया तद्भेदस्य पृथिव्यादावसत्त्वादिति भावः। –

(४) तत्रेति। इतरान्तर्गताभावेन सह स्वरूपभेदे साध्ये तत्र स्वरूपभेदः अन्यत्रान्योन्याभाव इति साध्याननुगमप्रसङ्ग इत्यर्थः।

(५) स्वरूपमिति। अभावस्वरूपमित्यर्थः तथा चाभावभेदभेदस्य स्वाधिकरणीभूताभावसामान्यरूपतया पक्षवृत्तित्वं निराबाधमिति तात्पर्यम्।

(६) नन्वभावरूपत्वमभावभेदभेदस्यासम्भवि अभावस्य केवलान्वयित्वात्तस्यापि केवलान्वयित्वापत्तेरत आह वस्तुत इति।

(७) भिन्न इति। अभावप्रतियोगिकभेदोऽधिकरणभिन्न एव इत्यर्थः। तत्र हेतुमाह तद्वैधर्म्येति। अभावभेदस्य पृथिव्याद्यात्मकत्वे भावत्वाभावत्वरूपतद्वैधर्म्यानुपपत्तेरिति भावः।

(८) एवमभावभेदस्यातिरिक्तत्वे भेदभेदधारयाऽनवस्था स्यादित्याक्षिपति नचेति।

विश्रामात्। यत्तु त्रयोदशान्योन्याभावास्त्रयोदशसु प्रसिद्धाः मिलिताः पृथिव्यां साध्यन्ते इति। (१)तत्तुच्छं प्रत्येकं प्रसिद्धेरतन्त्रत्वात् मिलितप्रसिद्धेरभावात् किन्तु निर्गन्धत्वावच्छिन्नप्रतियोगिताकान्योन्याभावः साध्येत प्रतियोगितावच्छेदकभेदेनाभावभेदस्यावश्यकत्वात् स च घटादावेव प्रत्यक्षसिद्ध इत्युक्तत्वात्। आकाशादौ का गतिरिति चेत् आकाशमितरभिन्नं शब्दाश्रयत्वात् यन्नैवं तन्नैवमित्यादौ पक्षैकदेशे यद्यपि न साध्यं प्रसिद्धम् तथापि यत् यद्वैधर्म्यवत् तत् तत्प्रतियोगिकान्योन्याभाववदिति सामान्यप्रवृत्तव्याप्तिबलेन शब्दाश्रयत्वात्यन्ताभाववत्प्रतियोगिकान्योन्याभावस्य पूर्वमेव सिद्धौ केवलं पक्षनिष्ठतया इदानीं बोध्यते वह्निरिव पर्वतनिष्ठतया इत्यन्योऽस्मत्सिद्धान्तः(२) तद्वैधर्म्यस्य तदन्योन्याभावव्याप्यत्वात्। शब्दाश्रयत्वात्यन्ताभाववत्त्वमेव विपक्षे न गृहीतमिति चेत् तर्हि शब्दाश्रयत्वस्य न लक्षणत्वं न वा लिङ्गत्वं विपक्षगामित्वशङ्काग्रस्तत्वादिति ॥ १ ॥

पृथिव्यनन्तरमुद्दिष्टानामपां लक्षणमाह—

**रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ॥ २ ॥**

शुक्लमधुरशीता एव रूपरसस्पर्शाः द्रवत्वञ्च सांसिद्धिकं स्नेहस्तु स्वरूपतः (३)। ननु शुक्लमेव रूपमपामित्ययुक्तम् कालिन्दीजलादौ नैल्यस्योपलम्भात्। मधुर एव रस इत्यप्ययुक्तम् जम्बीरकरवीररसादौ आम्लयतैक्त्यादेरुपलम्भात्। शीत एव स्पर्श इत्यप्यनुपपन्नम् मध्यन्दिने औष्ण्यस्यैवोपलम्भात्। सांसिद्धिकञ्च द्रवत्वमव्यापकम् हिमकरकादावभावात्(४)। स्नेहस्तु स्वरूपासिद्धोऽतिव्यापकश्च जलेऽननुभवात् घृतादौ पार्थिवेऽनुभवाच्च। न च जलत्वं जातिरेव जललक्षणम् व्यवस्थापकाभावेन तदनुपपत्तेः। न च स्नेहसमवायिकारणतावच्छेदकत्वेन तत्सिद्धिः स्नेहत्वस्य कार्य्याकार्य्यवृत्ति-

(१) जलत्वाद्यवच्छिन्नाभावकूटस्यैवात्र साध्यतेति मतं निरस्यति तत्तुच्छमिति।

(२) सिद्धान्त इति। पक्षैकदेशे साध्यप्रसिद्धिवत् सामान्यमुखेन व्याप्तिबलाद्यत्र कुत्रचिद्वस्तुनि साध्यप्रसिद्धिं कृत्वाऽनुमितिर्निर्वाह्येति उपस्कारकाराशयः।

(३) स्वरूपत इति। सूत्रस्थरूपादिपदानां तद्विशेषपरत्ववत् स्नेहपदस्य न विशेषपरत्वं किन्तु यथाश्रुतस्नेहपरत्वमिति भावः॥

(४) अभावादिति। रूपादिचतुष्टयघटिततत्तल्लक्षणमव्याप्तमित्यर्थः।

तया कार्य्यतानवच्छेदकत्वात् तस्मान्नेदकाभावाद् जलं न भिद्यत इति, चेन्मैवम् अभास्वरशुक्लमात्ररूपस्यैव तद्भेदकत्वात् कालिन्दीजलादौ नैल्यस्याश्रयोपाधिकत्वात् वियद्विकीर्णकालिन्दीजले धावल्यस्योपलम्भात् । तेना(१)भास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् अपां लक्षणम्। रसोऽपि मधुर एव जम्बीरकरवीररसाम्ल्यतैक्त्यादेः पार्थिवोपाधिकत्वात्। जले माधुर्य्यं नानुभूयत एवेति चेन्न कषायद्रव्यभक्षणानन्तरं तदभिव्यक्तेः। न च हरीतक्या एव तन्माधुर्य्यं जलाभिव्यङ्ग्यम् तत्र कषायरसस्यैवोपलम्भात् हरीतक्यामामलक्यामिव कषाय एव रसः तत्रैवानुभावत् । न च (२)गुणविरोधेन तत्र रसानारम्भः। अवयवानामपि तत्र कषायरसवत्त्वात् षड्रसत्वप्रवादस्तु तत्तद्रसकार्य्यकारित्वनिबन्धनः। चित्ररसस्तु प्रमाणाभावादेव निरस्तः(३) चित्ररूपे तु पटोपलम्भ एव प्रमाणम् सुरभ्यसुरभ्यवयवारम्भस्तु गुणविरोधनिरस्त एव चित्रगन्धे प्रमाणाभावात् । तस्माद्धरीतकीभक्षणानन्तरं यन्माधुर्य्यमुपलभ्यते तत् जलस्यैव, उल्बणता तु द्रव्यविशेषसन्निधानाधीना श्रीखण्डसान्नियोगाज्जले शैत्योल्बणतेव । कर्कटीभक्षणानन्तरन्तु तिक्तता याऽनुभूयते सा कर्कट्या एव तदवयवे जलपानमन्तरेणापि तिक्ततोपलम्भात्, (४)रसनाग्रवर्तिपित्तद्रव्यतिक्ततायाः

(१) ननु तथापि शुक्लरूपवत्त्वलक्षणं स्फटिकादावतिव्याप्तमत आह तेनेति। पृथिव्यामतिवाप्तिवारणायाभास्वरशुक्लेतररूपासमानाधिकरणेति। जले शुक्लरूपसमानाधिकरणजलत्वस्य सत्वादसम्भववारणाय शुक्लेतरेति। तेजसि तद्वारणार्थमभास्वरपदं बोध्यम्। वायुत्वमादायातिप्रसङ्गभङ्गार्थं रूपवद्वृत्तीति। द्रव्यत्वमादाय पृथिव्यामतिव्याप्तिनिरासाय द्रव्यत्वसाक्षाद्व्याप्येति। पटत्वादिवारणाय साक्षादिति। जलघटान्यतरत्वमादाय घटादावतिव्याप्तिवारणाय जातिपदं बोध्यम्।

(२) गुणविरोधेनेति । एकत्रावयवे कषायोऽन्यत्र मधुरो रसः, एवं चावयवद्वये एकस्य रसस्याभावात्तदारब्धे द्रव्ये कथमेको रसः स्यादिति शङ्कार्थः।

(३) निरस्त इति। नानाजातीयैरसवदवयवैरारब्धेऽवयविनि रसो नास्त्येवेत्यर्थः । तत्र रसतयाऽवयवरसो गृह्यते न द्रव्यं तत्र तस्या असामर्थ्यात् अवयविनो नीरसत्वेपि क्षत्यभावादिति भावः। एवं चित्रगन्धोपि। चित्ररूपन्तु स्वीकीर्यमेवान्यथा नीलाद्यवयवानां पीताद्यारम्भे प्रतिबंधाद्धर्मिणः पीतत्वाद्यनुपपत्त्या चाक्षुषत्वानुपपत्तिः स्यादित्याशयेनाह चित्ररूपन्त्वित्यादिना । विस्तरस्तु मुक्तावल्यादौ द्रष्टव्यः।

(४) कर्कटीतिक्तताया जलमाधुर्याभिभावकत्वानङ्गीकारेप्याह रसनाग्रेति। पित्तादिदोषाक्रान्तस्य पुरुषस्य शर्करादिरसाभिभावकतिक्तरसानुभवोऽनुभवसिद्ध इति पित्तद्रव्यतिक्ततैव तादृशस्थले जलमाधुर्याभिभाविकेति भावः।

वा तत्रानुभवात् । तथाच (१)मधुरेतररसासमानाधिकरणरससमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमपां लक्षणम् । (२)एवं शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमपां लक्षणम् । मध्यन्दिने तु यदौष्ण्यं तत्तेजस एव तदन्वयव्यतिरेकानुविधानात् । एवं सांसिद्धिकद्रवत्वं स्वरूपत एव लक्षणम्(३)सांसिद्धिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं वा जलत्वम् । स्नेहस्तु गुणविशेषो न तु दुग्धत्वदधित्ववत् सामान्यविशेषः स्निग्धस्निग्धतरस्निग्धतमेति तारतम्यप्रतीतेः । न च जातौ तारतम्यं (४)सम्भवति । ननु भवतु स्नेहो गुणः स तु जले वर्तत इत्यत्र किं प्रमाणमिति चेन्न सक्तुसिकतादौ जलेन संग्रहे तदनुमानात्(५) । सङ्ग्रहो हि स्नेहद्रवत्वकारितः संयोगविशेषः स हि न द्रवत्वमात्राधीनः काचकाञ्चनद्रवत्वेन (६)सङ्ग्रहानुपपत्तेः, नापि स्नेहमात्रकारितः स्त्यानैर्घृतादिभिः सङ्ग्रहानुपपत्तेः, तस्मादन्वयव्यतिरेकाभ्यां स्नेहद्रवत्वकारितः । स च जलेनापि सक्तुसिकतादौ दृश्यमानः स्नेहं जले द्रढयति । इयञ्च प्रत्यक्षोपष्टम्भिकैव युक्तिः स्नेहस्य प्रत्यक्षत्वात् ।(७)घृतादौ तु स्नेह उपष्टम्भकजलनिष्ठः संयुक्तसमवायेन तद्गततया भानात् । एवं तैलरसादिष्वपि । उपष्टम्भकश्चातिशयितस्नेहमेव जलम्, स्नेहाधिक्यादेव तस्य जलस्य नानलविरोधित्वम् । (८)यदि पृथिवीविशेषगुणः स्नेहः

---

(१) मधुरेतरेति । अत्रापि पूर्ववत्पदव्यावृत्तिः सर्वत्र जातिघटितलक्षणे बोध्या । गुडादौ अतिव्याप्तिवारणाय साक्षात्पदम् गुडादिपृथिव्यामतिव्याप्तिवारणायैव जातिघटितस्यास्य लक्षणस्य स्वीकृतत्वात् ।

(२) कुत्रचिदशीतजलेऽव्याप्तिवारणाय शीतस्पर्शवत्त्व इति लक्षणस्यापि जातिपरत्वमाह एवं शीतेति ।

(३) ननु उत्पत्तिकालावच्छेदेन जले सांसिद्धिकद्रवत्वस्याभावाज्जलेऽव्याप्तमिदं लक्षणमत आह सांसिद्धिकद्रवत्ववदिति ।

(४) सम्भवतीति । नित्यस्य जातिपदार्थस्य तरतमभावानुपपत्तेरित्यर्थः ।

(५) जलं स्नेहवत् सक्त्वादिसंग्रहात् इत्यनुमानप्रकारात् ।

(६) संग्रहानुपपत्तेः = सङ्ग्रहाभावात्, द्रवत्वमात्राधीनत्वे काचकाञ्चनद्रवत्वेन काचकाञ्चनयोः संग्रहः स्यादिति भावः ।

(७) ननु स्नेहवत्त्वलक्षणमतिव्याप्तं घृतादिपृथिव्यां तत्सत्त्वादत आह घृतादाविति ।

(८) ननु स्नेहस्य जलवृत्तित्वमात्राङ्गीकारे घृतवृत्तित्वोपपादनार्थं परम्परा कल्प्या तदपेक्षया तस्य पृथिवीगुणत्वमेव कुतो नाङ्गीक्रियत इत्यत आह यदीति ।

स्यात् सर्वपार्थिववृत्तिः स्यात् गन्धवत्। जलत्वं च द्रव्यत्वसाक्षाद्व्याप्यजातिः (१)स्नेहवन्मात्रवृत्तिसंयोगसमवायिकारणतावच्छेदिकाया जातेः परमाणुसाधारण्येन सिद्धत्वात् ॥ २ ॥

उद्देशक्रमानुरोधेन तेजोलक्षणमाह-

## तेजो रूपस्पर्शवत् ॥ ३ ॥

रूपं भास्वरं स्पर्शश्चोष्णस्तद्वत्तेज इत्यर्थः। ननु भास्वरत्वं परप्रकाशकत्वं तादृशश्च रूपं नोष्मणि न वा चामीकरस्थे भर्जनकपालस्थे वारिस्थे वा तेजसि, शुक्लश्च रूपमुक्तेषु न क्वापि, उष्णश्च स्पर्शो न चान्द्रे न वा चामीकरे तत् कथमेतदिति चेन्न उष्मादौ तेजस्त्वेन भास्वररूपानुमानात्(२)। तेजस्त्वमेव तत्र स्वरूपासिद्धमिति चेन्न उष्णस्पर्शवत्त्वेन तदनुमानात्। चामीकरे कथमिति चेत् तत्र भास्वररूपाभावेऽपि अत्यन्तानलसंयोगेनानुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वेन व्यतिरेकिणा तेजस्त्वानुमानादिति वक्ष्यमाणत्वात्, भर्जनकपालादिनिष्ठे चोष्णस्पर्शवत्त्वेन तेजस्त्वानुमानात्। चतुर्विधं हि तेजः किञ्चिदुद्भूतरूपस्पर्शं यथा सौरादि, किञ्चिदुद्भूतरूपमनुद्भूतस्पर्शं यथा चान्द्रम्, किञ्चिदनुद्भूतरूपस्पर्शं यथा नायनम्, किञ्चिदनुद्भूतरूपमुद्भूतस्पर्शं यथा नैदाघं वारिभर्जनकपालादिगतश्च तेजः। नायनमग्रे साधयिष्यते ॥ ३ ॥

क्रमप्राप्तं वायुलक्षणमाह-

## स्पर्शवान् वायुः ॥ ४ ॥

(३)रूपासमानाधिकरणस्पर्शसमानाधिकरणजातिमत्त्वम्१ रसासमानाधिकरणानुष्णाशीतस्पर्शसमानाधिकरणजातिमत्त्वम्२ गन्धासमानाधिकरणानुष्णाशीतस्पर्शसमानाधिकरणजातिमत्त्वम्३ स्पर्श-

(१) जलपरमाणौ स्नेहसमवायिकारणताया असत्त्वात्स्नेहवन्मात्रवृत्तिसंयोगपर्यन्तानुधावनम्। नव्यास्तु स्नेहसमवायिकारणतावच्छेदकत्वेन जन्यजलत्वसिद्धौ तदवच्छिन्नजनकतावच्छेदकतया जलत्वसिद्धिरिति वदन्ति।

(२) ऊष्मा भास्वररूपवान् तेजस्त्वात्प्रदीपवत् इति अनुमानप्रयोगः। ननु स्वरूपासिद्धोयं हेतुरतआह उष्णस्पर्शवत्त्वेनेति। ऊष्मा तेजः उष्णस्पर्शवत्त्वाद्वह्निवत् इत्यनेन तेजस्त्वसिद्धेरव्याहतत्वात्।

(३) पृथिव्यादावतिव्याप्तिवारणाय सर्वत्र लक्षणेऽसमानाधिकरणान्तम् विशेषणम्। आत्मन्यतिव्याप्तिवारणाय च सर्वत्र समानाधिकरणान्तं बोध्यम्। द्वितीयलक्षणे तेजस्यतिप्रसङ्गभङ्गायानुष्णाशीतेति स्पर्शविशेषणम्। तृतीयलक्षणे जलेऽतिव्याप्तिवारणायानुष्णपदं स्पर्श-

तरविशेषगुणासमानाधिकरणविशेषगुणसमानाधिकरणजातिमत्त्वं वा वायुलक्षणम् ॥ ४ ॥

नन्वाकाशकालदिगात्मनामपि रूपादिमत्त्वं कथं न लक्षणमत आह–

**त आकाशे न विद्यन्ते ॥ ५ ॥**

अत्र विदिरुपलब्धिवचनः नोपलभ्यन्ते यतोऽतो न ते रूपादयो (१)नियोगतः–समुच्चयतो विकल्पतो वा वर्तन्ते नभःप्रभृतिषु द्रव्येष्वित्यर्थः । ननु दधिधवलमाकाशमिति कथं प्रतीतिरिति चेन्न मिहिरमहसां विशदरूपाणामुपलम्भात्तथाभिमानात् । कथं तर्हि नीलं नभ इति प्रतीरिति चेन्न सुमेरोर्दक्षिणादिशमाक्रम्य स्थितस्येन्द्रनीलमयशिखरस्य प्रभामालोकयतां तथाभिमानात् । यत्तु सुदूरं गच्छच्चक्षुः परावर्तमानं स्वचक्षुःकनीनिकामाकलयत्तथाभिमानं जनयतीति मतं तदयुक्तम् (२)पिङ्गलसारनयनानामपि तथाभिमानात् । इहेदानीं रूपादिकमिति–प्रत्ययात् दिक्कालयोरपि रूपादिचतुष्कमिति चेन्न समवायेन पृथिव्यादीनां तल्लक्षणस्योक्तत्वात् न तु सम्बन्धान्तरेणापि इहेदानीं रूपात्यन्ताभाव इत्यपि प्रतीतेः सर्वाधारतैव दिक्कालयोः ॥ ५ ॥

नन्वपां द्रवत्वं लक्षणमुक्तं तदयुक्तम् पृथिव्यामपि द्रवत्वोपलम्भादित्यत आह–

**(३)सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ॥ ६ ॥**

सर्पिरादीनां यद्द्रवत्वमस्ति तदग्निसंयोगनिमित्तात् न तु सांसिद्धिकम् तादृशञ्चापां लक्षणम् द्रवत्वमात्रन्तु पृथिव्या अद्भिः सामान्यं न तु सांसिद्धिकं द्रवत्वमपीति नातिव्याप्तिरित्यर्थः ॥ ६ ॥

---

विशेषणम् । मनस्यतिव्याप्तिनिरासार्थमन्त्यलक्षणे विशेषगुणपर्यन्तानुधावनम् । लक्षणचतुष्टयमपि निरवद्यत्वात्संभवति न काप्यरुचिर्लक्षणान्तरग्रहणे इति बोध्यम् ।

(१) नियोगत इति । नियोगत इत्यस्य विवरणं समुच्चयतो विकल्पतो वेति । उभयथापि रूपादय आकाशादौ न वर्तन्ते इत्यर्थः ।

(२) पिङ्गलेति । तत्र कनीनिकानीलरूपाभावान्नीलप्रतीतिर्न स्यादिति भावः ।

(३) सर्पिरिति । सर्पिर्घृतं जतु लाक्षा मधूच्छिष्टं सिक्थकम् ।

ननु तथापि त्रपुसीसलोहादौ तेजसि गतत्वेन तदवस्थैवातिव्याप्तिरित्यत आह—

**त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ॥ ७ ॥**

उपलक्षणञ्चैतत् ;कांस्यताम्रार(१)कूटपारदादीनामप्युपसङ्ग्रहः। (२)शक्यलक्ष्यसाधारणश्च अत्यन्ताग्निसंयोगानुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वमेव तथाच सुवर्णादीनामपि द्रवत्वं नैमित्तिकमेव निमित्तस्याग्निसंयोगस्यान्वयव्यतिरेकासिद्धत्वात्,परन्तु पूर्वसूत्रेऽग्निपदमौष्ण्यप्रकर्षवत्तेजःपरम्, इह तु वह्निपरमिति विशेषः। ननु सुवर्णादीनामपि पार्थिवत्वमेव द्रव्यान्तरत्वं वा पीतिमगुरुत्वादेः पार्थिवत्वव्यवस्थापकत्वाद् द्रवत्वानुच्छेदस्य पृथिवीवैधर्म्यस्याप्यनुभवात् द्रव्यान्तरत्वव्यवस्थापकत्वादिति चेन्न सुवर्णं तैजसम् अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवं यथा पृथिवीति व्यतिरेकिणा तैजसत्वसिद्धेः। न च जलपरमाणौ विरुद्धता द्रवत्वस्यानित्यत्वेन विशेषणीयत्वात्। न च (३)प्रदीपादेः सपक्षाद्धेतोर्व्यावृत्तेरसाधारण्यम् सुवर्णं (४)न पार्थिवमिति साध्यार्थत्वात्। न चात्र गुरुत्वाधारस्य पक्षत्वे बाधः तदतिरिक्तस्य पक्षत्वे चाश्रयासिद्धिः, (५)द्रवत्वाधिकरणत्वेन पक्षत्वात्। न चात्यन्तिक-

---

(१) आरकूटं पित्तलमित्यर्थः।

(२) शक्येति। सूत्रस्थत्रप्वादिशक्यकांस्यादिलक्ष्यसाधारणश्च धर्मं अत्यन्ताग्निसंयोगानुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वमित्यर्थः। द्रव्यस्याश्रयभेदेन भिन्नत्वेपि अधिकरणताया निरूपकतावच्छेदकैक्येनैक्यादधिकरणतान्तानुधावनम् बोध्यम्।

(३) प्रदीपादेरिति। आदिपदेन विपक्षभूतपृथिव्यादेर्ग्रहणम् तथा च सपक्षविपक्षव्यावृत्तत्वाद्धेतोरसाधारण्यामित्यर्थः।

(४) उत्तरयति न पार्थिवमिति। एतत्साध्यपक्षे जलपरमाणौ न विरोधः। तथा चानित्यत्वविशेषणं व्यर्थमिति भावः। हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमसाधारण्यमिति नव्यमते तु तैजसत्वसाध्यकमेवानुमानं तत्र चोक्तविरोधवारणायानित्यत्वं देयमेवेति भाव:। जलमध्यस्थघृते व्यभिचारं निरसितुमसति प्रतिबन्धके इत्यपि हेतौ विशेषणं देयम्। घृतादौ तद्वारणाय अत्यन्ताग्निसंयोगेपीति। न चैवं साध्ये सुवर्णस्य द्रव्यान्तरत्वं स्यादिति वाच्यम् न पार्थिवं न जलीयमित्यादिना तत्तद्द्रव्यभेदसिद्धौ परिशेषात्तैजसत्वसिद्धेर्द्रव्यान्तरत्वासंभवात् इति भावः।

(५) द्रवत्वेति। अत्यन्ताग्निसंयोगेऽनुच्छिद्यमानद्रवत्वाधिकरणत्वेत्यर्थः। एतेनावच्छेदावच्छेदेनानुमितावपि नांशतो बाध इति ध्येयम्।

त्वं दुर्वचम्, प्रहरपर्य्यन्तमग्निसंयोगेऽप्यनुच्छिद्यमानानित्यद्रवत्वाधिकरणत्वादिति विवक्षितत्वात् । न च तरतमादिप्रत्ययादाश्रयनाशाच्च द्रवत्वनाशोऽप्यवश्यं वाच्य इति वाच्यम् (१)समानाधिकरणद्रवत्वसामग्र्यसमवहिताग्निसंयोगजन्यध्वंसप्रातियोग्यवृत्तिद्रवत्वसामान्यवद्द्रवत्ववत्त्वादित्यस्य हेत्वर्थत्वात् । (२)यद्वा पीतिमगुरुत्वाश्रयः पीतरूपभिन्नरूपप्रतिबन्धकद्रवद्द्रव्यसंयुक्तः प्रहरपर्य्यन्तमनलसंयोगेऽपि पीतरूपभिन्नरूपानाश्रयत्वात् अनलसंयुक्तजलमध्यस्थितपीतपटवत् । ननु चान्धकारे सुवर्णरूपग्रहापत्तिस्तदानीं तद्रूपस्याभिभवाभावात् बलवत्सजातीयग्रहणकृतस्याग्रहणस्याभिभवपदार्थत्वात् इति चेत् तत्र फलबलेन (३)बलवत्सजातियसम्बन्धमात्रस्याभिभवपदार्थत्वात् । तदुक्तम्—

भूसंसर्गवशाच्चान्यरूपं नैव प्रकाशते ॥

इति दिक् ॥ ७ ॥

एवं स्पर्शवद्द्रव्यचतुष्कलक्षणप्रकरणं समाप्य वायोर्लक्षणमाश्रयासिद्धमिति तत्परिजिहीर्षया आदावनुमानं प्रमाणमुपन्यस्यानुमानस्यैव प्रथमं दृष्टानुसारेण प्रामाण्यमुपपाद्य वायुसाधनप्रकरणमारभते--

**(४)विषाणी ककुद्मान् प्रान्तेबालधिः सास्नावान् इति गोत्वे दृष्टं लिङ्गम् ॥ ८ ॥**

---

(१) समानेति । पार्थिवद्रवत्ववृत्तिर्यो द्रवत्वत्वाविशेषोऽग्निसंयोगजन्यध्वंसप्रतियोगिनि काठिनावधौ द्रवत्वे वर्तते स चाग्निसंयोगस्समानाधिकरणद्रवत्वसामग्र्यसमवहितोऽन्यथा तदुत्तरं तत्र द्रवत्वमुत्पद्येत, सौवर्णद्रवत्वत्वस्योक्तध्वंसप्रतियोगिन्यवृत्तित्वात्तदाधिकरणतेजोभागे न व्यभिचारः । कालान्तरावच्छेदेन सर्वस्याग्निसंयोगस्य व्याधिकरणद्रवत्वसामग्रीसमवहितत्वादसिद्धिवारणाय समानाधिकरणेति । सौवर्णद्रवत्वस्यापि तरतमादिप्रत्ययवशादाश्रयनाशाच्चाग्निसंयोगनाश्यत्वादसिद्धिवारणायासमवहितान्तमग्निसंयोगविशेषणम् ।

(२) ननु पक्षतावच्छेदकहेत्वोरैक्ये सामानाधिकरण्येन सिद्धिः स्यात् तस्याश्चावच्छेदावच्छेदेनानुमितिप्रतिबन्धकत्वमतसाधारण्येनाह यद्वेति । साध्यघटकतादृशद्रवद्द्रव्यं तेज एवेत्यर्थः ।

(३) बलवदिति । बलवत्सजातीयं यत्पार्थिवीरूपं तेन सम्बन्धः स्वसमवायिसंयुक्तसमवेतत्वं तस्य सुवर्णरूपे सत्त्वादन्धकारे सुवर्णरूपाग्रह इत्यर्थः ।

(४) ननु स्पर्शवान् वायुरिति लक्षणमनुपपन्नं लक्ष्यस्य वायोरेवासिद्धत्वात् नहि तत्र प्रत्यक्षं प्रमाणं रूपाभावादित्यतस्तत्रानुमानं प्रमाणं दर्शयितुमादावनुमानप्रामाण्यं दृढयति विषाणीति । य-

यथा गोत्वं प्रति विषाणादीनि लिङ्गानि गृहीतव्याप्तिकानि तथाऽतीन्द्रियवाय्वादिद्रव्यपञ्चकलिङ्गान्यपि सामान्यतो दृष्टानि प्रमाणभावमासादयन्तीति भावः। अत्र यद्यपि विषाणित्वमात्रं न गोत्वे लिङ्गं महिषादौ व्यभिचारात्, न च सास्नादिमत्त्वं विशेषणम् विशेष्यस्य व्यर्थत्वापत्तेः तथापि गोविषाणे महिषमेषादिविषाणापेक्षया वैलक्षण्यमाकलयतां धूम इव ते ते विशेषा लिङ्गभावमासादयन्त्येव विषाणेष्वपि ऋजुत्ववक्रत्वकाठिनत्वसुकुमारत्वह्रस्वत्वदीर्घत्वादयः। ते च विशेषाः निपुणतरवेद्याः सन्त्येव तथाच व्यवहितविप्रकृष्टगोपिण्डे अयं गौर्विषाणविशेषवत्त्वात् पूर्वानुभूतगोपिण्डवदित्यनुमानमप्रत्यूहमेव। एवं ककुद्मत्तापि लिङ्गं गोत्वे। प्रान्तेवालधिमत्त्वमपि स्वतन्त्रमेव लिङ्गं गोत्वे, प्रान्ते वाला आधीयन्तेऽस्मिन्निति प्रान्तेवालधिः—पुच्छविशेषः अलुक्समासात् गोपुच्छ एवान्तेवालधिशब्देनोच्यते, न हि यथा गोपुच्छेषु प्रान्तेवालधित्वं तथाऽश्वमेषादिपुच्छेषु, तेषां सामस्त्येन वालमयत्वात्, महिषादिपुच्छे तादृशी प्रलम्बता नास्तीति वैलक्षण्यात्। अन्तेवालधिमत्त्वमपि गोत्वे लिङ्गं मतुब्लोपात् गोपिण्ड उच्यते, तथाचायं गौः प्रान्तेवालधिमत्त्वात् पूर्वानुभूतगोपिण्डवत्। सास्नावत्ता तु प्रसिद्धैव गोत्वे लिङ्गम्॥ ८॥

एवं सकललोकयात्रावाहिनोऽनुमानस्य दृष्टानुसारेण प्रामाण्यमभिधाय वायुसाधनप्रकरणमारिप्समान आह—

स्पर्शश्च वायोः॥ ९॥

लिङ्गमिति शेषः। चकारात् शब्दधृतिकम्पाः समुच्चीयन्ते। ननूपलभ्यमानस्पर्शः पृथिव्या एवानुद्भूतरूपायाः स्यादिति चेन्न उद्भूतस्य पृथिवीस्पर्शस्योद्भू(१)तरूपनान्तरीयकत्वात्। तथाच (२)यो-

था गोत्वे विषाणादीनि लिङ्गानि सामान्यतो दृष्टानि लोकप्रसिद्धानि तथाऽतीन्द्रियवायौ स्पर्शादीनि लिङ्गानि प्रमाणानीति सूत्रद्वयार्थः। अत्रायमनुमानप्रयोगः अयं गौर्विषाणविशेषवत्त्वात् ककुद्मत्त्वात्, पुच्छविशेषवत्त्वात्, सास्नावत्त्वाद्वा पूर्वानुभूतगोपिण्डवत् इति।

(१) उद्भूतेति। उद्भूतरूपनान्तरीयकत्वादुद्भूतरूपव्याप्यत्वादुद्भूतस्पर्शस्येत्यर्थः।

(२) योयमिति। अनेन पृथिव्याद्यसमवेतस्पर्शस्य पक्षत्वं सूचितम् तेन सिद्धसाधनाशंका दूरीकृता इदमेव न पृथिव्यादित्रयात्मक इत्याद्यनुमानेन उपस्कारकार अनुपदमेवाहेति भावः।

ऽयं स्पर्शोऽनुभूयते स क्वचिदाश्रितः स्पर्शत्वात् पृथिव्यादिस्पर्शवादीति सामान्यतोदृष्टेन स्पर्शाश्रयसिद्धौ स्पर्शाश्रयो न पृथिव्यादित्रयात्मकः नीरूपत्वात् नाकाशादिपञ्चात्मकः स्पर्शवत्त्वादितीतरबाधसहकृते नाष्टद्रव्यातिरिक्तद्रव्यसिद्धिः। एवं शब्दविशेषोऽपि वायौ लिङ्गम्, तथाहि (१)असति रूपवद्द्रव्याभिघाते योऽयं पर्णादिशब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्याभिघातनिमित्तकः अविभज्यमानावयवद्रव्यसम्बन्धिशब्दसन्तानत्वात् दण्डाभिघातजभेरीशब्दसन्तानवत्। रूपवद्द्रव्याभिघातव्यतिरेकस्तु योग्यानुपलब्धिगम्यः। तच्च स्पर्शवद्वेगवद्द्रव्यमष्टद्रव्यातिरिक्तमेव परिशेषात्(२)। एवं धृतिविशेषोऽपि वायोर्लिङ्गम् तथाहि तृणतूलस्तनयित्नुविमानानां नभसि धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगजा चेतनानधिष्ठितद्रव्यधृतित्वात् प्रवाहे तृणकाष्ठनौकादिधृतिवत् । (३)अभिध्यानकृतविषादिधृतौ च अस्मदाद्यधिष्ठानमेव। एवं पक्षिकाण्डादिधृतावपि । न चेश्वराधिष्ठितत्वेन हेतुविशेषणासिद्धिः चेतनपदेन तदितरस्य विवक्षितत्वात् । एवं कम्पोऽपि वायुसत्त्वे लिङ्गम् तथाहि इदं रूपवद्द्रव्याभिघातमन्तरेण तृणादौ कर्म स्पर्शवद्वेगवद्द्रव्याभिघातजं (४)गुरुत्वप्रयत्नवदात्मसंयोगाजन्यकर्मत्वात् नदीपूराहतवेतसवनकर्मवदिति । गुरुत्वपदेनादृष्टवदात्मसंयोगद्रवत्वसंस्काराणामुपग्रहः तेन तदजन्यकर्मत्वं हेतुः। ननु प्रत्यक्ष एव वायुः किमत्र लिङ्गगवेषणयेति चेन्न वायुर्न प्रत्यक्षः नीरूपबहिर्द्रव्यत्वात् गगनवदित्यनुमानादतीन्द्रियत्वस्यैव सिद्धेः । ननु वायुः प्रत्यक्षः स्पर्शाश्रयत्वाद् घटवदिति प्रत्यक्षत्वानुमानमिति चेन्न उद्भूतरूपवत्त्वस्यात्रोपाधित्वात् । न च रूपादावात्मनि च

---

(१) असतीति । इदं पृथिव्याद्यभिघातजन्यस्पर्शे व्यभिचारवारकं पक्षविशेषणम्। वंशस्फोटनजन्येऽवयवद्वयजन्यशब्दे व्यभिचारवारणाय हेतौ अविभज्यमानावयवेति ।

(२) परिशेषादिति । स्पर्शवद्वेगवद्द्रव्यं न पृथिव्याद्यात्मकं नीरूपत्वादित्यादिपूर्वोक्तरीत्या परिशेषानुमानं बोध्यम् ।

(३) चेतनानधिष्ठितपदस्य फलमाहाभिध्यानेति । एवमिति । वृक्षेपि भग्नक्षतसंरोहणाद्यनुमितप्राणवत्तया चेतनत्वस्य शास्त्रोक्तत्वान्नाकाशे तत्काण्डधृतौ व्यभिचार इत्यर्थः ।

(४) गुरुत्वेति । पतनक्षेपणादिकर्मतु व्यभिचारनिरासायाजन्यान्तं हेतौ विशेषणम् । अत्र स्तेनाकर्षककांस्यादिकर्तृकतस्कराभिमुखगमनादिकर्मसु व्यभिचारवारणाय गुरुत्वपदं लक्षणयाऽदृष्टवदात्मसंयोगादिपरं बोध्यन्तदेवाह गुरुत्वपदेनेति ।

साध्याव्यापकमेतत्, (१)पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नस्य साधनधर्मावच्छिन्नस्य वा साध्यस्य व्यापकत्वात्। न च चाक्षुषप्रत्यक्षत्वे (२)तत्तन्त्रं तत्रैव तदन्वयव्यतिरेकानुविधानात् स्पार्शनप्रत्यक्षत्वे तु योग्यस्पर्शवत्तामात्रस्य तन्त्रतेति वाच्यम् रूपान्वयव्यतिरेकयोरुभयत्रापि तन्त्रत्वात्, न (३)ह्युभयसिद्धस्पर्शेनैव प्रत्यक्षता रूपस्य ग्रहमन्तरेण दृष्टा। (४)किञ्च यदि वायुः प्रत्यक्षः स्यात् सङ्ख्यादिसामान्यगुणोपलम्भेऽपि तन्त्रं स्यात्। नन्वस्त्येव फूत्कारादौ सङ्ख्यायाः परिमाणस्य च हस्तवितस्त्यादेः उभयपार्श्ववर्त्तिनोर्वाय्वोः पृथक्त्वस्य च परत्वापरत्वयोश्च प्रत्यक्षता वायुजातीयस्य व्यक्तिपरतया तु न तवापि नियमः पृष्ठलग्नवस्त्रादौ तदनुपलम्भादिति चेन्न व्यक्तिपरतयैव नियमात् पृष्ठलग्नवस्त्रादौ चार्जवावस्थाने सङ्ख्यादीनां ग्रहणात्, अनार्जवावस्थानदोषात्तु तदग्रहः। (५)उद्भूतरूपस्पर्शौ मिलितावेव बहिर्द्रव्यप्रत्यक्षत्वे तन्त्रे प्रभाया नयनगतपीतद्रव्यस्य चन्द्रमहसश्च स्पर्शानुद्भवादप्रत्यक्षत्वम् निदाघोष्मणोर्विभक्तावयवाप्यद्रव्याणाञ्च रूपानुद्भवादप्रत्यक्षत्वमिति न्यायवार्त्तिकतात्पर्यटीकाकृतः। (६)स्पर्शानुद्भवेऽपि प्रभादीनां प्रत्यक्षतैव अत एव चान्द्रालोके नभसि पक्षिकाण्डादिसंयोगविभागयोः प्रत्यक्ष-

---

(१) पक्षधर्मेति। स श्यामो मित्रातनयत्वादित्यादौ शाकपाकजन्यत्वरूपोपाधावव्याप्तिवारणाय तस्यावश्यकत्वादित्यर्थः।

(२) तत्तन्त्रमिति। उद्भूतरूपं चाक्षुषप्रत्यक्ष एव हेतुरित्यर्थः।

(३) उभयसिद्धेति। प्राचीननवीनमतसिद्धस्पर्शस्य स्पार्शनप्रत्यक्षे कारणत्वेपि रूपस्यापि कारणत्वं बोध्यमिति प्राञ्चः। एवञ्च तन्मते बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपस्य हेतुत्वमिति भावः।

(४) ननु स्पर्शस्य हेतुत्वमेव बहिर्द्रव्यप्रत्यक्षे कुतो नाङ्गीक्रियते प्रभां पश्यामीतिवत् वायुं स्पृशामीत्यनुभवस्यापलपितुमशक्यात्वत्तथाच बहिर्द्रव्यप्रत्यक्षमात्रे न रूपं कारणमित्यतो दोषान्तरमाह किञ्चेति।

(५) ननु रूपस्य बहिर्द्रव्यप्रत्यक्षे कारणत्वे प्रभायाः संख्यादिज्ञानापत्तिः, स्पर्शस्य तत्त्वे वायुगतसंख्यादिपरिच्छेदापत्तिस्तथा च किं कारणमित्यत्र विनिगमनाविरह इत्यत्रोद्योतकरवाचस्पतिमिश्रयोर्मतमाह उद्भूतरूपस्पर्शाविति।

(६) वायुप्रत्यक्षानङ्गीकर्तृप्राचीनमतमाह स्पर्शानुद्भवेपीति। नव्यास्तु प्रभेव वायुप्रत्यक्षस्याप्यनुभवसिद्धतया रूपस्पर्शयोर्न कस्यापि कारणत्वम्। बहिर्द्रव्यप्रत्यक्षमात्रे किं कारणमिति चेन्न किञ्चित्। आत्मावृत्तिशब्दान्यविशेषगुणवत्त्वं वा प्रयोजकमस्तु वायुप्रभयोः संख्याद्यप्रत्यक्षं क्वचिद्दोषादित्याहुः।

तैवेति सम्प्रदायविदः। न चोद्भूतस्पर्शवत्त्वं सामान्यतो वहिर्द्रव्यप्रत्यक्षताप्रयोजकमिति वाच्यम्, इन्द्रनीलप्रभाया अप्रत्यक्षतापत्तेः । न चोद्भूतविशेषगुणवत्त्वमेव तन्त्रम् आकाशस्यापि प्रत्यक्षतापत्तेः । न च जन्यमहत्त्वसमानाधिकरणोद्भूतविशेषगुणवत्त्वं तथा रसनाग्रवर्त्तिपित्तद्रव्यस्य तैक्ष्ण्योद्भवेऽप्यप्रत्यक्षत्वात्, तस्मादुद्भूतरूपवत्त्वमेवात्मेतरद्रव्यप्रत्यक्षतातन्त्रम् तच्च वायौ नास्तीत्यप्रत्यक्षो वायुः ॥९॥

ननु प्रत्यक्षतो दृष्टमिह लिङ्गं नास्ति न हि वह्निधूमयोरिवेह प्रत्यक्षेण व्याप्तिग्रहः । किञ्च पृथिव्याद्यन्यतमस्यैव स्पर्शोऽप्ययं भविष्यतीत्यत आह—

**न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥ १० ॥**

अयं स्पर्शो यः पक्षः क्रियते स दृष्टानां पृथिव्यप्तेजसां न भवति रूपासहचरत्वात्, तथाचायं स्पर्शः क्वचिदाश्रित इत्यनुमेयमित्यदृष्टलिङ्गः । सामान्यतोदृष्टलिङ्गोऽपि पक्षधर्मताबलादायात इत्यर्थः । यद्यपि दृष्टमेव स्पर्शादिचतुष्कं लिङ्गमिति तथापि वायुना सहागृहीतव्याप्तिकत्वाददृष्टलिङ्गत्वमुक्तम् न ह्ययं धर्मी वायुरिति प्रतिज्ञाय वायुः साधयितुं शक्यते, तथाच सामान्यतोदृष्टादेवेतरबाधसहकृताद्वायुसिद्धिरिति भावः ॥ १० ॥

उपलभ्यमानस्पर्शाश्रयमवयविनं साधयित्वा परमाणुलक्षणं वायुं साधयितुमाह—

**अद्रव्यवत्त्वेन द्रव्यम् ॥ ११ ॥**

द्रव्यमाश्रयभूतमस्यास्तीति द्रव्यवत् न द्रव्यवत् अद्रव्यवत् द्रव्यानाश्रितमित्यर्थः । (१)तथा चाकाशवत् परमाणुलक्षणो वायुर्द्रव्यम् अन्येषां पदार्थानां द्रव्याश्रितत्वात् । आश्रितत्वञ्चान्यत्र नित्यद्रव्येभ्य इत्यभिधानात् परमाणुभ्यां द्व्यणुकारम्भात् द्व्यणुकादिप्रक्रमेणावयविनो महत आरम्भस्योपपादनीयत्वादिति ॥ ११ ॥

वायुपरमाणोर्द्रव्यत्वसाधकं हेतुद्वयं समुच्चिन्वन्नाह—

---

(१) तथा चेति । अत्रायं प्रयोगः परमाणुरूपो वायुर्द्रव्यं द्रव्यानाश्रितत्वादाकाशवत् इति । एतेन द्रव्यासमवेतत्वेन हेतुना परमाणावद्रव्यत्वसाधने द्रव्यत्वव्याप्यावयवत्वनिवृत्तौ परमाणुसाधकानुमाने बाध इति निरस्तम् तद्धेतोराकाशे व्यभिचारात् ।

८

(१)क्रियावत्त्वाद् गुणवत्त्वाच्च ॥ १२ ॥

वायुपरमाणुर्द्रव्यमिति शेषः । यद्यपि द्रव्यत्वे सिद्धे क्रियावत्त्वं गुणवत्त्वञ्च सिध्यति तत्सिद्धौ च द्रव्यत्वसिद्धिरित्यन्योन्याश्रयः तथाप्युपलभ्यमानस्पर्शाश्रयस्यावयविनो मूलभूतस्य परमाणोरसमवायिकारणसंयोगान्यथानुपपत्त्या क्रियावत्त्वम्, अवयविस्पर्शरूपादेः कारणगुणपूर्वकत्वनियमाद् गुणवत्त्वञ्च सिद्धं ताभ्याञ्च द्रव्यत्वमित्यदोषः । तत्र क्रियावत्त्वं (२)सपक्षैकदेशवृत्ति गुणवत्त्वञ्च सपक्षव्यापकम् । चकारात् समवायिकारणत्वं द्रव्यत्वसाधकं समुच्चिनोति । ननु परमाणावेव न प्रमाणं कस्य द्रव्यत्वं साध्यत इति चेन्न स्थूलकार्य्यस्य क्रियाविभागादिन्यायेन भज्यमानस्याल्पतरतमादिभावात् यतो नाल्पीयः स एव परमाणुः । अवयवावयविप्रसङ्गस्यानवधित्वे अनन्तावयवत्वाविशेषे सुमेरुसर्षपादीनां परिमाणाविशेषापत्तिः कारणसंख्याविशेषमन्तरेण परिमाणप्रचययोरपि परिमाणभेदं प्रत्यतन्त्रत्वात् । न च विनाशावधिरेवायम् अवयवावयविप्रसङ्गः अन्त्यस्य निरवयवत्वेन विनाशानुपपत्तेः सावयवत्वे च निरवधित्वापत्तेस्तत्र च दोषस्योक्तत्वात् । ननु त्रुटिरेवावधिर्दृश्यमानत्वाददृश्यमानकल्पनायां मानाभावादिति चेन्न तस्य चाक्षुषद्रव्यतया महत्त्वानेकद्रव्यत्वयोरावश्यकत्वात् (३)तस्मात् त्रसरेण्ववयवावयव एव परमाणुर्यथा पृथिव्यादौ तथा वायावपीति सिद्धो वायुपरमाणुः ॥ १२ ॥

(४)ननु क्रियावत्त्वाद् गुणवत्त्वाच्च घटादिवत् परमाणोरानित्यत्वमनुमेयमत आह—

अद्रव्यत्वेन नित्यत्वमुक्तम् ॥ १३ ॥

---

(१) ननु द्रव्यासमवेतत्वस्य व्यभिचरितत्वेपि निष्क्रियत्वेन निर्गुणत्वेन च द्रव्यत्वाभावः साधनीय इत्याशंक्य द्रव्यत्वसाधनमुखेनोक्तहेत्वोः स्वरूपासिद्धिं प्रदर्शयन्नाह क्रियावत्त्वाद्गुणवत्वादिति सूत्रेण । (२) सपक्षेति । गगने तदभावादित्यर्थः ।

(३) तस्मादिति । तथा च त्रसरेणुः सावयवः चाक्षुषत्वाद्घटवदित्यनुमानेन द्व्यणुकसिद्धौ द्व्यणुकः सावयवः महदारम्भकत्वात्कपालवदित्यनुमानेन परमाणुसिद्धिः इत्यर्थः ।

(४) ननु क्रियावत्त्वं गुणवत्त्वञ्च द्रव्यत्वसाधकं हेतुद्वयं स्वरूपासिद्धमन्यथा तेनैव घटादिकं निदर्शनीकृत्यानित्यत्वमपि परमाणोः स्यादित्याशंक्य समाधत्ते नन्वित्यादिना । तथाचानित्यत्वसाधकक्रियावत्त्वादेः सोपाधिकत्वेन तदपेक्षया द्रव्यत्वेन निरुपाधिकेन नित्यत्वमेव युक्तमिति सूत्रतात्पर्यम् ।

परमाणुलक्षणवायोरिति शेषः । द्रव्यं हि समवायिकारणासमवायिकारणान्यतरनाशान्नश्यति परमाणोस्तु निरवयवतया न तदुभयमस्ति तथाच विनाशकाभावान्न विनश्यति । क्रियावत्त्वे गुणवत्त्वे च हेतौ सावयवत्वमुपाधिः । स च पक्षधर्म(१)द्रव्यत्वावच्छिन्नसाध्यव्यापकः केवलसाध्यव्यापकस्तु प्रागभावप्रतियोगित्वमुपाधिः ॥ १३ ॥

द्व्यणुकादिप्रक्रमेणारम्भसिद्धौ सिद्धमपि वायुनानात्वं प्रकारान्तरेणापि साधयितुमाह—

**(२)वायोर्वायुसंमूर्च्छनं नानात्वलिङ्गम् ॥ १४ ॥**

वायुसंमूर्च्छनमिति । वाय्वोर्वायूनां वा संमूर्च्छनं संयोगविशेषः । स च समानवेगयोर्विरुद्धदिक्क्रिययोः सन्निपातः । स च तृणतूलकादेरूर्द्ध्वगमनेनानुमीयते । वाय्वोरूर्द्ध्वगमनस्य सन्निपातस्य चातीन्द्रियत्वात् । तृणादीनान्तु प्रत्यक्षाणामूर्द्ध्वगमनलक्षणायाः क्रियायाः प्रत्यक्षायाः स्पर्शवद्वेगवद्द्रव्याभिघातनोदनान्यतरजन्यत्वमनुमीयते । तथाहि तिर्य्यग्गमनस्वभावस्य वायोरूर्द्ध्वगमनं परस्परप्रतीघातमन्तरेणानुपपद्यमानं परस्परप्रतीघातं साधयति नदीपयःपूरयोस्तथादर्शनात् (३)तदूर्द्ध्वगमनञ्च तृणाद्यूर्द्ध्वगमनानुमेयं न हि तृणादीनामूर्द्ध्वगमनं स्पर्शवद्वेगवद्द्रव्याभिघातनोदनान्यतरद्विनेति ॥ १४ ॥

नन्वदृष्टलिङ्गो वायुरित्युक्तं तथाच कथमेतादित्यत आह—

**वायुसन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥ १२ ॥**

दृष्टं हि लिङ्गं यत्र प्रत्यक्षेण व्याप्तिग्रहस्तदुच्यते यथा धूमोऽग्नेः ।

---

(१) स चासावयवत्वमुपाधिः कर्मान्तर्भावेणानित्यत्वाव्यापक अत आहोपस्कारकृद्द्रव्यत्वावच्छिन्नेति ।

(२) ननु आकाशवद्वायुरपि कथमेक एव नाङ्गीक्रियत इत्यत आह वायोरिति । अत्र वायुत्वं स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदवत् उक्तोभयसम्बन्धेन संमूर्च्छनवत्वात् नदीपूरत्ववदित्यनुमानप्रयोगो बोध्यः । संमूर्छनमेव कुत इति चेत् वायुः सम्मूर्च्छनवान् तृणाद्यूर्ध्वगमनात् इत्यनेन तत्सिद्धेः ।

(३) ननु तथापि वायोरूर्ध्वगतिः कथं सेत्स्यतीत्यत्राह तदूर्ध्वगमनञ्चेति । तृणाद्यूर्ध्वगतिः असतिरूपवद्द्रव्याभिघाते स्पर्शवद्वेगवद्द्रव्याभिघातजन्या ऊर्ध्वगतित्वात्कराभिहतकन्दुकोर्ध्वगतिवदित्यनेन तादृशद्रव्यवायूर्ध्वगतिसिद्धेः ।

वायुसन्निकर्षे च वायुना सहाविनाभावे प्रत्यक्षं नास्ति न हि भवति यो यः स्पर्शकरूपादिमान् स वायुरिति कस्यचित् प्रत्यक्षं वायोरेवाप्रत्यक्षत्वादत एव तादृशं प्रत्यक्षगृहीतव्याप्तिकं लिङ्गं नास्तीत्यर्थः ॥ १५ ॥

तर्हि वायोरनुमानमेव कथमित्यत उक्तमेव द्रढयितुमाह—

सामान्यतोदृष्टाच्चाविशेषः ॥ १६ ॥

अनुमानं हि त्रिविधं पूर्ववत् शेषवत् सामान्यतोदृष्ट । तथाचायमनुभूयमानस्पर्शः क्वचिदाश्रितः स्पर्शत्वात् गुणत्वाद्वेति सामान्यतोदृष्टादेवेतरबाधसहकृतात् अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं सिध्यतीत्यर्थः । (१)गतं तर्हि केवलव्यतिरेकिणेति चेन्न (२)इतरबाधानन्तरं यत्र सामान्यतो दृष्टं प्रवर्त्तते तत्राष्टद्रव्यानाश्रितत्वं पक्षविशेषणं सिद्धमादाय अष्टद्रव्यानाश्रितोऽयं स्पर्शः क्वचिदाश्रित इति प्रतिज्ञार्थोऽष्टद्रव्यातिरिक्तद्रव्याश्रितत्वमनादाय न पर्य्यवस्यतीति—प्रतीत्यर्थापर्य्यवसन्नतयाऽन्वयिन एव तत्सिद्धिः । यत्र तु पूर्वमेव बाधावतारात् सामान्यतोदृष्टं तत्र प्रतीत्यर्थपर्य्यवसानात् केवलव्यतिरेकीत्यभ्युपगमात् । प्रकारार्थं केवलव्यतिरेकीति तु तुच्छमेव उक्तस्थले प्रकारस्यान्वयिन एवोपस्थितेः । व्यापकतावच्छेदकप्रकारिकैवानुमितिरिति नियमस्त्वप्रामाणिकः सामग्रीविशेषसान्निध्यात् प्रकारान्तरभानस्यापि सम्भवात् ॥ १६ ॥

ननु चाविशेष इति वायुरयमित्याकाराऽनुमितिर्न भवति किन्त्वष्टद्रव्यातिरिक्तद्रव्याश्रितत्वेनैव प्रकारेणेति विवक्षितं यदि तदा तस्य द्रव्यस्य वायुसंज्ञायां किं मानमत आह—

तस्मादागमिकम् ॥ १७ ॥

---

(१) ननु इतरबाधसहकृतोक्तवायुसाधकानुमानस्य सामान्यतोदृष्टत्वे शब्दधर्मिकगुणत्वसाधकेतरबाधसहकृतानुमानस्यापि तथात्वं स्यात्तथा च शेषवदपरपर्यायकेवलव्यतिरेक्यनुमानमेव निर्मूलं स्यादित्याशयेनाशङ्कते गतमिति ।

(२) समाधत्ते इतरेति । एवञ्चेतरबाधनिश्चयस्यात्र पूर्वं वर्तमानत्वात् 'प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः' परिशेष इति परिशेषस्य प्रसक्तिहेतुत्वप्रदर्शनादेव कस्याप्यप्रसक्तत्वात् शिष्यमाणप्रत्ययाभावाच्चासम्भव इति । यत्र तु पूर्वं इतरबाधाभावात् शब्दो क्वचित्समवेतो गुणत्वात् इत्यनुमानं तत इतरबाधस्तत्रैवोक्तविधपरिशेषसम्भवात् इदमेवाभिप्रेत्याह उपस्कारकार अष्टद्रव्यानाश्रितोयं स्पर्श इत्यादिनेति अन्यत्र विभावनीयम् ।

यस्माद्विशेषाकारेण नानुमितिः तस्माद्वायुरिति नाम आगमिकम्, आगमो वेदस्ततः सिद्धमित्यर्थः। 'वायुर्वै क्षेपिष्ठा देवता' 'वायव्यं श्वेतं छागलमालभेत'

वायुश्च सर्ववर्णोऽयं सर्वगन्धवहः शुचिः।

इत्यादि-विधिशेषीभूतार्थवादादेव वायुसंज्ञाधिगतिः। यथा-

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।

इत्याद्यर्थवादात् स्वर्गसंज्ञायाः।

वसन्ते सर्वशस्यानां जायते पत्रशातनम्।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥

इत्यर्थवादात् यवसंज्ञायाः, 'अम्बुजो वेतसः' इत्यर्थवादात् वेतससंज्ञायाः, 'वराहं गावोऽनुधावन्ति' इत्यर्थवादात् वराहसंज्ञायाः। अन्यथा 'स्वर्गकामो यजेत' इत्यादौ विशिष्टसुखानुपस्थितौ यागादिषु स्वर्गार्थिनां प्रवृत्तिर्न स्यात् न स्याच्च 'यवमयश्चरुर्भवति' 'वैतसे कटे प्राजापत्यं चिनोति' 'वाराही चोपानत्' इत्यादौ म्लेच्छप्रसिद्धिमनुरुध्य प्रवृत्त्यनध्यवसायः। म्लेच्छा हि यववराहवेतसशब्दान् कङ्गुवायसजम्बुषु प्रयुञ्जते तथाचार्थवादमन्तरेण सन्देहः स्यादित्यागमादेव तत्तदर्थप्रतीतिरिति भावः। नाममात्रमागमिकं द्रव्यसिद्धिस्तु सामान्यतो दृष्टादेव॥ १७॥

एवं वायुप्रकरणं समाप्य तत् किमुन्मादिजल्पित-डित्थडवित्थसंज्ञावत् वायुसंज्ञापीत्यागमस्य सर्वज्ञप्रणीतत्वमुपपादयन् औपोद्घातिकमीश्वरप्रकरणमारिप्समान आह—

**(१)संज्ञा कर्म त्वस्मद्विशिष्टानां लिङ्गम्॥ १८॥**

तुशब्दः स्पर्शादिलिङ्गव्यवच्छेदार्थः। संज्ञा-नाम, कर्म-कार्य्यं क्षित्यादि, तदुभयमस्मद्विशिष्टानाम् ईश्वर-महर्षीणां सत्त्वेऽपि लिङ्गम्॥ १८॥

कथमेतदित्यत आह—

**प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः॥ १९॥**

अत्रापि संज्ञा च कर्म चेति समाहारद्वन्द्वादेकवद्भावः संज्ञाकर्त्तु-

(१) ननूक्तागमस्य कथं प्रामाण्यमित्याशंक्येश्वरसिद्धिद्वारा तत्प्रणीतागमस्यापि प्रामाण्यमित्युपोद्घातसङ्गत्येश्वरसिद्धिप्रकरणमारभते संज्ञेत्यादिसूत्रेण।

जगत्कर्त्तुश्चाभेदसूचनार्थः । तथाहि यस्य स्वर्गापूर्वादयः प्रत्यक्षाः स एव तत्र स्वर्गापूर्वादिसंज्ञाः कर्तुमीष्टे प्रत्यक्षे चैत्रमैत्रादिपिण्डे पित्रादेश्चैत्रमैत्रादिसंज्ञानिवेशनवत् । एवञ्च घटपटादिसंज्ञानिवेशनमपि ईश्वरसङ्केताधीनमेव यः शब्दो यत्रेश्वरेण सङ्केतितः स तत्र साधुःयथा या काचिदोषधिर्नकुलदंष्ट्राग्रस्पृष्टा सा सर्वाऽपि सर्पविषं हन्तीत्येतादृशी संज्ञा अस्मदादिविशिष्टानां लिङ्गमनुमापकं, याऽपि मैत्रादिसंज्ञा पित्रा पुत्रे क्रियते साऽपि 'द्वादशेऽहनि पिता नाम कुर्य्यात्' इत्यादिविधिना नूनमीश्वरप्रयुक्तैव तथाच सिद्धं संज्ञाया ईश्वरलिङ्गत्वम्(१)। एवं कर्मापि कार्य्यमपीश्वरे लिङ्गम् तथाहि क्षित्यादिकं सकर्तृकं कार्य्यत्वात् घटवदिति । अत्र यद्यपि (२)शरीराजन्यं जन्यं वा जन्यप्रयत्नाजन्यं जन्यं वा सकर्तृकत्वासकर्तृकत्वेन विवादाध्यासितं वा सन्दिह्यमानकर्तृकत्वं वा क्षित्यादित्वेन न विवक्षितम् अदृष्टद्वारा क्षित्यादेरपि जन्यप्रयत्नजन्यत्वात् विवादसन्देहयोश्चातिप्रसक्तत्वेन पक्षतानवच्छेदकत्वात्, (३)किञ्च सकर्तृकत्वमपि यदि कृतिमज्जन्यत्वं तदाऽस्मदादिना सिद्धसाधनम् अस्मदादिकृतेरप्यदृष्टद्वारा क्षित्यादिजनकत्वात्, उपादानगोचरकृतिमज्जन्यत्वेऽपि तथा अस्मदादिकृतेरपि किञ्चिदुपादानगोचरत्वात्, (४)कार्य्यत्वमपि यदि प्रागभावप्रतियोगित्वं तदा ध्वंसे व्यभिचार इति । (५)तथापि क्षितिः सकर्तृका कार्य्यत्वात् । अत्र च सकर्तृकत्वमदृष्टाद्वारककृतिमज्जन्यत्वं कार्य्यत्वञ्च प्रागभावावच्छिन्नसत्ताप्रतियोगित्वम् । न चाङ्कुरादौ सन्दिग्धानै-

---

(१) ईश्वरलिङ्गत्वमिति । स्वर्गादिसंज्ञा कर्तृप्रत्यक्षगोचरार्थशक्ता संज्ञात्वाद्देवदत्तादिसंज्ञावदित्यनुमानेन संज्ञाया ईश्वरलिङ्गत्वमित्यर्थः ।

(२) धर्मिग्राहकबलादीश्वरसाधके कार्यत्वहेतौ व्यभिचारमाशङ्कते अत्र यद्यपीति । परमाणूनां नित्यत्वादंशतोबाधेन पृथिवीत्वादिपक्षतावच्छेदकावच्छेदेनानुमितिर्न सम्भवति अतः पक्षतावच्छेदकसामानाधिकरण्येनानुमितिः कार्येत्याशयेन सामानाधिकरण्येनानुमितिप्रकारं दर्शयित्वा दूषयति शरीराजन्यमित्यादिना ।

(३) ननु जन्यपृथिवीत्वमेव पक्षतावच्छेदकं स्यादत आह किञ्चेति ।

(४) नन्वस्मदादिकृतेः किञ्चिदुपादानगोचरत्वेपि त्रसरेण्वादेरुपादानाविषयत्वान्न सिद्धसाधनं तथाचोक्तसाध्यमक्षतमेवेत्यत आह कार्यत्वमपीति ।

(५) समाधत्ते तथापीति । उक्तविशिष्टहेतोः ध्वंसेऽसत्त्वान्न व्यभिचारो न वास्मदादिकृतिमज्जन्यत्वमादाय सिद्धसाधनमस्मदादिकृतेरदृष्टद्वारकत्वात् इति भावः। अत्र जन्यक्षितिरेव पक्षो बोध्यः। जन्यत्वमाद्यक्षणसम्बन्धत्वं कार्यत्वं प्रागभावप्रतियोगित्वमिति पक्षतावच्छेदकहेत्वोर्भेद इति ।

कान्तिकत्वम् साध्याभावनिश्चये हेतुसदसत्त्वसन्देहे सन्दिग्धानैकान्तिकत्वस्य दोषत्वात् अन्यथा सकलानुमानोच्छेदप्रसङ्गात् । न च पक्षातिरिक्ते दोषोऽयमिति वाच्यम् राजाज्ञापत्तेः, नहि दोषस्यायं महिमा यत् पक्षं नाक्रामति । तस्मादङ्कुरस्फुरणदशायां निश्चितव्याप्तिकेन हेतुना तत्र साध्यसिद्धेरप्रत्यूहत्वात् क सन्दिग्धानैकान्तिकता तदस्फुरणदशायान्तु सुतरामिति संक्षेपः ॥ १९ ॥

एवं सूत्राभ्यामीश्वरप्रकरणं समाप्याकाशप्रकरणमारिप्समान आह—

**निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥ २० ॥**

इतिशब्दः प्रकारार्थः, उत्क्षेपणादीन्यपि कर्माणि संगृह्णाति । स्पर्शवद्द्रव्यसञ्चारो निष्क्रमणं प्रवेशनञ्च तदकार्य्यस्याकाशस्य लिङ्गमिति (१)साङ्ख्याः ॥ २० ॥

तदेतद्दूषयितुमाह—

**तदलिङ्गमेकद्रव्यत्वात् कर्मणः ॥ २१ ॥**

निष्क्रमणप्रवेशनादिकर्म (२)न तावत् समवायिकारणतया आकाशमनुमापयति कर्मण एकद्रव्यत्वात् एकमात्रमूर्त्तसमवायिकारणकत्वात्, न कर्मापि व्यासज्यवृत्तीत्युक्तं न वाऽमूर्त्तवृत्तीति ॥ २१ ॥

ननु चासमवायिकारणतयैवाकाशमनुमापयिष्यति निष्क्रमणप्रवेशनादीत्यत आह—

**कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥ २२ ॥**

अनुक्लृप्तिर्लक्षणम् अनुकल्प्यते ज्ञाप्यतेऽनेनेति व्युत्पत्त्या, कारणान्तरस्य असमवायिकारणस्य याऽनुक्लृप्तिर्लक्षणं तद्वैधर्म्यादित्यर्थः । द्रव्यन्तावदसमवायिकारणं न भवत्येव । असमवायिकार-

---

(१) साङ्ख्या इति । निष्क्रमणादिजन्यविलक्षणसंयोगाश्रयतयाऽऽकाशसिद्धिर्न तु शब्दलिङ्गकत्वेन शब्दस्य पृथिव्यादिवृत्तित्वेन व्यभिचरितत्वादिति तेषामभिप्रायः । निष्क्रमणजन्यः संयोगो स्पर्शाभाववद्द्रव्यनिरूपितः विलक्षणसंयोगत्वादिति तदनुमानप्रयोगः ।

(२) उक्तानुमानस्याप्रयोजकत्वाभिप्रायेण दूषयति न तावदिति । निष्क्रमणादीनामाकाशकार्यत्वाभावान्न तैस्तदनुमानसम्भव इत्यर्थः ।

णता च कारणैकार्थप्रत्यासत्त्या कार्यैकार्थप्रत्यासत्त्या च । (१)प्रथमा तन्तुरूपाणां पटरूपं प्रति, इयञ्चासमवायिकारणता महतीति संज्ञां लभते गुरुप्रतिपत्तिकत्वात् । द्वितीया(२) च यथा आत्ममनःसंयोगस्य ज्ञानादिकं प्रति, इयञ्चासमवायिकारणता लघ्वीति संज्ञां लभते लघुप्रतिपत्तिकत्वात् । आकाशस्य तु निष्क्रमणप्रवेशनादौ कर्मणि न समवायिकारणता नाप्यसमवायिकारणता । तथाच न च कर्माकाशसत्त्वे लिङ्गमिति ॥ २२ ॥

ननु निमित्तकारणमस्तु कर्मण्याकाशम्· दृश्यते ह्याकाशे पक्षिकाण्डादीनां सञ्चरणमत आह—

**संयोगादभावः कर्मणः ॥ २३ ॥**

मूर्त्तसंयोगेन कर्मकारणस्य वेगगुरुत्वादेः प्रतिबन्धात् कर्मणोऽभावोऽनुत्पादो न त्वाकाशाभावात् तस्य व्यापकत्वात् । तस्मादाकाशान्वयोऽन्यथासिद्ध एव नाकाशनिमित्ततां (३)साधयतीत्यर्थः ॥ २३ ॥

एवं साङ्ख्यमते दूषिते शब्दमाकाशे लिङ्गमुपपादयिष्यन् परिशेषानुमानाय पीठमारचयन्नाह—

**कारणगुणपूर्वकः कार्यगुणो दृष्टः ॥ २४ ॥**

पृथिव्यादिलक्षणे कार्ये ये विशेषगुणा रूपादयस्ते कारणगुणपूर्वका दृष्टाः । शब्दोऽपि विशेषगुणः (४)जातिमत्त्वे सति बाह्यैकेन्द्रिय-

---

(१) द्विविधासमवायिकारणत्वमध्ये कारणैकार्थप्रत्यासत्तिघटितमसमवायित्वं द्रव्ये नास्तीत्यभिप्रायेणाह प्रथमेति । गुरुप्रतिपत्तिकत्वादिति । असमवायिकारणतायाः समवायद्वयघटितसामानाधिकरण्यरूपगुरुसम्बन्धावच्छिन्नप्रकारकतया गुरुज्ञानत्वात् द्रव्ये तादात्म्यसम्बन्धावच्छिन्नसमवायिकारणतायाः सत्त्वेपि तदसम्भवात् । घटरूपादिकार्यसमवायी घटस्तदन्यच्च द्रव्यमेकत्रैकदा न समवैति येन द्रव्येपि असमवायिकारणतोक्तसामानाधिकरण्यसम्बन्धेन गुणवत्स्यादिति भावः ।

(२) कार्यैकार्थप्रत्यसत्तिघटिताप्यसमवायिकारणता द्रव्ये नास्तीत्याह द्वितीयेति । अत्र समवायरूपलघुसम्बन्धावच्छिन्नप्रकारकत्वेन लघुप्रतिपत्तिकत्वम् । कपालरूपे घटादेर्नियतपूर्ववर्तित्वाभावेनाकारणत्वात्, घटाव्यवहितपूर्वक्षणे कपाले द्रव्यान्तरस्यासत्त्वाद्घटं प्रत्यपि द्रव्यस्यासमवायित्वाभावादिति भावः ।

(३) साधयतीति । फलादीनां भूम्यादिसंयोगात्कर्मानुत्पत्तिदर्शनात् संयोगविशेषाभावादिकमेव कर्मनिमित्तहेतुर्न त्वाकाशं तद्व्यतिरेकेण कर्मव्यतिरेकस्यासिद्धेस्तस्य व्यापकत्वात् इति भावः ।

(४) जातिमत्त्वे सतीति । शब्दत्वेऽतिव्याप्तिवारणाय विशेषणदलम् । संख्यादौ तद्वारणायैकमात्रबहिरिन्द्रियग्राह्यत्वार्थकं विशेष्यदलम् बोध्यम् ।

मात्रग्राह्यत्वात् रूपादिवत् । तथाच तादृशं कार्य्यं नोपलभ्यते यत्र कारणगुणपूर्वकः शब्दः स्यादित्यर्थः ॥ २४ ॥

ननु वीणावेणुमृदङ्गशङ्खपटहादौ कार्य्ये शब्द उपलभ्यते तथाच तत्कारणगुणपूर्वकः स्यादत आह--

**कार्य्यान्तराप्रादुर्भावाच शब्दः स्पर्शवतामगुणः ॥२५॥**

भवेदेवं यथा तन्तुकपालादिषु रूपरसाद्यनुभूयते तत्सजातीयश्च रूपरसाद्यन्तरं पटघटादावुपलभ्यते तथा वीणावेणुमृदङ्गाद्यवयवेषु यः शब्द उपलब्धस्तत्सजातीयश्चेत् वीणावेणुमृदङ्गाद्यवयविन्युपलभ्येत न चैवम् । प्रत्युत निःशब्दैरेवावयवैर्वीणाद्यारम्भदर्शनात्, नीरूपैस्तु तन्तुकपालादिभिः पटघटाद्यारम्भस्यादर्शनात् । (१)किञ्च यदि शब्दः स्पर्शवतां विशेषगुणः स्यात् तदा तत्र तार-तारतर-मन्द-मन्दतरादिभावो नानुभूयेत न ह्येकावयव्याश्रिता रूपादयो वैचित्र्येणानुभूयन्ते तस्माच्च स्पर्शवद्विशेषगुणः शब्दः ॥ २५ ॥

नन्वात्मगुणो मनोगुणो वा शब्दो भविष्यतीत्यत आह—

**परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥ २६ ॥**

शब्दो यद्यात्मगुणः स्यात् तदाऽहं सुखी यते जाने इच्छामीत्यादिवत् अहं पूर्य्ये अहं वाद्ये अहं शब्दवानित्यादि धीः स्यात् नत्वेवमस्ति, किन्तु शङ्खः पूर्य्यते वीणा वाद्यते इति प्रतियन्ति लौकिकाः । किञ्च शब्दो नात्मगुणः बाह्येन्द्रियग्राह्यत्वात् रूपादिवत् अपिच शब्दो यद्यात्मयोग्यविशेषगुणः स्याद्बधिरेणाप्युपलभ्येत दुःखादिवत् तस्मात् सुष्ठूक्तं परत्र समवायादिति। अमनोगुणत्वे हेतुमाह प्रत्यक्षत्वादिति । नात्ममनसोर्गुण इति समासे कर्त्तव्ये यदसमासकरणं तेन तुल्यन्यायतया प्रत्यक्षत्वादित्यनेनैव हेतुना दिक्कालयो-

---

(१) ननु अनुद्भूत एव शब्दो वीणाद्यवयवे वर्तत इत्यत आह किञ्चेति । सूत्रस्थकार्यान्तरशब्दस्यान्यार्थमाह तारेति । अयमत्रानुमानप्रकारः—शब्दो न स्पर्शवद्विशेषगुणः अपाकजत्वे मति अकारणगुणपूर्वकप्रत्यक्षत्वात्सुखवत् । अपाकजरूपे व्यभिचारवारणाय सत्यन्तम् । पटरूपादौ तद्वारणाय विशेष्यदलम् । अत्रोपस्कारकारो व्यतिरेक्यनुमानं प्रकटयन्नाह नहीति । तन्मतेऽत्र एकावयविवृत्तित्वे सति वैजात्येनानुभूयमानत्वाद्रूपवदिति व्यतिरेकिदृष्टान्तो बोध्यः ।

रपि गुणत्वं शब्दस्य प्रतिषिद्धमिति सूचितम्(१) ॥ २६ ॥

यदर्थमयं परिशेषस्तदाह—

परिशेषाल्लिङ्गमाकाशस्य ॥२७॥

शब्द इति शेषः। अत्रापि शब्दः क्वचिदाश्रितो गुणत्वात् रूपादिवदिति सामान्यतोदृष्टादष्टद्रव्यातिरिक्तद्रव्यसिद्धिः। गुणश्चायं बाह्यैकेन्द्रियग्राह्यजातीयत्वात् रूपादिवत्, अनित्यत्वे सति विभुसमवेतत्वात् ज्ञानादिवत्। अनित्यत्वञ्च साधयिष्यते। (२)परिशेषसिद्धस्य द्रव्यस्यावयवकल्पनायां प्रमाणाभावान्नित्यत्वं सर्वत्र शब्दोपलब्धेर्विभुत्वम् ॥ २७ ॥

शब्दलिङ्गस्य द्रव्यस्य द्रव्यत्वनित्यत्वे अतिदेशेन साधयन्नाह—

द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २८ ॥

अद्रव्यवत्त्वाद्यथा वायोर्नित्यत्वं तथाकाशस्यापि, गुणवत्त्वाद् यथा वायोर्द्रव्यत्वं तथाकाशस्यापीत्यर्थः ॥ २८ ॥

तत् किं बहून्याकाशानि एकमेव वेत्यत आह—

तत्त्वम्भावेन ॥ २९ ॥

व्याख्यातमिति विपरिणतेनान्वयः। भावः सत्ता सा यथैका तथाकाशमप्येकमेवेत्यर्थः ॥ २९ ॥

नन्वनुगतप्रत्ययमहिम्ना सत्ताया एकत्वं सिद्धम् आकाशे कथमेकत्वं तद्दृष्टान्तेन सेत्स्यतीत्यत आह—

शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च ॥ ३० ॥

तत्त्वमाकाशस्य सिद्धमित्यर्थः। वैभवे सति सर्वेषां शब्दानां तदेकाश्रयतयैवोपपत्तावाश्रयान्तरकल्पनायां कल्पनागौरवप्रसङ्गः। अन्यदपि यदाकाशं कल्पनीयम् तत्रापि शब्द एव लिङ्गम् तच्चाविशिष्टम न च विशेषसाधकं भेदसाधकं लिङ्गान्तरमस्ति। आत्मनां यद्यपि ज्ञानादिकमविशिष्टमेव लिङ्गं तथापि व्यवस्थातो लिङ्गान्तरादात्मना-

---

(१) सूचितमनुमितम्। तथा च शब्दो न दिक्कालमनसां गुणः प्रत्यक्षत्वाद्रूपवदिति अनुमानेन तत्सिद्धिरिति भावः।

(२) सूत्रस्थपरिशेषपदस्य शेषवदर्थकत्वं सूचयन्नाह परिशेषसिद्धस्येति। शेषवदनुमानेन सिद्धमाकाशं नित्यमित्यर्थः।

नात्वसिद्धिरिति (१)वक्ष्यते ॥ ३० ॥

नन्वाकाशस्य एकत्वं तावदस्तु, वैभवात् परममहत्त्वमप्यस्तु, शब्दासमवायिकारणत्वात् संयोगविभागावपि स्याताम् एकपृथक्त्वं कथमत आह--

तदनुविधानादेकपृथक्त्वञ्चेति ॥ ३१ ॥

नियमेनैकपृथक्त्वमेकत्वमनुविधत्ते इत्येकपृथक्त्वसिद्धिः । इतिराह्निकपरिसमाप्तौ मानसप्रत्यक्षाविषयविशेषगुणवद्द्रव्यलक्षणमाह्निकार्थः । तेन पृथिव्यप्तेजोवाय्वाकाशानां प्रसङ्गत ईश्वरात्मनश्च लक्षणमस्मिन्नाह्निके। तेन चतुर्दशगुणवती पृथिवी, ते च गुणा रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्काराः । तावन्त एव गन्धमपास्य स्नेहेन सहापाम् । एत एव रसगन्धस्नेहगुरुत्वान्यपास्य तेजसः । गन्धरसरूपगुरुत्वस्नेहद्रवत्वान्यपास्य वायोः । शब्देन सह सङ्ख्यादिपञ्चगुणवत्त्वमाकाशस्य। सङ्ख्यादिपञ्चकमात्रं दिक्कालयोः । परत्वापरत्ववेगसहितं सङ्ख्यादिपञ्चकं मनसः । सङ्ख्यादिपञ्चकं ज्ञानेच्छाप्रयत्नाश्चेश्वरस्य ॥ ३१ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे द्वितीयाध्याय—
स्याद्यमाह्निकम् ॥

---

(१) वक्ष्यत इति । 'सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम्' इत्यत्र अ० ३ आ० २ सू० १९ वक्ष्यत इत्यर्थः ।

# द्वितीयाध्याये द्वितीयाह्निकम् ।

इदानीं भूतानां लक्षणानि गन्धादीनि परीचिक्षिषुर्गन्धादीनां स्वाभाविकत्वमौपाधिकत्वञ्च व्यवस्थापयन्नाह—

**पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् ॥ १ ॥**

रूपरसगन्धस्पर्शा यत्र कारणगुणप्रक्रमेणोत्पद्यन्ते तत्र स्वाभाविकाः सन्तो लक्षणतामुपयन्ति नान्यथा, न हि समीरण उपलभ्यमानं सौरभं शिलातले उपलभ्यमानं शैत्यं जले उपलभ्यमानमौष्ण्यं वा लक्षणं भवति तदेतदाह पुष्पवस्त्रयोरिति । न हि कनककेतकीकुसुमसन्निकृष्टे वाससि कनककेतकीसौरभनुपलभ्यमानं वाससः । (१)न हि वाससः कारसगुणप्रक्रमेण तदुत्पन्नम्, किन्तर्हि ! कनककेतकीसन्निधानादौपाधिकं, न हि वस्त्रे गन्धाभावे केतकीगन्धाभावो लिङ्गम् । किं लिङ्गमत उक्तं गुणान्तराप्रादुर्भाव इति । गुणान्तरात् कारणगुणात् अप्रादुर्भावोऽनुत्पत्तिः यदि हि वस्त्रे यो गन्ध उपलभ्यते स तस्य स्वाभाविकः स्यात्तदा तदवयवेषु तन्तुषु केतकीसन्निकर्षात् पूर्वं तत्र वस्त्रे चोपलभ्येत न चैवमित्यर्थः । तथाच विवादाध्यासितो गन्धो न वस्त्रसमवेतः (२)तदवयवगुणाजन्यविशेषगुणत्वात् शीतोष्णस्पर्शादिवत् ॥ १ ॥

स्वाभाविकं गन्धं पृथिव्या लक्षणमाह—

**व्यवस्थितः पृथिव्यां गन्धः ॥ २ ॥**

पृथिव्यां व्यवस्थितोऽयोगान्ययोगाभ्यां परिच्छिन्नः समानासमानजातीयव्यावर्त्तकतया गन्धो लक्षणमित्यर्थः । भवति हि पृथिवी (३)गन्धवत्येव, पृथिव्येव गन्धवतीति, तदेवं समानजातीयेभ्यो जला-

---

(१) ननु कारणाभावे कार्याभावस्य वन्ह्यभावे धूमाभावस्येव लिङ्गत्वं दृश्यते तथा च केतकीपुष्पगन्धाभावोपि वस्त्रगन्धाभावे हेतुः स्यात् एवञ्च केतकीकुसुमगन्धादेव वस्त्रेपि गन्धस्तज्जातीय उत्पद्यतं इति कथं तस्य नैसर्गिकत्वमित्याशंक्याह नहीति । यदि केतकीकुसुमगन्धाभावो वस्त्रे गन्धाभावे लिङ्गं स्यात् उक्तपुष्पवस्त्रगन्धयोः कार्यकारणभावशङ्का भवेत् तन्नास्तीति तात्पर्यम् ।

(२) तदवयवगुणाजन्यविशेषगुणत्वादिति । वस्त्ररूपादौ व्यभिचारवारणायाजन्यान्तं हेतुविशेषणम् । संयोगे कर्मजन्ये तद्वारणाय विशेषपदम् । एवमेव वाय्वादौ गन्धाभावोऽनुमेयः ।

(३) गन्धवत्येवेति । तेनेतरभेदानुमितौ न भागासिद्धिः । पृथिव्येवेति । एतेन व्यभिचारनिरासः ।

द्यष्टभ्योऽसमानजातीयेभ्यो गुणादिपञ्चभ्यो व्यावर्त्तकः स्वाभाविकः पृथिव्यां गन्ध इति व्यवस्थितम् ॥ २ ॥

(१)गन्धस्य स्वाभाविकत्वव्यवस्थापनप्रकारमुष्णतायां तेजोलक्षणेऽप्यतिदिशन्नाह—

**एतेनोष्णता व्याख्याता ॥ ३ ॥**

अवादिलक्षणे शैत्यादावप्ययमतिदेशो द्रष्टव्यः ॥ ३ ॥

तेजोलक्षणं परीक्षते—

**तेजस उष्णता ॥ ४ ॥**

स्वाभाविक्युष्णता तेजोलक्षणमित्यर्थः । रूपमपि शुक्लभास्वरमुपलक्ष्यते ॥ ४ ॥

अपां लक्षणं परीक्षते—

**अप्सु शीतता ॥ ५ ॥**

स्वाभाविकी शीतता अपां लक्षणमित्यर्थः । तथाच शिलातलश्रीखण्डादौ नातिव्याप्तिरिति भावः । शीततया रूपरसावप्युक्तलक्षणौ स्नेहं सांसिद्धिकद्रवत्वञ्चोपलक्षयति । ननु उद्देशलक्षणक्रमभङ्गः कुत इति चेन्न तेजःस्पर्शस्य पृथिवीजलस्पर्शयोरभिभावकत्वसूचनाय तयोर्मध्ये तेजःपरीक्षाया उक्तत्वात्, (२)वायुपरीक्षासूचनार्थं वा क्रमलङ्घनम् । तथाचापाकजानुष्णाशीतस्पर्शो वायोः स्वाभाविकः सन् लक्षणमित्युन्नेयमिति तात्पर्य्यम् ॥ ५ ॥

तदेवं कारणगुणपूर्वकाः स्पर्शवतां विशेषगुणाः गन्धादयः पृथिव्यादीनां लक्षणानीत्युक्तम् । इदानीं (३)क्रमप्राप्तं काललक्षणप्रकरणमारभमाण आह—

**अपरस्मिन्नपरं युगपत् चिरं क्षिप्रमिति काललिङ्गानि ॥ ६ ॥**

इतिकारो ज्ञानप्रकारपरः प्रत्येकमभिसम्बध्यते, तथाचापरमिति-

---

(१) गन्धस्येति । उष्णत्वं पृथिव्यसमवेतं तदवयवगुणाजन्यविशेषगुणत्वात् सांसिद्धिकद्रवत्ववत्, न जलसमवेतं गन्धवदित्यनुमानेन बाधात्तत्रोष्णत्वमौपाधिकं स्वाभाविकं तेजसीति सूत्रार्थः ।

(२) वाय्विति । सुवर्णचन्द्रकिरणादौ पृथिवीजलस्पर्शस्य तेजःस्पर्शाभिभावकत्वात्कल्पान्तरानुसरणम् । स्पर्शवत्त्वसाधर्म्येण वा स्मरणेन वायुपरीक्षापि बोध्येति व्युत्क्रमादर इति भावः ।

(३) क्रमप्राप्तमिति । आकाशलक्षणानन्तरं काललक्षणस्यैव क्रमप्राप्तत्वादित्यर्थः । अन्तराऽन्यनिरूपणस्य बलवज्जिज्ञासानिवृत्त्यर्थत्वादिति भावः ।

प्रत्ययो युगपदितिप्रत्ययः चिरमितिप्रत्ययः क्षिप्रमितिप्रत्ययः काललिङ्गानीत्यर्थः। अपरस्मिन्नपरमित्यनेन परस्मिन् परमित्यपि द्रष्टव्यम् तेनायमर्थः बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधिं कृत्वा परत्वमुत्पद्यते तच्च परत्वमसमवायिकारणसापेक्षम्(१)। न च रूपाद्यसमवायिकारणं व्यभिचारात् त्रयाणां गन्धादीनां वायौ परत्वानुत्पादकत्वात्। स्पर्शस्याप्युष्णादिभेदेन भिन्नस्य (२)प्रत्येकं व्यभिचारात्। न चावच्छिन्नपरिमाणं तथा तस्य विजातीयानारम्भकत्वात्, तपनपरिस्पन्दानाञ्च व्यधिकरणत्वात्। (३)तदवच्छिन्नद्रव्यसंयोग एवासमवायिकारणं परिशिष्यते तच्च द्रव्यं पिण्डमार्त्तण्डोभयसंयुक्तं विभु स्यात्। आकाशस्य तत्स्वभाव्यकल्पने क्वचिदपि भेर्यभिघातात् सर्वभेरीषु शब्दोत्पत्तिप्रसङ्गः(४)। तथाच कालस्यैव मार्त्तण्डसंयुक्तस्य पिण्डेन संयोगः परत्वासमवायिकारणं काल एव मार्त्तण्डक्रियोपनायकः। आत्मनश्च द्रव्यान्तरधर्मेषु द्रव्यान्तरावच्छेदाय स्वप्रत्यासत्त्यतिरिक्तसन्निकर्षापेक्षत्वात् अन्यथा वाराणसीस्थेन महारजनारुणिम्ना पाटलिपुत्रेऽपि स्फटिकमणेरारुण्यप्रसङ्गात्। कालस्य तु तत्स्वभावतयैव कल्पनादयमदोषः(५)। कालेनापि रागसङ्क्रमः कथं नेति चेत् नियतक्रियोपनायकत्वेनैव तत्सिद्धेः। एवं स्थविरमवधिं कृत्वा यूनि अपरत्वोत्पत्तिर्निरूपणीया। युगपदिति। युगपज्जायन्ते युगपत्तिष्ठन्ति युगपत् कुर्वन्ति इत्यादिप्रत्ययानाञ्च एकस्मिन् काले एकस्यां सूर्य्यगतौ एकस्मिन् सूर्य्यगत्यवच्छिन्नकाले इत्यर्थः। (६)नचाप्राप्ता एव सूर्य्यगतयो विशेषणतामनु-

---

(१) भावकार्यत्वादिति शेषः।

(२) प्रत्यकमिति। जलादौ परत्ववति शीताद्येकैकस्पर्शस्यैव सत्त्वात्प्रत्येकजन्ये व्यभिचार इत्यर्थः। इदमुपलक्षणम्। पाकजस्पर्शोत्पत्तिकालेऽपरत्वानुत्पत्तिप्रसङ्गात् स्पर्शवैजात्येन परत्वादिवैजात्यप्रसङ्गाच्चेति बोध्यम्।

(३) तर्हि किमसमवायिकारणन्तत्राह तदवच्छिन्नेति। पिण्डमार्तण्डोभयसंयुक्तकिञ्चिद्विभुद्रव्यसंयोग एव परत्वादिकार्येऽसमवायिकारणमित्यर्थः।

(४) प्रसङ्ग इति। पिण्डमार्त्तण्डोभयसंयुक्तद्रव्यं स्वसंयोगिषु यावत्सु समानकालीनेषु परत्वं जनयति इति सर्वत्र भेर्यादौ शब्दोत्पत्तिप्रसङ्गः स्यात्परत्ववदिति न कालस्वभाव आकाशमित्यर्थः।

(५) अदोष इति। सर्वासु भेरीसु शब्दोत्पत्तिर्न दोष इत्यर्थः। कालस्य स्वसंयोगाश्रयसमानकालीनयावत्पिण्डवृत्तिपरत्वासमवायिकारणसंयोगवत्त्वादाकाशस्य तदभावादिति भावः।

(६) ननु इदानीमित्यादिप्रत्ययस्य सूर्यक्रियैवोपपत्तौ किं कालद्रव्यकल्पनयेत्यत आह नचेति।

भजन्ति न च स्वरूपप्रत्यासन्ना एव ताः, तस्मादेतादृशविशिष्टप्रत्ययान्यथानुपपत्त्या विशेषणप्रापकं यद्द्रव्यं स कालः ॥ ६ ॥

ननु सिध्यतु कालः, स तु नित्यो द्रव्यं वेति न प्रमाणमत आह—

द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ७ ॥

यथा वायुपरमाणोर्गुणवत्त्वाद्द्रव्यत्वम् अद्रव्यद्रव्यत्वाच्च नित्यत्वं तथा कालस्यापीत्यर्थः ॥ ७ ॥

तथापि सन्तु बहवः काला इत्यत आह—

तत्त्वम्भावेन ॥ ८ ॥

व्याख्यातमिति विपरिणतेनान्वयः । चिरादिप्रत्ययानां काललिङ्गानां सर्वत्राविशेषादनेकत्वेऽप्यात्मनामिव विशेषलिङ्गाभावात् सत्तावदेकत्वं कालस्येत्यर्थः । नन्वेवं क्षणलवमुहूर्त्तयामदिवसाहोरात्रपक्षमासर्त्वयनसंवत्सरादिभेदेन भूयांसः कालास्तत् कथमेक इति चेन्न भेदभानस्य उपाधिनिबन्धनत्वात् । यथा एक एव स्फटिकमणिर्जवातापिञ्जाद्युपाध्युपरागेण भिन्न इव भासते तथैक एव कालः सूर्यस्पन्दाद्यवच्छेदभेदेन तत्तत्कार्यावच्छेदभेदेन च भिन्न इव भासते इत्यभ्युपगमात् । तथा च (१)कालोपाध्यव्यापकः कालोपाधिः, स्वाधेयकादाचित्काभावाप्रतियोग्यनाधारः कालो वा क्षणः प्रतिक्षणं कस्यचिदुत्पत्तेः कस्यचिद्विनाशादेतदध्यवसेयम् । क्षणद्वयश्च लव इत्याद्यागमप्रसिद्धम् । ननु तथाप्यतीतानागतवर्तमानभेदेन कालत्रयमस्तु श्रूयते हि "त्रैकाल्यमुपावर्त्तते" "त्रैकाल्यासिद्धिः" इत्यादीति चेन्न वस्तुतत्प्रागभावतत्प्रध्वंसावच्छेदेन त्रैकाल्यव्यवहारात् येन हि वस्तुना यः कालोऽवच्छिद्यते स तस्य वर्त्तमानः, यत्प्रागभावेन यः कालोऽवच्छिद्यते स तस्य भविष्यत्कालः यत्प्रध्वंसेन यः कालोऽवच्छिद्यते स तस्यातीतकालः तथाचावच्छेदकत्रित्वाधीनः कालत्रित्वव्यवहारः ॥ ८ ॥

इदानीं सर्वोत्पत्तिमतां कालः कारणमित्याह—

---

(१) कालोपाध्यव्यापक इति । स्वभिन्नकालोपाध्यव्यापक इत्यर्थः । कादाचित्केति । ध्वंसः प्रागभावश्च कादाचित्काभावः । कस्यापि क्षणस्य ध्वंसप्रतियोगिप्रागभावप्रतियोग्याश्रयत्वाभावादेतद्बोध्यम् । उपाधिलक्षणं तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्मेत्यादि मुक्तावल्यां द्रष्टव्यम् ।

**नित्येषु भावादनित्येषु भावात्कारणे कालाख्येति ॥९॥**

इतिशब्दो हेतौ इति हेतोः कारणे सर्वोत्पत्तिमत्कारणे काल इत्याख्या । हेतुमाह नित्येष्वभावादनित्येषु भावादिति । नित्येषु आकाशादिषु युगपज्जातः चिरं जातः क्षिप्रं जातः इदानीं जातः दिवा जातः रात्रौ जात इत्यादिप्रत्ययस्याभावात्, अनित्येषु च घटपटादिषु (१)यौगपद्यादिप्रत्ययानां भावात् अन्वयव्यतिरेकाभ्यां कारणं काल इत्यर्थः । न केवलं यौगपद्यादिप्रत्ययबलात् कालस्य सर्वोत्पत्तिमन्निमित्तकारणत्वम् अपि तु पुष्पफलादीनां हैमन्तिकवासन्तिकप्रावृषेण्यादिसंज्ञाबलादप्येतदध्यवसेयम् ॥ ९ ॥

काललिङ्गकरणं समाप्य इदानीं दिग्लिङ्गप्रकरणमारभमाण आह—

**इत इदमिति यतस्तद्दिश्यं लिङ्गम् ॥ १० ॥**

दिशि इदं दिश्यं दिगनुमापकम् । इतोऽल्पतरसंयुक्तसंयोगाश्रयादिदं बहुतरसंयुक्तसंयोगाधिकरणं परम् इतश्च संयुक्तसंयोगभूयस्त्वाधिकरणादिदं संयुक्तसंयोगाल्पीयस्त्वाधिकरणमपरमिति(२) नियतदिग्देशयोः समानकालयोः पिण्डयोर्यतो द्रव्याद्भवति सा दिगित्यर्थः । न हि तादृशं द्रव्यमन्तरेण भूयसां संयुक्तसंयोगानामल्पीयसां वा पिण्डयोरुपनायकमन्यदस्ति न च तदुपनयमन्तरेण तत्तद्विशिष्टबुद्धिः न च तामन्तरेण परत्वापरत्वयोरुत्पत्तिः न च तदुत्पत्तिं विना तद्विशिष्टप्रत्ययव्यवहारौ । न च काल एव संयोगोपनायकोऽस्तु किं द्रव्यान्तरेणेति वाच्यम् कालस्य नियतक्रियोपनायकत्वेनैव सिद्धेः । अनियतपरधर्मोपनायकत्वकल्पनायान्तु (३)काश्मीरकुङ्कमपङ्करागं कार्णाटकामिनीकुचकलशं प्रत्युपनयेत् । आकाशात्मनोरपि तथा परधर्मोपसंक्रामकत्वे स एव प्रसङ्गः । दि-

---

(१) यौगपद्यादीति । अथ भविष्यति श्वो भवितेत्यादिप्रत्ययो आदिपदग्राह्यः । तथा च युगपज्जात इत्यादिप्रत्ययस्य तत्तत्कार्योत्पत्त्यधिकरणत्वेन काल एव विषयः तदुत्पत्त्यधिकरणत्वेन व्यवहारविषयस्य तदुत्पत्तिकारणत्वनियमात् तदुत्पत्तिकारणत्वस्य तत्कारणताव्याप्यत्वात् इति भावः ।

(२) इतीति । विशिष्टबुद्धिरिति शेषः । तथाचास्मादिदं दूरमस्मादिदमान्तिकमिति दैशिकपरत्वापरत्वबुद्धिर्यतस्तादृगनुमापकं लिङ्गमित्यर्थः । कालवत् दैशिकपरत्वापरत्वासमवायिकारणदिक्पिण्डसंयोगाश्रयतया लाघवादेका दिक् सिद्ध्यतीति भावः ।

(३) कालः क्रियाविशेषोपनायकः दिक्च संयोगविशेषोपनायिकेति नियमानङ्गीकारे दोषमाह काश्मीरेति । काश्मीरीकुचविलसत्कुङ्कुमपरागरञ्जिता कार्णाटी स्यादिति बुद्धिः स्यादिति भावः ।

शस्तु नियतपरधर्मोपसंक्रामकतयैव सिद्धत्वान्नातिप्रसङ्गः । एवञ्च क्रियोपनायकात् कालात् संयोगोपनायिका दिक् पृथगेव । किञ्चास्मात् पूर्वमिदम् अस्माद्दक्षिणमिदम् अस्मात्पश्चिममिदम् अस्मादुत्तरमिदम् अस्माद्दक्षिणपूर्वमिदम् अस्माद्दक्षिणपश्चिममिदम् अस्मात्पश्चिमोत्तरमिदम् अस्मादुत्तरपूर्वमिदम् अस्मादधस्तादिदम् अस्मादुपरिष्टादिदम् इत्येते प्रत्यया इत इदमितीत्यनेन सङ्गृहीताः एतेषां प्रत्ययानां निमित्तान्तरासम्भवात् । किञ्च (१)नियतोपाध्युन्नायकः कालः अनियतोपाध्युन्नायिका दिक् । भवति हि यदपेक्षया यो वर्तमानः स तदपेक्षया वर्तमान एव, दिगुपाधौ तु नैवं नियमः यं प्रति या प्राची तं प्रत्येव कदाचित्तस्याः प्रतीचीत्वात् । एवमुदीच्यादिष्वपि वाच्यम् । (२)यदपेक्षया सूर्य्योदयाचलसन्निहिता या दिक् सा तदपेक्षया प्राची, यदपेक्षया सूर्य्यास्ताचलसन्निहिता या दिक् सा तदपेक्षया प्रतीची । सन्निधानन्तु सूर्यसंयुक्ते संयोगाल्पीयस्त्वं ते च सूर्य्यसंयोगा अल्पीयांसो भूयांसो वा दिगुपनेयाः । एवं प्राच्यभिमुखपुरुषवामप्रदेशावच्छिन्ना दिगुदीची, तादृशपुरुषदक्षिणभागावच्छिन्ना दिक् दक्षिणा । वामत्वदक्षिणत्वे तु शरीरावयववृत्तिजातिविशेषौ । गुरुत्वासमवायिकारणकक्रियाजन्यसंयोगाश्रयो दिक् अधः । अदृष्टवदात्मसंयोगजन्याग्निक्रियाजन्यसंयोगाश्रयो दिगूर्द्धा । एवञ्चेन्द्राग्नियमनिर्ऋतवरुणवायुसोमेशाननागब्रह्माधिष्ठानोपलक्षिता दश दिश इति व्यपदेशान्तरं प्राच्यादिव्यपदेशात् ॥ १० ॥

दिशो द्रव्यत्वं नित्यत्वञ्च वायुपरमाणुवदित्याह—

**द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ११ ॥**

गुणवत्त्वाद्द्रव्यत्वम् अनाश्रितत्वाच्च नित्यत्वमित्यर्थः ॥ ११ ॥

एकत्वमतिदिशन्नाह—

**तत्त्वम्भावेन ॥ १२ ॥**

---

(१) नियतोपाधीति । पुरुषाभेदे भेदविरहो नैयत्यं तादृशोपाधिमत्त्वं कालावच्छेदकस्य, पुरुषाभेदेपि भेदोऽनैयत्यं, तच्च दिगवच्छेदकस्यैवेत्याह भवतीत्यादिना ।

(२) यदपेक्षयेति । यदवधित इत्यर्थः । तथा च पाटलिपुत्रादुदयगिरिः प्राचीत्यत्र पाटलिपुत्रमवधिस्तन्निष्ठोदयगिरिसंयुक्तपारम्पर्यागतसंयोगापेक्षयाऽल्पतरोदयगिरिसंयुक्तसंयोगाश्रयत्वरूपमुदयाचलसन्निहितत्वमस्तीति तत्प्रतीत्युपपत्तिरिति भावः । एवमन्यत्रापि ।

दिग्लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च सत्तावदेकत्वं तदनुविधानादेकपृथक्त्वम् ॥ १२ ॥

ननु यद्येकैव दिक् कथं तर्हि दश दिश इति प्रतीतिव्यवहाराविल्यत आह—

**कार्यविशेषेण नानात्वम् ॥ १३ ॥**

कार्य्यविशेषः (१)कार्य्यभेदस्तेन नानात्वोपचार इत्यर्थः ॥ १३ ॥

तमेव कार्यभेदं दर्शयन्नाह—

**आदित्यसंयोगाद् भूतपूर्वाद्भविष्यतो भूताच्च प्राची॥१४॥**

प्राक् अस्यां सविता अञ्चतीति प्राची, तथाच यस्यां दिशि मेरुप्रदक्षिणक्रमेण भ्रमत आदित्यस्य प्रथमं संयोगो भूतपूर्वो भविष्यन् वा भवन् वा सा दिक् प्राची। अत्र पुरुषाभिसन्धिभेदमाश्रित्य कालत्रयोपवर्णनम्, भवति हि कस्यचित्पूर्वेद्युः प्रातरस्यां दिशि आदित्यसंयोगः प्रथमं वृत्त इतीयं प्राचीति प्राचीव्यवहारः कस्यचिदपरेद्युरस्याम्, आदित्यसंयोगः प्रथमं भावीत्यभिसन्धाय प्राचीव्यवहारः, कस्यचिदिदानीम् अस्याम् आदित्यसंयोगो भवन्नस्तीत्यभिसन्धाय प्राचीव्यवहारः। भूतादिति आदिकर्मणि क्तप्रत्ययः तेनाभिसन्धेरनियमात् यदाप्यादित्यसंयोगो नास्ति रात्रौ मध्याह्नादौ वा तत्रापि प्राचीव्यवहारानुगमः सिद्ध्यतीति भावः ॥ १४ ॥

दिगन्तरव्यवहारेऽपीममेव प्रकारमतिदिशन्नाह—

**तथा दक्षिणा प्रतीची उदीची ॥ १५ ॥**

तद्वदेव दक्षिणदिग्वर्त्तिनगादिना सहा(२)दित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताद्वा दक्षिणाव्यवहारः। एवं प्रतीच्युदीच्योरपि व्यवहार उन्नेयः। वामत्वदक्षिणत्वे निरुक्ते एव ॥ १५ ॥

दिगन्तरालव्यवहारेऽपीममेव प्रकारमतिदिशन्नाह—

**एतेन दिगन्तरालानि व्याख्यातानि ॥ १६ ॥**

प्राचीदक्षिणयोर्दिशोर्लक्षणसाङ्कर्येण दक्षिणपूर्वा दिगिति व्यव-

---

(१) कार्यभेद उपाधिभेद इति यावत्।

(२) आदित्येति । आदित्यसंयुक्तयत्किञ्चिन्मूर्तसंनिहिता दिग्दक्षिणेत्यर्थः । इदमुपलक्षणं सुमेरुव्यवहितत्वमपि तथोपाधिः। अस्ताचलसंनिहितत्वं प्रतीच्याः सुमेरुसन्निहितत्वं चोदीच्या उपाधिरिति भावः।

हारः। एवं दक्षिणपश्चिमा पश्चिमोत्तरा उत्तरपूर्वेत्यूह्यम्। एते चादित्यसंयोगा येन विभुना द्रव्येणोपनीयन्ते सा दिगिति कणादरहस्ये व्युत्पादितं विस्तरतः॥ १६॥

चतुर्णां भूतानां रूपादीनि लक्षणानि कारणगुणपूर्वकतया तात्त्विकानि अन्यथा त्वौपाधिकानीति व्यवस्थितं पूर्वमेव। विशेषगुणशून्यविभुलिङ्गञ्चोक्तम्। इदानीमाकाशस्य लिङ्गं शब्दः परीक्षणीयः। सन्ति चात्र तान्त्रिकाणां विप्रतिपत्तयः। (१)केचिच्छब्दं द्रव्यमाचक्षते, केचिद्गुणम्, गुणत्वे सत्यप्येके नित्यमाहुः अपरे त्वनित्यम्, अन्ये तु शब्देऽपि स्फोटाख्यं शब्दान्तरमाहुः। तदत्र परीक्षामारभमाणः, परीक्षाप्रथमाङ्गं संशयमेव तावल्लक्षणतः कारणतश्च व्यवस्थापयन्नाह—

**सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः॥ १७॥**

(२)सामान्यप्रत्यक्षादिति। सामान्यवतो धर्मिणः प्रत्यक्षात् ग्रहणात् मतुब्लोपात्। विशेषाप्रत्यक्षादिति। विशेषस्य परस्परव्यावर्त्तकस्य धर्मस्य वक्रकोटरादेः शिरःपाण्यादेश्चाप्रत्यक्षादग्रहणात्। विशेषस्मृतेः विशेषस्य कोटिद्वयस्य स्थाणुत्वपुरुषत्वलक्षणस्य स्मरणात्। स्मरणमपि ग्रहणपरं(३) क्वचिदनुभूयमानधर्मयोरपि कोटित्वात्, चकाराददृष्टादेः संशयकारणस्य संग्रहः। (४)असाधा-

---

(१) सांख्या इत्यर्थः। गुणपक्षेपि मीमांसका नित्यं नैयायिका अनित्यं शब्दमाहुः। अन्येत्विति। वैयाकरणा इत्यर्थः।

(२) सामान्येति। अत्र सामान्यवतो धर्मिणः प्रत्यक्षात्सामान्यप्रकारकप्रत्यक्षादिति प्राचीनमतम् तथाचैतन्मते साधारणधर्मवद्धर्मिज्ञानादेव संशयः तस्य च संशयं प्रत्यन्वयव्यतिरेकानुविधायिनी कारणतेति भावः। नवीनास्तु धारावाहिकसंशयस्थले साधारणधर्मवद्धर्मिविषयकसमूहालंबनज्ञानस्यानुभविकतया साधारणधर्मप्रकारकज्ञानस्य संशयं प्रत्यन्वयव्यतिरेकाभावादकारणत्वेन सामान्यवद्विषयकप्रत्यक्षात्संशयो भवति इत्याहुः। स च धर्मितावच्छेदकप्रकारकज्ञानादित्यत्र पर्यवस्यति अस्मिन्कल्पे साधारणधर्मज्ञानादिकं कोटिद्वयोपस्थापकं सत्क्वचित्संशय उपयुज्यते। वस्तुतस्तु धर्मितावच्छेदकप्रकारकज्ञानं विशेषदर्शनाभावः कोटिद्वयज्ञानं संनिकर्षादिकं च संशयसामग्रीति॥

(३) ग्रहणपरं ज्ञानपरमित्यर्थः।

(४) ननु सामान्यधर्म एव तत्तदभावसमानाधिकरण इति तद्वद्धर्मिणो एकतरानिश्चायकत्वात्संशयहेतुत्वं युक्तमसाधारणस्य तु तत्तदभावव्यावृत्तरूपस्य साधारणत्वाभावात् कथं संशयजनकतेत्याशंक्य प्राचीनमताभिप्रायेण निराकरोति असाधारण इति।

रणो धर्मोऽनध्यवसायात्मकज्ञानजनक इति नोक्तः । (१)यद्वा असाधारणस्यापि व्यावृत्तिद्वारा कारणत्वं सपक्षविपक्षव्यावृत्तिः साधारणधर्म एवेति नोक्तः । (२)विप्रतिपत्तिरपि विरुद्धप्रतिपत्तिद्वयजन्यं वाक्यद्वयं शब्दो नित्य इत्यपरं तदुभयं, तदुभयजन्यञ्च ज्ञानद्वयमयुगपद्भावित्वात् सम्भूय न संशायकमतस्तत्र शब्दत्वादिरसाधारणः, सत्त्वप्रमेयत्वादिः साधारणो वा धर्मः संशायक इति (३)पृथङ्नोक्ता ।

समानतन्त्रे गौतमीयेऽनध्यवसायज्ञानस्यानभ्युपगमात् असाधारणो धर्मः संशयकारणत्वेनोक्तः । विप्रतिपत्तेर्विरुद्धवाक्यद्वयस्यान्वयव्यतिरेकशालितया संशयकारणत्वमुक्तम् । न्यायभाष्ये च उपलभ्यमानत्वं यत् संशयकारणमुक्तं सदप्युपलभ्यते असदप्युपलभ्यते इति उपलभ्यमानमिदं सदसद्वेति, यच्चानुपलभ्यमानत्वं सदपि नोपलभ्यते मूलककीलकोदकादि, असदपि नोपलभ्यते गगनारविन्दादि, तथाच पञ्चविधः संशय इति । तदेतत्सामान्यरोरोति सामान्यप्रत्यक्षादित्यनेनैव गतार्थम् । न्यायवार्त्तिकेऽपि यद् कारणभेदेन संशये त्रित्वमुक्तं तदपि न सम्भवति व्यभिचारेण समानधर्मादीनां त्रयाणां कारणत्वस्यैवासम्भवात् । न हि तृणारणिमणिजन्यवन्हौ, वैजात्यवदत्रापि वैजात्यं कल्पनीयं संशयत्वावच्छिन्नकार्य्यं प्रति समानधर्मत्वेनैव कारणतायाः कल्पनात् । यच्च प्रधानविधिकोटित्वप्रधाननिषेधकोटित्वादि वैजात्यमुक्तम्, (४)तदननुगतत्वान्नावच्छेदकम् ।

(१) नव्यमतेन समाधत्ते यद्वेति । असाधारणधर्मोपि एकसम्बधिज्ञानमपरं स्मारयतीति नियमेन व्यावृत्तत्वसम्बन्धज्ञानद्वारा तत्तदभावरूपकोटिद्वयं स्मारयन् कोटिद्वयज्ञानसम्पादनद्वारा संशये प्रयोजक इति एतन्मते संशयातिरिक्तानध्यवसायात्मकज्ञानस्यासत्त्वेपि न क्षतिरिति स्वरसः ।

(२) असाधारणधर्मवद्धर्मिज्ञानत्वेन पृथक्संशयहेतुत्वं निराकृत्य विप्रतिपत्तेस्तत्कारणत्वखण्डनाय विप्रतिपत्तिपदार्थमाह विप्रतिपत्तिरपीति । वाक्यद्वयस्वरूपमाह शब्द इत्यादिना तदुभयमित्यन्तेन । अपरन्तदुभयं = शब्दोऽनित्य इति वाक्यद्वयमित्यर्थः । तथाविधवाक्यद्वयजन्यं क्रमिकज्ञानद्वयमपि अयुगपद्भावित्वात्संशयाजनकमित्याह तदुभयजन्यञ्चेति । एकैकज्ञानस्यैकैककोटिज्ञानहेतुत्वे क्रमिकमप्रामाण्यज्ञानास्कंदितमेकैककोटिज्ञानं स्यात् न तु संशयरूपमिति भावः ।

(३) पृथगिति । तथा च वाक्यद्वयजन्यशाब्दबोधानन्तरं तत्समानाकारं मानसज्ञानं हेतुत्वेन परिकल्प्य क्षणविलम्बेन संशयस्वीकारे तत्स्थले शब्दत्वस्यासाधारणस्योपस्थितत्वात्तदादाय, परक्षणे वा सत्त्वादिकं साधारणधर्ममादाय संशयस्याङ्गीकारेण विप्रतिपत्तिर्न पृथगुक्तेत्यर्थः ।

(४) अननुगतत्वादिति । तादृशवैजात्यं कार्यतावच्छेदकं न भवति सकलकार्याव्यापकत्वात

तथाच संशयो न त्रिविधो न वा पञ्चविधः किन्त्वेकविध एव, प्रकारान्तरेण तु द्वैविध्यं सूत्रकृदेव स्पष्टयति । ननु जिज्ञासाजनकज्ञानं संशय इति न लक्षणम् अनध्यवसायेऽपि गतत्वात्, संस्काराजनकज्ञानं संशय इत्यपि निर्विकल्पकसाधारणं विशिष्टज्ञानत्वेन संशयस्यापि संस्कारजनकत्वात्, संशयत्वञ्च जातिरपि न लक्षणं (१)धर्म्यंशे संशयत्वाभावेन तदंशे तज्जात्यभावात् जातेश्चाव्याप्यवृत्तित्वानभ्युपगमात् इति चेत्, एकस्मिन् धर्मिणि विरोधिनानाप्रकारकं ज्ञानं संशय इति तल्लक्षणात् ॥ १७ ॥

द्विविधः संशयो बहिर्विषयकोऽन्तर्विषयकश्च । बहिर्विषयकोऽपि दृश्यमानधर्मिकोऽदृश्यमानधर्मिकश्च । तत्र दृश्यमानधर्मिको यथा ऊर्द्ध्वत्वविशिष्टस्य धर्मिणो दर्शनात् अयं स्थाणुः पुरुषो वेति । अदृश्यमानधर्मिको यथा अरण्ये झाटाद्यन्तरिते गोगवयादिपिण्डे विषाणमात्रदर्शनात् अयं गौर्गवयो वेति । वस्तुतस्तत्रापि विषाणधर्मिक एव सन्देहो विषाणमिदं गोसम्बन्धि गवयसम्बन्धि वेति । (२)विवक्षामात्रात्तु द्वैविध्याभिधानम् । (३)यत् सामान्यं संशयहेतुस्तदनेकत्र दृष्टं संशायकम् एकत्र धर्मिणि वा दृष्टं संशयहेतुरित्यत्र प्रथमां विधामाह—

## दृष्टञ्च दृष्टवत् ॥ १८ ॥

दृष्टमूर्द्ध्वत्वं संशयहेतुः। दृष्टवदिति वतिप्रत्ययः तेन दृष्टाभ्यां स्थाणुपुरुषाभ्यां तुल्यं वर्त्तते पुरोवर्त्तिनि यदूर्द्ध्वत्वं तद्दृष्टं संशयहेतुरित्यर्थः ॥ १८ ॥

एकधर्मिविषयं यद्दृष्टं तदुदाहरति—

---

कश्चित्संशयः साधारणधर्मवद्धर्मिज्ञानजन्यः प्रधानविधिकोटिः कश्चित्तु प्रधाननिषेधकोटिः कश्चिच्च प्रधानोभयकोटिरित्येतेषामनुगमासम्भवादित्यर्थः । अव्यहितोत्तरत्वनिवेशे च गौरवादित्याशयः । असाधारणधर्मादीनां कारणत्वानुभवेन गौरवस्य प्रामाणिकतया नायन्दोष इति न्यायसूत्रपक्षपातिनः ।

(१) धर्म्यंश इति । वह्न्यंशे संशयात्मकस्यापि पर्वतांशे निश्चयात्मकस्यैव पर्वतो वह्निमान्नवेति संशयस्य स्वीकारात् इत्यर्थः ।

(२) विवक्षामात्रादिति । विषाणमात्रदर्शनोत्तरसन्देहस्य दृश्यमाणधर्मिकत्वेपि गोबलीवर्दन्यायेन विषाणधर्मिकान्यदृश्यमानधर्मिकत्वं तदन्यदृश्यमानधर्मिकत्वं चेति कौचिद्धर्मावाश्रित्य विभाजकेच्छामात्रेण द्विधोक्तिर्बहिर्विषयस्य संशयस्येत्यर्थः ।

(३) बाह्यान्तर्विषयभेदेन संशयद्वैविध्यमुक्त्वा कारणभेदेन तदाह यदिति ।

अयथादृष्टमयथादृष्टत्वाच्च ॥ १९ ॥

संशयहेतुरिति शेषः । चकारः पूर्वोक्तसमुच्चयार्थः । अयथादृष्टत्वाद्धेतोर्यथादृष्टमपि संशायकम् यथा—चैत्रो यथादृष्टः केशवान्, कालान्तरे अयथादृष्टः केशविनाकृतो दृष्ट इत्यर्थः । क्रमेण तत्रैव चैत्रे वस्त्रावृतमस्तके दृष्टे सति भवति संशयश्चैत्रोऽयं सकेशो निष्केशो वेति । तत्र हि चैत्रत्वं समानो धर्मः संशायकः स चैकत्रैव दृष्ट इत्यभिन्न एव धर्मिणि दृष्टः संशयहेतुः ॥ १९ ॥

उपलभ्यमानत्वं समानमेव धर्मं संशयकारणमाह—

विद्याऽविद्यातश्च संशयः ॥ २० ॥

विद्येति । आन्तरसंशयो हि विद्याऽविद्याभ्यां भवति यथा मौहूर्त्तिकः सम्यगादिशति चन्द्रोपरागादि, असम्यगपि । तत्र स्वज्ञाने संशयोऽस्य जायते सम्यगादिष्टमसम्यग्वेति । (१)यद्वा ज्ञानं हि क्वचिद्विद्या भवति क्वचिच्चाविद्या अप्रमा भवति, तथाच ज्ञायमानत्वात् सदिदमसद्वेति संशयो जायते । पुनः संशयग्रहणमिहापि सामान्यप्रत्यक्षादेव संशयो न तु निमित्तान्तरादिति सूचनार्थम् । तथाच "समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः" इति गौतमीये लक्षणे उपलब्ध्यनुपलब्ध्यव्यवस्थेत्यस्य पृथगेव संशयकारणत्वं (२)कैश्चिदुक्तं तन्निरस्तम् ॥ २० ॥

एवं लक्षणतः स्वरूपतश्च परीक्षाप्रथमाङ्गं संशयं व्युत्पाद्य इदानीं परीक्षाविषयं शब्दं धर्मिणं दर्शयन्नाह—

श्रोत्रग्रहणो योऽर्थः स शब्दः ॥ २१ ॥

श्रोत्रं ग्रहणं ग्रहकरणं यस्य स श्रोत्रग्रहणः, अर्थ इति धर्मीत्यर्थः । तथाच शब्दवृत्तिधर्मेषु श्रोत्रग्राह्येषु शब्दत्वतारत्वादिगुणत्वसत्त्वादिषु (३)नातिव्याप्तिः । अर्थपदेन धर्मिपरेण (४)जातिधर्मि-

(१) यद्वेति । सूत्रोक्तविद्याविद्यात इत्यस्य भावप्रधाननिर्देशत्वेन विद्यात्वाविद्यात्वाभ्यामित्यर्थः तथा चेदं ज्ञानं प्रमात्वाप्रमात्वसहचरितज्ञायमानत्ववदिति ज्ञानादिदं प्रमा न वेति सन्देह इत्यर्थः ।

(२) कैश्चिद्भाष्यकारैरित्यर्थः ।

(३) नातिव्याप्तिरिति । शब्दत्वादौ धर्मित्वाभावादिति भावः ।

(४) जातीति । समवायेन जातिमात्राश्रयत्वमित्यर्थः ।

त्वम् अभिप्रेतम् अतः स्फोटनामा शब्दसमवेतः शब्दो नास्तीति सूचितम्। नन्वेकं पदम् एकं वाक्यमिति प्रतीतिबलादवश्यं स्फोटोऽङ्गीकर्त्तव्यः, न हि बहुवर्णात्मके पदे बहुवर्णात्मके वा वाक्ये भवत्येकत्वप्रत्ययः। स्फोट इति चार्थस्फुटीकरणाधीना संज्ञा। वर्णानां प्रत्येकं तावदर्थप्रत्ययाजनकत्वमेव, मिलनन्त्वेकवक्तृकाणामाशुतरविनाशिनामसम्भवीति स्फोटादेवार्थप्रत्ययः, तज्ज्ञानमन्तरेणार्थस्फुटीभवाभावात्। स च स्फोटो यद्यपि पदभावेनावस्थितेषु सर्वेष्वेव वर्णेषु तथापि चरमवर्णे स्फुटीभवति। मैवम्। सङ्केतवद्वर्णत्वं पदत्वं तथा च सङ्केतबलादेव पदादर्थप्रतीतौ किं स्फोटेन। (१)वर्णानाम्बहूनामप्येकार्थप्रतिपादकत्वमेकं धर्ममभिप्रेत्य एकं पदमिति भाक्तो व्यवहारः एवं वाक्ये ऽपि। यदि वर्णातिरिक्तः पदात्मा कश्चित् प्रत्यक्षतो गृह्येत स्वीक्रियेतापि स्फोटः सोऽयं स्फोटवादस्तुच्छत्वादुपेक्षितः सूत्रकृता ॥ २१ ॥

तदेवं शब्दे धर्मिण्युपस्थिते गुणत्वे सत्येव तस्याकाशलिङ्गत्वम्। अतो गुणत्वव्यवस्थापनाय त्रिकोटिकं संशयमुपपादयन्नाह—

**तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्य उभयथा दृष्टत्वात् ॥ २२ ॥**

शब्दे संशय इति शेषः। शब्दे शब्दत्वं श्रोत्रग्राह्यत्वं चोपलभ्यते, तच्च तुल्यजातीयेषु त्रयोविंशतौ गुणेषु अर्थान्तरभूतेषु द्रव्येषु कर्मसु च विशेषस्य व्यावृत्तेः उभयथा उभयत्र दर्शनात् 'शब्दः किं गुणो द्रव्यं कर्म वेति' संशयं जनयति। सामान्यविशेषसमवायकोटिकत्वन्तु सत्त्वकारणवत्त्वादिवैधर्म्यदर्शनान्न भवति। ननु चासाधारणधर्मस्यानध्यवसायजनकत्वात् संशयजनकत्वं प्रतिषिद्धम् शब्दत्वं श्रोत्रग्राह्यत्वञ्चासाधारण एव धर्मः कथं संशयं जनयिष्यतीति चेत्सत्यम्। व्यावृत्तिरस्य सजातीयासजातीयसाधारणीति व्यावृत्तेः साधारणस्यैव धर्मस्य संशयजनकत्वेनोक्तत्वात्।

---

(१) वर्णविशिष्टवर्णत्वं पदत्वम् वै० अव्यावहितोत्तरत्वसम्बन्धेन। उक्तपदं तज्ज्ञानं वा शक्तिज्ञानसाहाय्येनैवार्थं बोधयति ततश्च संसर्गावगाही शाब्दबोधः एवं च वर्णानामाशुतरविनाशित्वेपि न क्षतिरित्याशयेनाह वर्णानामिति।

(१)शब्दत्वप्रतियोगिकी व्यावृत्तिः समानो धर्मः उभयगतव्यावृत्तिप्रतियोगित्वञ्च शब्दत्वमसाधारणो धर्मः । तदुक्तं 'विशेषस्योभयथा दर्शनादिति'। अत्र हि विशेषस्य व्यावृत्तेरुभयत्र सजातीये विजातीये च दर्शनस्य संशयहेतुत्वेनोपादानात् स च समान एव धर्म इति ॥ २२ ॥

तदेवं संशयं दर्शयित्वा द्रव्यत्वकोटिव्युदासायाह—

**एकद्रव्यत्वान्न द्रव्यम् ॥ २३ ॥**

एकं द्रव्यं समवायि यस्य तदेकद्रव्यं द्रव्यञ्च किमप्येकद्रव्यसमवायिकारणकं न भवतीति द्रव्यवैधर्म्यान्नायं शब्दो द्रव्यमित्यर्थः ॥ २३ ॥

ननु कर्मैकद्रव्यमेव तथाच शब्दः कर्म स्यादित्यत आह—

**नापि कर्माऽचाक्षुषत्वात् ॥ २४ ॥**

प्रत्ययस्य शब्दविषयकस्याचाक्षुषत्वात् (२)चक्षुर्भिन्नबहिरिन्द्रियजन्यत्वादित्यर्थः । तथा च शब्दत्वं न कर्मवृत्ति चाक्षुषप्रत्यक्षावृत्तिजातित्वात् रसत्वादिवदिति भावः ॥ २४ ॥

ननु शब्दः कर्म आशुतरविनाशित्वात् उत्क्षेपणादिवदिति चेदत्राह—

**गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् ॥ २५ ॥**

अपवर्गः आशुनाशः स च गुणत्वेऽपि द्वित्वादिवदाशुभाविनाशकसन्निपाताधीन इति कर्मभिः साधर्म्यमात्रमस्य न तु कर्मत्वमेव । त्वदुक्तहेतोराशुतरविनाशित्वस्य द्वित्वज्ञानसुखदुःखादिभिरनैकान्तिकत्वमिति भावः ॥ २५ ॥

ननु सिध्यतु शब्दो गुणस्तथापि नासावाकाशलिङ्गम्। आकाशं हि तदाऽनुमापयेत् यदि तस्य कार्य्यः स्यात् । किन्तु नित्य एवायं, कदाचिदनुपलम्भस्तु व्यञ्जकाभावप्रयुक्त इत्याशङ्क्याह—

---

(१) ननु व्यावृत्तिर्नाम सामानाधिकरण्यरूपः सम्बन्ध एव वाच्यस्तस्य च किञ्चित्प्रतियोगिकत्वाकिञ्चिदनुयोगिकत्वानियतत्व।द्व्यावृत्तत्वे तदभावात्प्रमेयत्वादिवत्तस्य साधारणत्वेपि न सम्बन्धतेत्याशङ्क्याह शब्दत्वेति । वृत्त्यनियामकसम्बन्धरूपस्य व्यावृत्तत्वस्य सम्बन्धज्ञानद्वारा एकसम्बन्धिज्ञानमपरस्मारकमितिनियमेन सामानाधिकरण्यवत् परस्परमेव प्रतियोग्यनुयोगिप्रतियोगि भवतीति भावः। उभयेति । गुणत्वद्रव्यत्वादिनिष्ठव्यावृत्तिप्रतियोगित्वं यस्य तादित्यर्थः ।

(२) चक्षुर्भिन्नेति । चक्षुरजन्यत्वादित्युक्तौ वायुस्पन्दे व्यभिचारस्तद्वारणाय चक्षुर्भिन्नेति ।

सतो लिङ्गाभावात् ॥ २६ ॥

यदि हि उच्चारणात् प्रागूर्द्ध्वं शब्दः सन् स्यात् तदा सतोऽस्य लिङ्गं प्रमाणान्तरं स्यात् । न चाश्रवणदशायां शब्दसत्त्वे प्रमाणमस्ति, तस्मात् कार्य्य एवायं न व्यङ्ग्य इति ॥ २६ ॥

इतश्च न व्यङ्ग्योऽसावित्याह—

नित्यवैधर्म्यात् ॥ २७ ॥

नित्येन सहास्य शब्दस्य वैधर्म्यमुपलभ्यते यतश्चैत्रो वक्तीत्यश्रावृतोऽपि चैत्रमैत्रादिर्वचनेनानुमीयते । न च व्यञ्जकः प्रदीपादिर्व्यङ्ग्येन घटादिना क्वचिदनुमीयते, तस्माज्जन्य एवायं न व्यङ्ग्य इति भावः ॥ २७ ॥

व्यङ्ग्यत्वे बाधकमुक्त्वा सम्प्रत्यनित्यत्वे हेतुमाह—

अनित्यश्चायं कारणतः ॥ २८ ॥

कारणत उत्पत्तेर्दृष्टत्वादिति शेषः । उपलभ्यते हि भेरीदण्डसंयोगादिभ्यः प्रादुर्भवन् शब्दः, तथाचोत्पत्तिमत्त्वादनित्योऽयमिति । यद्वा कारणत इति कारणवत्त्वहेतुमुपलक्षयति ॥ २८ ॥

ननु च कारणवत्त्वं शब्दस्य स्वरूपासिद्धमत आह—

न चासिद्धं विकारात् ॥ २९ ॥

शब्दस्य कारणवत्त्वमसिद्धमिति न वाच्यम् तीव्रमन्दादिभावेन विकारस्य दर्शनात् भेरीदण्डाभिघातस्य तीव्रतया तीव्रस्य मन्दतया मन्दस्य शब्दस्योपलम्भात् । न ह्यभिव्यञ्जकतीव्रत्वाद्यधीनोऽभिव्यङ्ग्यतीव्रत्वादिः । तथाच कारणतो विकारादनुमीयते जन्योऽयं न त्वभिव्यङ्ग्य इति ॥ २९ ॥

ननु व्यञ्जकस्यैवायं महिमा यत्तीव्रमन्दादिभावेनाभिव्यनक्ति भेरीदण्डाद्यभिहतो वायुरेव तीव्रो मन्दश्च तथा प्रत्ययमाधत्ते अत आह—

अभिव्यक्तौ दोषात् ॥ ३० ॥

शब्दस्याभिव्यक्तौ समानदेशानां समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं दोषः स्यात् । न च तादृशानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं क्वचिद् दृष्टम् । (१)अत्र यदि तथा न स्वीक्रियेत तदा

---

(१) अत्राभिव्यक्तिपक्षे इत्यर्थः ।

११

ककाराभिव्यक्तौ सर्ववर्णाभिव्यक्तिप्रसङ्गः। ननु समानदेशानामपि सत्त्वनरत्वब्राह्मणत्वानां स्वरूपभेद-संस्थान-योनिव्यङ्ग्यानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं दृष्टमेवेति चेन्न तेषां समानदेशत्वाभावात्। न हि यावान् देशः सत्त्वस्य तावानेव नरत्वस्य ब्राह्मणत्वस्य वा ॥ ३० ॥

इतश्च नाभिव्यङ्ग्यतेत्याह—

**संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः ॥ ३१ ॥**

संयोगात् भेरीदण्डादिसंयोगात्, विभागात् वंशे पाट्यमाने। तत्र संयोगस्तावन्नाद्यस्य शब्दस्य कारणं तदभावात् तस्मात् वंशदलद्वयविभागो निमित्तकारणं दलाकाशविभागश्चासमवायिकारणम्। यत्र च दूरे वीणादावुत्पन्नः शब्दः तत्र सन्तानक्रमेण उत्पद्यमानः शब्दः कर्णशष्कुल्यवच्छिन्नमाकाशदेशमासादयन् गृह्यते तेन शब्दादपि शब्दनिष्पत्तिरिति ॥ ३१ ॥

अनित्यत्वे हेत्वन्तरं समुच्चिनोति—

**लिङ्गाच्चानित्यः शब्दः ॥ ३२ ॥**

(१)वर्णात्मकः शब्दोऽनित्यः जातिमत्त्वे सति श्रोत्रग्राह्यत्वात् वीणादिध्वनिवदित्यर्थः ॥ ३२ ॥

इदानीं नित्यत्वे सिद्धान्तिनोक्तान् हेतून् दूषयितुमाह—

**(२)द्वयोस्तु प्रवृत्त्योरभावात् ॥ ३३ ॥**

तुशब्दः पूर्वोक्तव्यवच्छेदकः पूर्वपक्षाभिव्यक्त्यर्थः। द्वयोराचार्यान्तेवासिनोरध्यापनेऽध्ययने च प्रवृत्तिर्दृश्यते तस्या अभावात् अभावप्रसङ्गात्। अध्यापनं हि सम्प्रदानं सम्प्रदीयते गुरुणा शिष्याय वेदः स यदि स्थिरो भवति तदा तस्य सम्प्रदानं सम्भवति। ननु सम्प्रदीयमानं गवादि दातृप्रतिग्रहीत्रोरन्तराल उपलभ्यते, न च वेदादि गुरुशिष्ययोरन्तराले उपलभ्यत इति नाध्यापनं सम्प्रदानमिति चेत् अन्तरालेऽपि तत्रस्थपुरुषश्रोत्रेण तदुपलम्भात्। किञ्चाभ्यासादपि शब्दस्य नित्यता, यथा पञ्चकृत्वो रूपं पश्यतीति स्थिरस्य रूपस्याभ्यासो दृष्टः तथा दशकृत्वोऽधीतोऽनुवाकः विंशतिकृत्वोऽधीत इत्यभ्यासः स्थैर्ये शब्दस्य प्रमाणम्। सिद्धे च

(१) वर्णात्मक इति। प्राचीनमतेऽसाधारण्यवारणाय शब्दत्वसामानाधिकरण्येनानित्यत्वसाधनम्।
(२) मीमांसकमतोक्तनित्यत्वसाधकहेतून् सूत्रत्रयेणाह द्वयोरित्यादिना।

स्थैर्य्ये विनाशकानुपलब्धेः "तावत् कालं स्थिरञ्चैनं कः पश्चान्नाशयिष्यति" इति नित्यतैव पर्य्यवसन्नेति भावः ॥ ३३ ॥

हेत्वन्तरं शब्दस्य नित्यत्वे आह—

प्रथमाशब्दात् ॥ ३४ ॥

"त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इति प्रथमोत्तमयोः सामिधेन्योस्त्रिरुच्चारणं स्थैर्य्यं विनाऽनुपपन्नमित्यर्थः ॥ ३४ ॥

शब्दनित्यत्वे हेत्वन्तरमाह—

सम्प्रतिपत्तिभावाच्च ॥ ३५ ॥

सम्प्रतिपत्तिः प्रत्यभिज्ञा तद्भावात् तत्सद्भावादित्यर्थः। प्रतिपत्तिशब्दादेव तद्विशेषस्य प्रत्यभिज्ञाया लाभात् सम्पूर्वः सत्यत्वमाह। तथाच यैव गाथा मैत्रेणोच्चारिता तामेवायमुच्चरति तमेव श्लोकं पुनः पुनः पठति उक्तमेव वचनं पुनः पुनरभिधत्से यदेव वाक्यं परारि परुच्च त्वयोक्तं तदेवेदानीमपि ब्रूषे स एवायं गकार इत्यादिप्रत्यभिज्ञाबलात् स्थैर्य्यं शब्दस्येति ॥ ३५ ॥

सर्वानिमान् हेतून् दूषयन्नाह—

(१)सन्दिग्धाः सति बहुत्वे ॥ ३६ ॥

सन्दिग्धा अनैकान्तिका इत्यर्थः। तदुक्तं—"विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्" इति। तथा च बहुत्वे नानात्वेऽपि अध्ययनमभ्यसनं प्रत्यभिज्ञानञ्च दृष्टमित्यनैकान्तिकत्वं हेतूनाम्। तथाहि नृत्यमधीते नृत्यमभ्यस्यति द्विरनृत्यत् यदेव नृत्यं परुदकार्षीरैषमोऽपि तदेव करोषि यदेव नृत्यमेकेन चारणेन कृतं तदेवायमपि करोतीति नृत्ये दृष्टत्वात्, तस्य च कर्मविशेषस्य त्वयाऽपि स्थैर्य्यानभ्युपगमात्॥३६॥

ननु पञ्चाशद्वर्णा अष्टाक्षरो मन्त्रः त्र्यक्षरो मन्त्रः अष्टाक्षराऽनुष्टुबित्यादिसङ्ख्या कथं ? वर्णानामनित्यत्वे उच्चारणभेदेनानन्त्यसम्भवादित्यत आह-

सङ्ख्याभावः सामान्यतः ॥ ३७ ॥

सङ्ख्यायाः पञ्चाशदादिसङ्ख्याया भावः सद्भावः सामान्यतः कत्वगत्वादिजातित इत्यर्थः। ककारादीनामानन्त्येऽपि कत्वगत्वाद्य-

(१) एकसूत्रेणैव सर्वान् हेतून् दूषयति सन्दिग्धा इति सूत्रेण। सन्दिग्धपदस्यानैकान्तिकार्थत्वे प्रमाणमाह तदुक्तमिति। परुदतीत ऐषमो वर्तमान इत्यर्थः।

वच्छिन्नानां पञ्चाशत्त्वं त्रित्वमष्टत्वं वा द्रव्यगुणादीनामान्तर्गणिकभेदेनानन्त्येपि नवत्वचतुर्विंशतित्वादिवदिति भावः।

ननु स एवायं गकार इति प्रत्यभिज्ञैव स्थैर्य्यसाधिका, न चैषा तीव्रो गकारो मन्दो गकार इति प्रतीत्या विरुद्धधर्मं गोचरयन्त्या बाध्यते तीव्रत्वादेस्तत्रौपाधिकत्वात्। न चोपाधिभेदादपि भेदो माभूत् तर्हि जवातापिञ्जादिसंयोगान्नीलपीतादिभावेन प्रथमानः स्फटिकमणिरपि नाना, कृपाणमणिदर्पणेषु दीर्घादिभावेन भासमानं मुखमपि वा नाना न भासेत। ननु कस्यायं तीव्रत्वादिधर्मो गकारोपाधिक इति चेन्न वायुधर्मो नादधर्मो ध्वनिधर्मो वा भविष्यति किं तत्र विशेषचिन्तया। त्वयापि तारत्वादेः कत्वगत्वादिना परापरभावानुपपत्त्या स्वाभाविकत्वाभ्युपगमादिति चेत्।

मैवम्। उत्पन्नो गकारः, नष्टो गकारः, श्रुतपूर्वो गकारो नास्ति, निवृत्तः कोलाहल इत्यादिविरोधिप्रतीतौ सत्यामपि चेत् इयं प्रत्यभिज्ञा न निवर्त्तते तदास्या जातिविषयताकल्पनात्। अन्यथा व्यक्तिस्थैर्य्यमालम्बमानायामस्यां सत्यामुक्तविरोधिप्रत्यया एव नोत्पद्येरन्। न चायं वायुधर्मस्तद्धर्माणां श्रोत्राविषयत्वात्। नापि नादधर्मः, नादो यदि वायुरेव तदा दोषस्योक्तत्वात् अन्यस्य निर्वक्तुमशक्यत्वात्। नापि ध्वनिधर्मः, शङ्खादिध्वनावनुपलभ्यमानेऽपि गकारे तारत्वादिप्रतीतेः। (१)स्वाभाविकत्वे तु न जातिसाङ्कर्य्यं गत्वादिव्याप्यस्य तस्य नानात्वाभ्युपगमात्। किञ्च शुकसारिकामनुष्यप्रभवेषु गकारादिषु स्फुटतरा रूपभेदप्रथाऽस्ति, एवं स्त्रीपुंसप्रभवेषु स्त्रीपुंसभेदप्रभवेषु च, यतः काण्डपटाद्यावृता अपि शुकादयोऽनुमीयन्ते। औपाधिकत्वन्त्वस्य नानुभूयमानोपाधिनिबन्धनं कुङ्कुमारुणा तरुणीतिवत्। नाप्यौपपत्तिकमौपाधिकत्वम् उपपत्तेस्तादृशप्रमाणस्याभावादिति सङ्क्षेपः॥३७॥

इति वैशेषिकसूत्रोपस्कारे शाङ्करे द्वितीयाध्यायस्य द्वितीयमाह्निकम्।

समाप्तश्चायं द्वितीयोऽध्यायः।

---

(१) ननु नैयायिकैस्तारत्वादिधर्मा गकारादौ स्वाभाविका वाच्यास्तथाचातारगकारगतगत्वाभाववत्ककारवृत्तितारत्वगत्वयोस्तारगकारे सत्त्वेन साङ्कर्यं स्यादित्यभिप्रायेणाशंक्य समाधत्ते स्वाभाविकत्वे त्वित्यादिना।

# तृतीयाध्याये प्रथमाह्निकम् ।

तदेवं द्वितीयाध्याये बहिर्द्रव्यपरीक्षामुपपाद्य उद्देशक्रमादिदानीमात्मपरीक्षायै पीठमारचयितुमाह—

**प्रसिद्धा इन्द्रियार्थाः ॥ १ ॥**

इन्द्रियाणामर्था गन्धरसरूपस्पर्शशब्दा बाह्यैकैकेन्द्रियग्राह्याः । तत्र "श्रोत्रग्रहणो योऽर्थः स शब्द" इति शब्दप्रसिद्धौ दर्शितायामर्थाद्गन्धादौ स्पर्शपर्य्यन्ते प्रसिद्धिर्दर्शितेत्यर्थः । तथाहि घ्राणग्रहणो योऽर्थः स गन्धः, रसनग्रहणो योऽर्थः स रसः, (१)चक्षुर्मात्रग्रहणो योऽर्थः तद्रूपम्, त्वगिन्द्रियमात्रग्रहणो योऽर्थः स स्पर्शः । सर्वत्र चार्थशब्देन धर्मी भावभूत उच्यते तेन गन्धत्वादौ गन्धाद्यभावे च नातिव्याप्तिः, तदेवं घ्राणग्रहणवृत्तिगुणत्वावान्तरजातिमत्त्वं गन्धत्वम् । एवं रसादावपि वाच्यम् तेन नातीन्द्रियगन्धाद्यनुपग्रहः ॥ १ ॥

इन्द्रियार्थप्रसिद्धेरात्मपरीक्षायामुपयोगमाह—

**इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥ २ ॥**

हेतुर्लिङ्गमर्थान्तरस्य आत्मनः । इन्द्रियार्थेभ्य इति । (२)इन्द्रियेभ्योऽर्थेभ्यश्च रूपादिभ्यस्तद्वद्भ्यश्च यदर्थान्तरम् आत्मा तस्य लिङ्गमित्यर्थः । यद्यपि ज्ञानमेव लिङ्गमिह विवक्षितम् तथापीन्द्रियार्थप्रसिद्धे रूपादिसाक्षात्कारस्य प्रसिद्धतरतया ताद्रूप्येणैव लिङ्गत्वमुक्तम् । तथाहि प्रसिद्धिः क्वचिदाश्रिता कार्य्यत्वात् घटवत् गुणत्वाद्वा क्रियात्वाद्वा । सा च प्रसिद्धिः करणजन्या क्रियात्वात् छिदिक्रियावत् । यच्च प्रसिद्धेः करणं तदिन्द्रियम् । तच्च कर्तृप्रयोज्यं करणत्वात् वास्यादिवत् । तथा यत्रेयं प्रसिद्धिराश्रिता, यः घ्राणादीनां करणानां प्रयोक्ता स आत्मा ॥ २ ॥

---

(१) चक्षुर्मात्रेति । रूपवद्द्रव्येऽतिव्याप्तिवारणाय मात्रपदम् ।

(२) इन्द्रियेभ्य इति । भूतान्तरापेक्षया इन्द्रियाणामात्मसारूप्येपि भेदप्रतिपादनाय, प्रत्यक्षाविषयत्वलक्षणसाधर्म्येण दिगादिसङ्ग्रहाय चेन्द्रियेभ्य इति पृथगुपात्तम् । यद्यपि प्रसिद्धेः पक्षतया हेतुत्वकथनमयुक्तम् तथाऽपि हेतुपदमत्रानुमितिजनकपरामर्शविशेष्यपरमिति नानुपपत्तिरिति भावः ।

ननु शरीरमिन्द्रियाणि वा प्रसिद्धेराश्रयोऽस्तु, प्रसिद्धिं प्रति तदुभयान्वयव्यतिरेकयोः स्फुटतरत्वात् किं तदन्याश्रयकल्पनया। तथाहि चैतन्यं शरीरगुणः तत्कार्य्यत्वात् तद्रूपादिवत्। एवमिन्द्रियगुणत्वेऽपि वाच्यमित्याशङ्क्याह—

**सोऽनपदेशः ॥ ३ ॥**

अपदेशो हेतुः तदाभासोऽनपदेशः। तथाच तत् कार्य्यत्वं प्रदीपजन्यज्ञानादावनैकान्तिकत्वादनपदेश इत्यर्थः ॥ ३ ॥

ननु तत्कार्यत्वं चैतन्यत्वावच्छिन्नस्यैव कार्यत्वं विवक्षितं प्रदीपादीनाञ्च समस्तमेव (१)चैतन्यं न कार्यमिति न व्यभिचार इत्याशङ्क्याह—

**कारणाज्ञानात् ॥ ४ ॥**

शरीरकारणानां करचरणादीनां तदवयवानां वा अज्ञानात् (२ ज्ञानशून्यत्वादित्यर्थः। पृथिव्यादिविशेषगुणानां हि कारणगुणपूर्वकता दृष्टा तथा च शरीरकारणेषु यदि ज्ञानं स्यात्तदा शरीरेऽपि सम्भाव्येत, न चैवम्। नन्वस्तु शरीरकारणेष्वपि चैतन्यमिति चेन्न ऐकमत्याभावप्रसङ्गात्। न हि बहूनाञ्चेतनानामैकमत्यं दृष्टम्, करावच्छेदेनानुभूतस्य करच्छेदेऽस्मरणप्रसङ्गात्, यतो "नान्यदृष्टं स्मरत्यन्यः" इति। किञ्च शरीरनाशे तत्कृतहिंसादिफलानुपभोगप्रसङ्गात्। न हि चैत्रेण कृतस्य पापस्य फलं मैत्रो भुङ्क्ते ततश्च कृतहानिरकृताभ्यागमश्च स्यात् ॥ ४ ॥

ननु शरीरकारणेषु सूक्ष्ममात्रया भानमस्ति शरीरे तु स्फुटमतो नाकारणगुणपूर्वकता न चैकमत्यानुपपत्तिरित्याशङ्क्याह—

**कार्य्येषु ज्ञानात् ॥ ५ ॥**

यदि हि शरीरमूलकारणेषु परमाणुषु चैतन्यं स्यात् तदा तदारब्धेषु कार्येषु घटादिष्वपि स्यात्। किञ्च पार्थिवविशेषगुणानां सर्वपार्थिववृत्तिताया व्याप्तेः कार्य्येष्वपि घटादिषु चैतन्यं स्यान्न च तत्र चैतन्यमुपलभ्यते इत्यर्थः ॥ ५ ॥

---

(१) चैतन्यमिति। तथा च ज्ञाननिष्ठदेहकार्यत्वं हेतुरित्यर्थः। व्यतिरेकेण घटादेर्दृष्टान्तत्वसम्भवात् इति शङ्कातात्पर्यम्।

(२) ज्ञानशून्यत्वादिति। एवं च ज्ञानं न देहविशेषगुणः अपाकजत्वे सति अकारणगुणपूर्वकत्वाच्छब्दवदित्यनुमानेन ज्ञानस्य देहगुणत्वाभावसिद्धिरित्यर्थः। देहकार्यत्वहेतुश्चाप्रयोजक इति भावः।

ननु घटादावपि सूक्ष्ममात्रया चैतन्यमस्त्येवेत्याशङ्क्याह—

अज्ञानाच्च ॥ ६ ॥

सर्वैः प्रमाणैरज्ञानात् कुम्भादौ न चैतन्यमित्यर्थः। सर्वप्रमाणागोचरस्याप्यभ्युपगमे, शशविषाणादेरप्यभ्युपगमप्रसङ्गः। न हि घटादौ चैतन्यं केनापि प्रमाणेन ज्ञायत इति ॥ ६ ॥

ननु श्रोत्रादिभिः करणैरधिष्ठाताऽनुमीयते इत्युक्तं, तदयुक्तम् न हि श्रोत्रादिभिरात्मनस्तादात्म्यं तदुत्पत्तिर्वा, न च (१)ताभ्यामन्तरेणाविनाभावसिद्धिः,न चाविनाभावमन्तरेणानुमितिरित्यत आह—

अन्यदेव हेतुरित्यनपदेशः ॥ ७ ॥

हेतुः साध्यादन्य एव भवति न तु साध्यात्मा साध्याविशेषप्रसङ्गात्, तस्मात्तादात्म्यघटितो हेतुरहेतुरनपदेश इत्यर्थः ॥ ७ ॥

ननु श्रोत्रादिभिरिन्द्रियैरात्मनो यथा न तादात्म्यं तथा तदुत्पत्तिरपि नास्ति नहि वह्नेर्धूम इव आत्मनः श्रोत्रादिकरणमुपपद्यते इत्यत आह—

अर्थान्तरं ह्यर्थान्तरस्यानपदेशः ॥ ८ ॥

हि यतः कार्य्यं धूमादि यथा रासभादेरर्थान्तरन्तथा कारणाद्वह्न्यादेरप्यर्थान्तरमेव। तथा चार्थान्तरत्वाविशेषात् धूमो रासभं न गमयति किन्तु वह्निमेव गमयतीत्यत्र (२)स्वभावविशेष एव नियामकः। स च स्वभावो यदि कार्य्यादन्यस्यापि भवति तदा सोऽ(३)-प्यदेशो भवत्येव। तथा च कार्य्यमविवक्षितस्वभावभेदम् अनपदेशः। तथा च तादात्म्यतदुत्पत्ती एवाविनाभावः तयोरेवाविनाभावपर्य्यवसानम् ताभ्यां समानोपायो वा (४)तदुभयमात्रग्रहाधीनग्रहो वेति स्वशिष्यव्यामोहनाय परिभाषामात्रमिति भावः ॥ ८ ॥

सम्प्रत्यविनाभावस्य तदुभयव्यभिचारमेव स्फुटयितुमाह—

संयोगि समवाय्येकार्थसमवायि विरोधि च ॥ ९ ॥

शरीरं त्वग्वत् शरीरत्वादित्ययं हेतुः संयोगी। वृद्धिक्षयवद्द्रव्य-

(१) ताभ्यामिति। तदात्मनस्तदुत्पादकस्यैव वा हेतुत्वमिति सांख्यमतेनेयमाशङ्केत्यर्थः।
(२) स्वभावविशेष इति। स चानौपाधिकत्वं सामानाधिकरण्यं वेत्यग्रे वक्ष्यते।
(३) अपदेश इति। हेतुरित्यर्थः।
(४) अविनाभाव इति शेषः।

संहजावरणं हि त्वगित्युच्यते । तच्च न शरीरस्य कार्य्यं कारणं वा, किन्तु सहोत्पत्तिकमात्रं नियतसंयोगवत् । एवं समवायि यथाकाशं परिमाणवद् द्रव्यत्वात् घटादिवदिति । अत्र परिमाणं साध्यं द्रव्यत्वेनाकाशसमवायिना धर्मेण साध्यते । यद्वा परिमाणतारतम्यं क्वचिद्विश्रान्तमित्यनेनाणुत्वं परिमाणविशेषः सिद्धः । (१)तेन तदाश्रयः परमाणुरनुमीयते । शब्दादिना त्वाकाशस्य, ज्ञानादिना त्वात्मनोऽनुमानं कार्य्येणैव कारणानुमानमिति नोदाहृतम् ॥ ९ ॥

एकार्थसमवायिनं सूत्रकृदुदाहरति—

**कार्य्यं कार्य्यान्तरस्य ॥ १० ॥**

कार्य्यं रूपं कार्य्यान्तरस्य स्पर्शस्य (२)लिङ्गम् । उपलक्षणञ्चैतत् अकार्य्यमप्याकाशैकत्वम् आकाशैकपृथक्त्वे लिङ्गम् । एवं परममहत्त्वे ॥ १० ॥

विरोधिलिङ्गमुदाहरति—

**विरोध्यभूतं भूतस्य ॥ ११ ॥**

अभूतं वर्षं, भूतस्य वाय्वभ्रसंयोगस्य लिङ्गम् । एवं (३)स्फोटादेर्विरोधी मन्त्रपाठः । तथाचाभूतमनुत्पन्नं स्फोटादि भूतस्य मन्त्रपाठस्य लिङ्गम् ॥ ११ ॥

विरोधिलिङ्गस्योदाहरणान्तरमाह—

**भूतमभूतस्य ॥ १२ ॥**

भूतं स्फोटादिकम् अभूतस्य मन्त्रपाठस्य लिङ्गम् । एवं भूतो वाय्वभ्रसंयोगोऽभूतस्य वर्षस्य लिङ्गम् । एवं भूतो दाहोऽभूतस्य मेण्यादिसमवधानस्य लिङ्गमेवमन्यदप्यूह्यम् ॥ १२ ॥

लिङ्गान्तरमुदाहरति—

---

(१) तेनेति । अणुपरिमाणं क्वचिदाश्रितं परिमाणत्वात् गगनपरिमाणवदित्यनेन समवायिलिङ्गेनानुमानेनेतरबाधसहकृतेन परमाणुसिद्धिरिति । अत्र तादात्म्यकार्ययोरभावादविनाभावन तदुभयनियतत्वमिति भावः ।

(२) लिङ्गमिति । तथा च रूपादौ स्पर्शीयभेदस्य तत्कार्यत्वस्य चाभावात् व्याप्तेस्तदुभयनैयत्यं बाधितमिति भावः ।

(३) स्फोटादेरिति । स्फोटो विषविकारः । मन्त्रपाठे स्फोटो न भवतीति तत्र भूतमन्त्रपाठे लिङ्गेत्यर्थः ।

भूतो भूतस्य ॥ १३ ॥

विद्यमानेनैव विरोधिना विद्यमानस्यैव विरोधिनः कश्चिदनुमानम्, यथा विस्फूर्जन्तमहिं दृष्ट्वा झाटान्तरितस्य नकुलस्य। अत्र हि विस्फूर्जन्नहिर्भूतो विद्यमानो झाटान्तरितो नकुलोऽपि विद्यमान एवेति भवति भूतो भूतस्य लिङ्गमित्यर्थः। वर्षवाय्वभ्रसंयोगस्य तु नैकस्मिन् काले विद्यमानता न वा स्फोटमन्त्रपाठयोरिति ॥ १३ ॥

इदानीं परिगणनस्य प्रयोजनमाह—

प्रसिद्धिपूर्वकत्वादपदेशस्य ॥ १४ ॥

प्रसिद्धिः स्मर्य्यमाणा व्याप्तिः, अपदेशो हेतुवचनं, तेन स्मर्यमाणव्याप्तिविशिष्टो हेतुर्हेत्ववयवेनोपनयावयवेन वोच्यते इति भवति प्रसिद्धिपूर्वकोऽपदेश इति। तथाच श्रोत्रादिना करणेनाधिष्ठातुः, ज्ञानादिना च गुणेन तदाश्रयस्यात्मनो यदनुमानमुक्तम् तत्र सर्वत्र व्याप्तिरस्ति, त्वया तु शरीरकार्य्यत्वेन हेतुना ज्ञानस्य यच्छरीरगुणत्वं साधितं तत्र न व्याप्तिरिति भावः।

ननु केयं व्याप्तिः?

(१)न तावदव्यभिचरितः सम्बन्धः अव्यभिचारस्य साध्यात्यन्ताभावसामानाधिकरण्यानधिकरणत्वस्य(२) केवलान्वयिन्यप्रसिद्धेः। (३)साध्यानधिकरणानधिकरणत्वस्यापि (४)केवलान्वयिन्यसम्भवात् धूमादेरपि यत्किञ्चित्साध्यानधिकरणाधिकरणत्वात्।

(५) नाप्यविनाभावः। स हि साध्यं विनाऽभावो वा हेतोः,

---

( १ ) मीमांसकव्याप्तिं दूषयति नेति।

( २ ) द्रव्यं सत्त्वादित्यत्र सत्तायां द्रव्ये न द्रव्यत्वाभावसमानाधिकरण्यामिति प्रत्ययात् अव्याप्यवृत्तेर्द्रव्यत्वाभावसामानाधिकरण्यस्य सत्तायामभावसत्त्वादतिव्याप्तिवारणाय तादृशसामानाधिकरण्याभावमपहाय साध्यात्यन्ताभावसामानाधिकरण्याधिकरणत्वाभावो गृहीतः, अव्याप्यवृत्तेरधिकरणता तु नाव्याप्यवृत्तिरिति तद्व्युदासः।

( ३ ) साध्यानधिकरणानधिकरणत्वस्येति। साध्याधिकरणत्वाभावव्यापकान्योन्याभावप्रतियोगितावच्छेदकत्वरूपस्य साधवद्भेदव्यापकान्योन्याभावप्रतियोगितावच्छेदकत्वरूपस्य वा सिद्धव्याप्त्योक्तलक्षणद्वयात्मकस्येत्यर्थः।

( ४ ) साध्यवद्भेदसाध्याधिकरणत्वाभावयोः सामान्याभावरूपतया निवेशे केवलान्वयिनि, यत्किञ्चित्साध्यवद्भेदादिनिवेशे च वह्निमान्धूमादित्यादावप्रसिद्धिरित्याह केवलान्वयिनीति।

( ५ ) बौद्धोक्तव्याप्तिं प्रदर्श्य निरस्यति नापि इति।

अविना साध्यान्वये सति भावो वा ? धूमस्यापि क्वचिद्रासभाभावेऽभावात्, रासभसत्त्वे सत्त्वाच्च । (१)नियतव्यतिरेको नियतश्चान्वयो विवक्षित इति चेत्, न नियमस्यैव निरूप्यमाणत्वात् ।

(२)नापि कार्त्स्न्येन सम्बन्धः स यदि कृत्स्नस्य साध्यस्य साधनसम्बन्धः, स विषमव्याप्ते धूमादावपि नास्ति । अथ कृत्स्नस्य साधनस्य साध्यसम्बन्धः, सोऽप्येकस्य साध्यस्य कृत्स्नसाधने सम्बन्धाभावादनुपपन्नः । अथ कृत्स्नस्य साध्यस्य कृत्स्नेन साधनेन सम्बन्धः, एतदप्ययुक्तम् न हि कृत्स्नेन साधनेन कृत्स्नस्य साध्यस्य क्वचिदपि सम्बन्धः सम्भवति, प्रत्येकमेव साध्यसाधनयोः सम्बन्धात्, विषमव्याप्ते चाव्याप्तेः ।

(३)नापि स्वाभाविकः सम्बन्धः । स्वभावो हि स्वस्य भावो वा स्वमेव भावो वा, तत्र तज्जन्यत्वञ्चेत्तद्धितार्थः, तदा समवायलक्षणायां व्याप्तावव्याप्तेः । तदाश्रितत्वञ्चेत्तद्धितार्थः, (४)तदापि समवायेऽव्याप्तिः, न हि समवायः क्वचिदाश्रितः, संयोगस्यापि हेतुधर्मधूमत्वाद्यनाश्रितत्वात् हेतुधर्मधूमत्वाद्यजन्यत्वाच्च ।

(५) नाप्यनौपाधिकः सम्बन्धः । उपाधेरेव दुर्वचत्वात्(६) । सुवचत्वेऽपि दुर्ग्रहत्वात्, सुग्रहत्वेऽप्यन्योन्याश्रयात् । साध्यव्यापकत्वे सति साधनाव्यापकत्वादेर्व्याप्तिग्रहाधीनग्रहत्वात् ।

---

(१) नियतेति । तथा चोक्तधूमरासभाविनाभावस्य सार्वत्रिकत्वाभावान्न दोष इत्यर्थः ।

(२) लीलावतीकारोक्तव्याप्तिं दूषयति नापि इति ।

(३) वाचस्पतिमतं निरसितुमाह नापि स्वाभाविक इति । सम्बन्धः सामानाधिकरण्यम् तच्च वह्निनिरूपितं धूमे स्वाभाविकं, वह्नौ च धूमसामानाधिकरण्यमार्द्रेन्धनप्रयुक्तमित्यौपाधिकमिति नातिव्याप्तिरित्यर्थः ।

(४) स्वस्य भाव इत्यादिनोभयव्युत्पत्त्या हेतुतावच्छेदकहेतुस्वरूपोभयकल्पेपि भाव इत्यत्र टिकन्प्रत्ययस्य जन्यार्थकत्वपक्षे सत्तावान्द्रव्यत्वादित्यादौ अव्याप्तिम्प्रदर्श्याश्रितत्वपक्षेपि दोषमाह तदापीति । समवायस्य स्वातिरिक्तसम्बन्धप्रतियोगित्वाभावेनाश्रितत्वं नास्ति इत्यर्थः ।

(५) आचार्यमतं दूषयन्नाह नाप्यनौपाधिक इति ।

(६) दुर्वचत्वादिति । उपाधिलक्षणं यावत्स्वाधिकरणनिरूपितवृत्तित्ववत्साध्याधिकरणीभूतयावन्निरूपितवृत्तित्ववत्त्वे सति साधनाधिकरणीभूतयावद्वृत्तिभिन्नं स्वमेवेति स्वत्त्वघटितं कार्यम् तथा च स्वत्त्वस्याननुगमाद्दुर्वचमित्यर्थः । कथंचित्तस्यानुगतत्वमङ्गीकृत्य सुवचत्वेऽपि द्रव्यं सत्त्वादित्यादौ गुणवत्त्वरूपोपाधेः यावत्सु साध्याधिकरणेषु वृत्तित्वं युगसहस्रेणापि गृहीतुमशक्यमित्याशयेनाह दुर्ग्रहत्वादिति । ननु साध्यव्यापकत्वे सति साधनाव्यापक एवोपाधिर्वाच्यस्तथा च न दुर्ग्रहतेत्यत आह सुग्रहत्वेपीति ।

(१)नापि सम्बन्धमात्रं व्याप्तिः । व्यभिचारिसम्बन्धस्यापि देशविशेषकालविशेषगर्भतया व्याप्तिरूपत्वेऽपि, तज्ज्ञानस्यानुमितावतन्त्रत्वात् अनुमितिकारणीभूतज्ञानविषयव्याप्तेरेव निरूपयितुमुचितत्वात्।

नापि साधनवन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः। वह्नेरपि धूमवन्निष्ठात्यन्ताभावप्रतियोगित्वात् न हि धूमवति महानसे पर्वतीयवह्नेर्नात्यन्ताभावः । (२)इदं संयोगि द्रव्यत्वादित्यादौ संयोगात्यन्ताभावस्य साधनसमानाधिकरणत्वादव्यापकताप्रसङ्गात्। प्रतियोगिविरुद्धस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः संयोगात्यन्ताभावस्य प्रतियोगिविरुद्धत्वाभावादिति चेन्न संयोगात्यन्ताभावस्यापि प्रतियोगिविरुद्धत्वात् अन्यथाऽवच्छेदभेदकल्पनावैयर्थ्यात् न हि कृतकत्वानित्यत्वयोर्वृत्त्यर्थमवच्छेदभेदः कल्प्यते। (३)नापि साध्यवैयधिकरण्यानधिकरणत्वम्। केवलान्वयिनि साध्यवैयधिकरण्याप्रसिद्धेः साध्यानधिकरणाधिकरणत्वं हि तत्। नापि यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः वह्नित्वस्यापि धूमसम्बन्धितावच्छेदकत्वात्। अधिकदेशवृत्तितया तन्न तथेति चेत् व्यापकतावच्छेदकस्याधिकदेशवृत्तेरप्यभ्युपगमात् धूमत्वस्यापि गगनतलावलम्बिधूमवृत्तितयाऽधिकदेशवृत्तित्वात्। अतएव तद्वारणार्थं (४)विशेषणमिति चेत्, तर्हि यद् व्याप्यतावच्छेदकं तदेव सम्बन्धितावच्छेदकत्वेनाभिमत-

(१) नैयायिकैकदेशिमतानि दूषयति नापि सम्बन्धमात्रमिति। ननु सम्बन्धमात्रस्य व्याप्तित्वे द्रव्यं सत्त्वात्कालस्तन्नोमान् गोरूपादित्यादावपि हेतौ तत्सत्त्वात् व्याप्तिः स्यादत आह व्यभिचारीति। तथा च द्रव्यत्वव्यभिचार्यपि सत्त्वं तन्नोव्यभिचार्यपि वा गोरूपं जातित्वावच्छिन्नं गोस्पर्शत्वावच्छिन्नं वा न व्यभिचरति सत्त्वस्य जात्यभाववदवृत्तित्वात् गोरूपस्य च गोस्पर्शाभाववदवृत्तित्वाच्चेति देशकालविशेषगर्भं व्याप्यत्वमपीष्टमेवेति भावः।

(२) प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यपर्यन्तनिवेशे उक्तदोषवारणेऽप्यव्याप्तिरित्याह इदमिति।

(३) सिंहव्याघ्रोक्तं पूर्वसूचितं लक्षणद्वयं प्रदर्श्य दूषयति नापि साध्यवैयधिकरण्येति।

(४) विशेषणमिति। वह्नित्वे सम्बन्धितावच्छेदकत्वरूपव्याप्तिसत्त्वेऽपि व्याप्यतावच्छेदत्वरूपविशेषणाभावात् नातिव्याप्तिरिति भावः। आत्माश्रय इति। तथा च व्याप्यतावच्छेदकं विशिष्टधूमत्वं व्याप्तिरपि उक्तविधैवेति स्वस्मिन्स्वावच्छेदकत्वादात्माश्रय इत्यर्थः।

मित्यभिमतं तथा चात्माश्रयः। एवञ्च यत्सामानाधिकरण्यावच्छेदकरूपवत्त्वं यस्य तस्य (१)सा व्याप्तिरित्यप्युक्तदोषाक्रान्तमिति चेत्,

(२)अत्रोच्यते अनौपाधिकः सम्बन्धो व्याप्तिः। अनौपाधिकत्वन्तु यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यम्, (३)यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगिप्रतियोगिकात्यन्ताभावसमानाधिकरणसाध्यसामानाधिकरण्यं वा। (४)यावत्साधनाव्यापकाव्याप्यसाध्यसामानाधिकरण्यमिति निरुक्तिद्वयार्थः। (५)यावत्साध्यव्यापकव्यापकत्वं वा। (६)बहुव्रीहिणा दुर्ग्रहमिदमिति चेत् अत एव तत्र भूयोदर्शनापेक्षा तर्कापेक्षा च। (७)यद्वा साधनसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः। अत्यन्ताभावश्च वह्नित्वादिसामान्यावच्छिन्नप्रतियोगिताको विवक्षितः तेन महानसीयधूमे पर्वतीयवह्न्यत्यन्ताभावसामानाधिकरण्येऽपि न

---

(१) सेति। यद्धर्मावच्छिन्ननिरूपितं यद्रूपावच्छिन्नं यत्सामानाधिकरण्यं तद्धर्मावच्छिन्नविधेयकतद्रूपावच्छिन्नहेतुकानुमितिजनकतावच्छेदकं तद्व्याप्तिरिति सामानाधिकरण्यरूपव्याप्तिरपि उक्तदोषाक्रान्तेत्यर्थः। इदमुपलक्षणम्। उक्तव्याप्तेः नानात्वेन स्मृतमहानसीयवह्निसामानाधिकरण्यस्य पर्वतवृत्तिधूमेऽसत्त्वात् पर्वतीयवह्निसामानाधिकरण्यस्य प्रागननुभवात् परामर्शासम्भव इति सत्तावान् जातेरित्यादावव्याप्तिरपि दोषो बोध्यः। विशेषस्तु विशेषव्याप्त्यादौ द्रष्टव्यः।

(२) सिद्धान्तमाह अत्रोच्यत इत्यादिना। यथाश्रुते उक्तदोषात्तदर्थमाह यावदिति। स्वपदं हेतुपरम्। धूमावान् वह्नेरित्यादौ वह्निव्यभिचारिणो आर्द्रेन्धनसंयोगस्य धूमेन व्यभिचाराभावान्नातिव्याप्तिः।

(३) ननु व्यभिचारित्वमभाववद्वृत्तित्वं वृत्तता च वैशिष्ट्यरूपावच्छेदकभेदेनापि न भिन्ना गुणे गुणकर्मान्यत्वविशिष्टसत्तेतिप्रतीतेः तथा च द्रव्यं विशिष्टसत्त्वादित्यत्र विशिष्टसत्ताया गुणादिवृत्तित्वादव्याप्तिरत आह यावत्स्वसमानाधिकरणेति। अधिकरणताया निरूपकतावच्छेदकभेदेन भिन्नत्वान्नाव्याप्तिरित्यर्थः।

(४) नन्वेवमपि स्वसमानाधिकरणविशिष्टाभावादिकमादायाव्याप्तिरत आह यावत्साधनेति।

(५) प्रकारान्तरेणानौपाधिकत्वं निर्वक्ति यावत्साध्येति।

(६) बहुव्रीहिणेति। यावन्ति साध्यव्यापकानि व्यापकानि यस्येति बहुव्रीहिणा स्वव्यापकयावत्साध्यव्यापकसम्बन्धीति प्रतीयते तस्य च स्वत्वघटितत्वेनातीतादिसाधारणहेतुतावच्छेदकावच्छिन्ने दुर्ग्रहत्वमित्यर्थः। समाधत्ते अत एवेति। तथा च तर्कादिना व्यभिचारे निरस्ते हेतुतावच्छेदकावच्छिन्ने व्याप्तिग्रहे बाधकाभाव इति भावः।

(७) लाघवादाह यद्वेति। साधनसामानाधिकरणेत्यस्य साधनतावच्छेदकावच्छिन्नसमानाधिकरणेत्यर्थः नातो द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः। वह्नित्वावच्छिन्नस्य साध्यतावच्छेदकत्वे तद्व्यक्तिर्नास्तीत्यभावमादाय नाव्याप्तिरित्यपि बोध्यम्।

दोषः, धूमवति वह्निर्नास्तीति प्रतीतेरनुदयात् । (१)द्रव्यत्वन्तु संयोगित्वात्यन्ताभावासमानाधिकरणमेव, न हि भवति द्रव्यं न संयोगीति प्रतीतिः, संयोगानां प्रत्येकमव्याप्यवृत्तित्वेऽपि संयोगित्वसामान्यस्य व्याप्यवृत्तित्वात् तस्यैव च व्यापकत्वात् । नन्वनौपाधिकत्वमुपाधिविरहः उपाधिरेव दुष्परिकलनीय इति चेन्न साध्यव्यापकत्वे सति साधनाव्यापकस्योपाधित्वात् । तदुक्तम्—

साधने सोपाधिः साध्ये निरुपाधिरुपाधिः ।

ननु केवलसाध्यव्यापकोपाध्यव्यापकमेतत् । यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वम्, (२)स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वम्, न ह्युद्भूतरूपवत्त्वं प्रत्यक्षत्वव्यापकम् आत्मनि गुणकर्मादौ च प्रत्यक्षे तदभावात्, नापि शाकपाकजत्वं श्यामत्वव्यापकम् काककोकिलजलदजम्बूफलादौ श्यामे तदभावादिति चेन्न (३)पर्य्यवसितसाध्यव्यापकत्वे सति साध्यनाव्यापकत्वस्य तथा विवक्षितत्वात् । पर्य्यवसितञ्च साध्यं यद्धर्मावच्छेदेनोपाधेर्व्यापकत्वमभग्नं तद्धर्मावच्छिन्नम्, प्रकृते वह्निर्द्रव्यत्वावच्छेदेन प्रत्यक्षत्वस्योद्भूतरूपवत्त्वं व्यापकम्, अन्वयव्यतिरेकाभ्यां गृहीतम्, औत्पत्तिकनरश्यामत्वावच्छिन्नं साध्यं प्रति चरकसुश्रुतादौ शाकपाकजत्वस्य व्यापकत्वावधारणादेवमन्यत्रा(४)प्यूह्यम् । (५)ननु नायमुपाधिपदवाच्यः, यद्धर्मोऽन्यत्र भासते स उपाधिः यथा स्फटिकादौ जवाकुसुमादि विषमव्याप्तोपाधौ च व्याप्यत्वाभावात्तद्धर्मस्य सा-

(१) ननु द्रव्यं संयोगीत्यादावव्याप्तिः संयोगाभावस्य द्रव्यत्वसामानाधिकरण्यादत आह द्रव्यत्वमिति । तथा च संयोगविशेषाभावे द्रव्यवृत्तित्वेऽपि तत्सामान्याभावे द्रव्यावृत्तित्वान्नाव्याप्तिरित्यर्थः । ननु तथापि कपिसंयोग्येतद्वृक्षत्वादित्यत्राव्याप्तिः कपिसंयोगसामान्याभावस्य मूलावच्छेदेन वृक्षे सत्त्वादिति चेन्न स्वानिरूपिताधिकरणत्वस्य साध्यतावच्छेदकसम्बन्धेन विवक्षितत्वात् ।

(२) पक्षधर्मावच्छिन्नसाध्यव्यापकत्वस्य वायुः प्रत्यक्ष इत्यादावुद्भूतरूपवत्त्वोपाधौ सत्त्वादाह स श्याम इति ।

(३) समाधत्ते पर्य्यवसितेति । तथा च सामानाधिकरण्यसम्बन्धेन यत्किञ्चिद्धर्मविशिष्टसाध्यव्यापकत्वे सतीत्यर्थे नोक्ताव्याप्तिरित्याशयः ।

(४) अन्यत्रेति । ध्वंसो विनाशी जन्यत्वादित्यादौ भावत्वादिरूपोपाधिरेवं निर्वाच्यः ।

(५) साध्यसमनियत एव धर्म उपाधिर्वाच्यः न तु तद्व्यापकः अन्यधर्मिकभ्रमविषयीभूतधर्माश्रयत्वस्योपाधिपदप्रवृत्तिनिमित्ततया लोके उपाधिपदप्रयोगात्तथा च साधनत्वाभिमते समारोप्यमाणायाः साध्यव्याप्तेर्य आश्रयस्तस्यैवोपाधित्वमुचितमित्याशयेनाशङ्कते नन्विति ।

धनाभिमतेऽनवभासनादिति चेत्, सत्यम् समव्याप्त एवार्द्रेन्धनप्रभववह्निमत्त्वादौ मुख्य उपाधिपदप्रयोगः, अन्यत्र तु गौणः । गुणश्च व्यभिचारोन्नायकत्वम्, यद्धि यद्व्यापकव्यभिचारि तस्य तद्व्यभिचारित्वनियमात्, भवति च साध्यव्यापकस्योपाधेर्व्यभिचारि साधनम्, अतः (१)साध्यव्यभिचारीति । यद्व्यापकाव्याप्यं यत् तत् तदव्याप्यम् इति व्याप्यत्वासिद्ध्युन्नायकत्वं वा । सत्प्रतिपक्षोत्थापकत्वं वा पक्षे उपाधेः साध्यव्यापकस्याभावात् साध्याभावसाधनात् । तदुक्तं—

वायुक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः ।
पर्य्यवसितं नियमयन् दूषकताबीजसाम्यात् ॥ इति ।

उन्नीयते चायं (२)बाधव्यभिचारानुकूलतर्काभावप्रतिकूलतर्कैः । (३)यत्तु यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिरिति । तत्र तृतीया न करणे न हेतौ न प्रकारे न लक्षणे । न च यद्व्यभिचारित्वेन ज्ञातेन साधनस्य साध्यव्यभिचारित्वं ज्ञायते इति पूरणियम् अज्ञायमानोपाध्यव्यापनात् स्फुटव्यभिचारस्थलोपाध्यव्यापनात् । योग्यतागर्भा तु दुर्निरूपा, व्यभिचारोन्नायकत्वमव्यवस्थाप्य उपा-

---

(१) साध्यव्यभिचारीति । प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि बहिर्द्रव्ये उद्भूतरूपव्यभिचारित्वात्प्रमेयत्ववत्, मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारित्वात् द्रव्यत्वादिवदिति व्यभिचारोन्नायकत्वमित्यर्थः ।

(२) बाधेति । बाधोन्नीतो यथा वह्निरनुष्णः कृतकत्वादित्यादौ पक्षेतरत्वरूपः । व्यभिचारोन्नीतश्च धूमवान् वह्निरित्यादौ आर्द्रेन्धनादिरूपः । अनुकूलतर्काभावोन्नीतश्च पूर्वोक्तो वायुः प्रत्यक्ष इत्यादौ उद्भूतरूपादिः । प्रतिकूलतर्केण च ध्वंसो विनाशीत्यादौ विनाशित्वसाधने घटोन्मज्जनप्रसङ्गरूपेणोन्नीतो भावत्वादिरूप इत्यर्थः ।

(३) मणिकारोक्तोपाधिलक्षणं प्रदर्श्य दूषयति यत्त्वित्यादिना । करण इति । साध्यव्यभिचारित्वस्य समवायादिरूपत्वे नित्यत्वात् संयोगादिरूपत्वेपि उपाधिव्यभिचारित्वस्य तदजनकत्वात् तज्जनकव्यापाराभावाच्चेति भावः । न हेतौ इति । हेतुत्वं ज्ञापकत्वं कारणत्वं वोभयथापि उपाधिव्यभिचारे ज्ञापकत्वाभावात् नित्यसम्बन्धादिरूपव्यभिचारस्य कारणत्वाभावाच्च न तृतीयार्थ इत्यर्थः । न प्रकार इति । प्रकारतारूपस्य तस्य व्यभिचारादिरूपनिर्विषयकपदार्थेऽन्वयायोगात् । न लक्षण इति । लक्षणत्वं व्यावर्तकत्वम् । व्यावर्तकश्च धर्मो विशेषणमुपलक्षणं वा । विद्यमानः सन् व्यावर्तको विशेषणं यथा पुरुषादौ दण्डादिः । अविद्यमानः सन् व्यावर्तकस्तु उपलक्षणं यथा तापसादेः कालान्तरीणं जटाकमण्डलुत्वादि । उभयस्याप्यत्रासम्भवः साधननिष्ठोपाधित्वस्य साध्यव्यभिचरितत्वरूपविशेष्यतावच्छेदकसामानाधिकरण्यविरहात् तथा च तृतीयाऽनुपपन्नेत्यर्थः ।

ध्युद्भावनाशक्यत्वाच्च । (१)पक्षेतरत्वन्तु उपाधिलक्षणाक्रान्तमपि स्वव्याघातकत्वान्नोपाधिः यथा पक्षे सन्दिग्धानैकान्तिकत्वम् । यदि-हि तत्र न सन्देहस्तदा न पक्षता, यदि पक्षता तदा सन्देहस्याव-श्यकतया सन्दिग्धानैकान्तिकत्वध्रौव्यात् । अवशिष्टं मयूखेऽन्वे-ष्टव्यम् ॥ १४ ॥

इदानीं वृत्तानां वर्त्तिष्यमाणानाञ्च हेतूनां हेत्वाभासाद्विवेकाय हेत्वाभासप्रकरणमारभण आह—

**अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः ॥ १५ ॥**

(२)अप्रसिद्ध इति । अव्याप्तोऽगृहीतव्याप्तिको विपरीतव्याप्ति-कश्च विरुद्धः । एतेन (३)व्याप्यत्वासिद्धविरुद्धयोः संग्रहः । असन् इति । पक्षेऽसन् अपक्षधर्म इत्यर्थः । स च क्वचित् (४)स्वरूपविरहात् क्वचित् सन्देहसिषाधयिषयोरभावात् सिद्धसाधने । (५)सन्दिग्ध इति । पक्षे साध्यसदसत्त्वकोटिकसंशयजनकः । स च संशयः समा-

---

(१) पक्षेतरत्वन्त्विति । बाधोन्नीतपक्षेतरत्वमेवोपाधिरित्यर्थः । पक्षेतरत्वमात्रस्योपाधित्वे सर्वत्र तस्य सम्भवादनुमानमात्रोच्छेदापत्त्या सन्दिग्धानैकान्तिकत्ववन्न दूषकत्वमिति भावः ।

(२) सूत्रे प्रथमानपदेशपदं हेत्वाभाससामान्यलक्षणसूचनायेति बोध्यम् । तच्चाग्रे स्वयं वक्ष्यते गौणहेत्वाभासान्तरप्रदर्शनाय वा तेप्यग्रे वक्ष्यन्त इत्याशयेन कण्ठतस्तद्विचारमपहाय व्याचष्टे अ-प्रसिद्ध इति ।

(३) व्याप्यत्वासिद्धेति । व्याप्यत्वासिद्धिश्च हेतुतावच्छेदकतया प्रमितिविषये व्याप्तिप्रमिति-विरहः । यद्रूपावच्छिन्ननिरूपितविषयताकनिश्चयत्वं प्रकृतहेतुकप्रकृतसाध्यकव्याप्तिग्रहप्रतिबन्धक-तानतिरिक्तवृत्ति तद्रूपावच्छिन्नो हेतुरिति यावत् । नचैवं साधारणादेरसिद्धत्वापत्तिरिति वाच्यम् इष्टत्वात् असिद्ध्यादिदोषमादायैव हेत्वाभासविभजनात् । साधारण्यनिरूपितत्वेनोक्तविषयतानिवेशाच्च न दोषाभेदोपि इति बोध्यम् । साध्यासिद्धिहेत्वसिद्धी च निरुक्तलक्षणाक्रान्ते इति भावः । विरुद्धेति । स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्याभावत्वकत्वं विरोधः तद्वांश्च हेतुर्विरुद्ध इत्यर्थः व्याप्यत्वासिद्धिविरोधयोरन्यतरत्वेनाप्रसिद्ध्यनुगम इति भावः ।

(४) स्वरूपेति । पक्षे हेत्वभावात् स्वरूपासिद्धिः, पक्षे पक्षतावच्छेदकाभावादाश्रयासिद्धिर्वा । सन्देहेति । पक्षे सन्देहसिषाधयिषारूपोभयपक्षताभावाच्च सिद्धसाधनमपीत्यर्थः । तद्वांश्च हेतुरसिद्ध इति भावः । आश्रयासिद्ध्याद्यन्यतमत्वमसिद्धत्वमित्यर्थः ।

(५) सन्दिग्ध इति । सव्यभिचार इति शेषः । प्रकृतपक्षधर्मिकसाध्यतदभावज्ञाननिष्ठसंशय-त्वप्रयोजककोटिद्वयादिव्यावृत्तरूपवत्त्वं सव्यभिचारत्वम् । तच्च रूपं व्यभिचारिणि साध्यतदभावसाह-चर्यादिकं सत्प्रतिपक्षे च विरोधिपरामर्शकालीनपरामर्शविषयत्वम् । कोटिद्वयव्यावृत्तत्वेनेत्यनेन प्रयोजकान्तरव्युदासः तेन कोटिद्वयादौ नातिव्याप्तिरत एव वक्ष्यति सत्प्रतिपक्षोपि अनैकान्तिकादौ पर्यवस्यतीति । साधारणादिभेदेन चास्य उदाहरणानि स्वयमेव वक्ष्यन्ते ।

नधर्मदर्शनात् क्वचिदसाधारणधर्मदर्शनात् क्वचित् (१)पक्ष एव हेतोः साध्यतदभावसाहचर्य्यदर्शनात् । आद्यः साधारणानैकान्तिकः । द्वितीयस्त्वसाधारणानैकान्तिकः । तृतीयोऽनुपसंहारी ॥ १५ ॥

तत्र व्याप्यत्वासिद्धविरुद्धस्वरूपासिद्धानामुदाहरणमाह—

**यस्माद्विषाणी तस्मादश्वः ॥ १६ ॥**

यत्र रासभपिण्डं पक्षीकृत्यायमसावश्वः विषाणित्वात् यस्तु नाश्वो नासौ विषाणी, यथा शशशृगालनरवानरादिरिति व्यतिरेकसहचारदर्शनाहितव्यामोहः प्रयुङ्क्ते । तत्र व्याप्यत्वासिद्धस्वरूपासिद्धविरुद्धानामुदाहरणमिदम् ॥ १६ ॥

अनैकान्तिकमुदाहरति—

**यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम् ॥ १७ ॥**

यत्र महिषं पक्षयित्वा अयं गौर्विषाणित्वादिति साधयति तत्र साधारणानैकान्तिकता(२) । यदा त्वाकाशं नित्यं शब्दाश्रयत्वादिति साधयति तदाऽस्यासाधारणानैकान्तिकता । एवं शब्दोऽनित्यः शब्दत्वादित्याद्यप्यगृह्यमाणदशायामसाधारणानैकान्तिकमेव, यदा तु विपक्षबाधकतर्कावतारात् पक्ष एव साध्यं सिध्येत् तदा सपक्षवृत्तिताज्ञानदशायां सद्धेतुरेव पक्षस्यापि सपक्षत्वात् । (३)तत्र व्याप्तपक्षधर्मतयाऽप्रमितोऽसिद्धः । स च त्रिविधः व्याप्यत्वासिद्धः

---

(१) यद्यपि साध्यसन्देहाक्रान्तविशेषकत्वेन ज्ञायमानोऽनुपसंहारी न साध्यतदभावकोटिकसंशयजनकस्तथापि पक्षान्तर्भावेन साध्यतदभावसहचरिततया ज्ञायमान एव संशयजनको भवतीति नानुपसंहारिण्यव्याप्तिरित्याशयेनाह पक्ष इति । येन रूपेण सन्देहजनकत्वं तस्यैव विभाजकत्वमिति न नियम इति तात्पर्यम् ।

(२) अनैकान्तिकतेति । साधारणाद्यन्यतमत्वमनैकान्तिकत्वम् । साध्याभाववद्वृत्तित्वं साधारणत्वं तच्च व्याप्तिज्ञानप्रतिबन्धकं यथा महिषो गौर्विषाणित्वादिति । सर्वसपक्षविपक्षव्यावृत्तत्वमसाधारणत्वम् तादृशोभयव्यावृत्तत्वग्रहस्य साध्यतदभावोभयव्याप्तिग्रहप्रतिबन्धद्वारा दूषकत्वम् यथाऽऽकाशं नित्यं शब्दाश्रयत्वादिति । अत्यन्ताभावाप्रतियोगिसाध्यकत्वमनुपसंहारित्वम् तस्य च व्यतिरेकव्याप्तिग्रहप्रतिबन्धद्वारा दूषकत्वम् यथा गौः प्रमेयं विषाणित्वादिति ।

(३) तत्रेति । अप्रसिद्ध इति सूत्रे । आश्रयासिद्ध्याद्यन्यतमत्वमसिद्धित्वम् । स्वरूपासिद्ध इति । पक्षे हेत्वभावात् ह्रदो द्रव्यं धूमादित्यत्र पक्षे व्याप्यत्वाभिमतस्य हेतोरभावज्ञाने साध्यव्याप्यहेतुमत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम् । व्याप्यत्वासिद्ध इति । वह्निमान् नीलधूमादित्यत्र गुरुतया नील-

स्वरूपासिद्धः आश्रयासिद्धश्च । तत्रागृहीतव्याप्तिको व्याप्यत्वासिद्धः, सत्या एव व्याप्तेरग्रहात् व्याप्तेरभावाच्च उभयथापि । तेनानुकूलतर्काभावादयोऽसिद्धभेदाः । स चायमसमर्थविशेषणा,-समर्थविशेष्या,-समर्थोभय-सन्दिग्धासमर्थविशेषण-सन्दिग्धासमर्थविशेष्य-सन्दिग्धासमर्थोभय-भेदप्रपञ्चेन सहस्रधा भिद्यते । सर्वत्र चात्र सिद्धिविरह एवोद्भाव्यः ।

अत्रेदं तत्त्वम् । हेतुस्तावत् केवलान्वय्यन्वयव्यतिरेकिकेवलव्यतिरेकिभेदात्त्रिविधः । तत्र सर्वधर्मिगतो धर्मः केवलान्वयी, यथा प्रमेयत्वा,-भिधेयत्व-विशेष्यत्व-विशेषणत्व-नित्यद्रव्यात्यन्ताभावा,-श्रयनाशनाश्यगुणा(१)दिध्वंसात्यन्ताभावादयः । नह्यस्ति तादृशं किञ्चित्, यत्रैते धर्मा न विद्यन्ते । तथाच सर्वगतत्वम् अत्यन्ताभावाप्रतियोगित्वं वा केवलान्वयित्वम् । (२)एतेषाञ्च स्वात्मवृत्तित्वेऽपि न दोषः तदुक्तम्—

प्रमाणं शरणं वृत्तौ न भिन्नाभिन्नते यतः ॥ इति ।

केवलान्वयिसाध्यको हेतुः केवलान्वयी । अस्य च पक्षसत्त्वसपक्षसत्त्वाबा(३)धितत्वासत्प्रतिपक्षितत्वानि चत्वारि रूपाणि गमकत्वौपयिकानि । अन्वयव्यतिरेकिणस्तु हेतोर्विपक्षासत्त्वेन सह पञ्च केवलव्यतिरेकिणः (४)सपक्षसत्त्वव्यतिरेकेण चत्वारि । तथाच यस्य हेतोर्यावन्ति रूपाणि गमकतौपयिकानि तदन्यतररूपहीनः स हेत्वाभासः । एवञ्च गमकतौपयिकान्यतररूपशून्यत्वं हेत्वाभासत्वम्, तेनान्यतररूपशून्यत्वस्य निश्चयवत्सन्दे-

---

धूमत्वस्य हेतुतानवच्छेदकत्वेन व्याप्यत्वासिद्धिरिति । आश्रयासिद्धिरिति । पक्षे पक्षतावच्छेदकाभावो आश्रयासिद्धिः । काञ्चनमयः पर्वतो वह्निमानित्यत्र पर्वतो न काञ्चनमय इति ज्ञाने काञ्चनमयपर्वते परामर्शप्रतिबन्धद्वारा तस्या दूषकत्वम् ।

(१) गुणादीति । संयोगाभावादिरादिपदग्राह्योऽर्थः ।

(२) यो हि यत्र वर्तते स तस्माद्भिन्नः घटतद्रूपादिवदिति व्याप्त्या प्रमेयत्वस्य स्ववृत्तितया स्वभिन्नत्वापत्तिरिति दोषं परिहरति एतेषामिति । तत्र प्रमाणमाह तदुक्तमिति । प्रमाणगम्या वृत्तिता न भेदाभेदगम्येति तदर्थः ।

(३) अबाधितत्वेति । अत्राबाधितत्वं स्ववृत्त्यभावप्रतियोगितावच्छेदकत्वसम्बन्धेन पक्षविशिष्टं यत्तदन्यसाध्यतावच्छेदकत्वं तेन केवलान्वयिनि बाधाप्रसिद्धावपि न क्षतिः ।

(४) सपक्षसत्त्वव्यतिरेकेणेति । व्यतिरेकिणि यथाऽन्वयसहचारं विनाऽनुमितिस्तथोपदर्शितं प्राक् ।

होऽप्यनुमितिप्रतिबन्धकः वाद्हितोरसाधकतासाधकश्च । न च केवलान्वयिकेवलव्यतिरेकिणोर्हेत्वोरन्यतररूपशून्यतया हेत्वाभासत्वापत्तिः, केवलान्वयिनि विपक्षासत्त्वस्य केवलव्यतिरेकिणि सपक्षसत्त्वस्य गमकत्वौपयिकत्वाभावात् । (१)एवञ्चाश्रयासिद्धस्वरूपासिद्धभागासिद्धानां पक्षसत्त्वरूपविरहादाभासत्वम् । व्याप्यत्वासिद्धविरुद्धसाधारणानैकान्तिकानां विपक्षासत्त्वरूपवैकल्यात् । असाधारणानैकान्तिकानुपसंहारिणोः सपक्षसत्त्ववैकल्यात् । बाधितसत्प्रतिपक्षितयोरबाधितत्वासत्प्रतिपक्षितत्वविरहात् । एवं सोपाधिकत्वाप्रयोजकत्वयोरपि विपक्षासत्त्वनिश्चयाभावादगमकत्वम् । अनुकूलतर्काभावप्रतिकूलतर्कयोरपि विपक्षासत्त्वनिश्चयविरहात् । एवं साध्यविकलसाधनविकलोभयविकलदृष्टान्ताभासानां यदि हेत्वाभासविधया दोषत्वं तदा सपक्षसत्त्वानिश्चयात्, यदि स्वातन्त्र्येण दृष्टान्ताभासतया तथापि द्वारं हेतोः सपक्षसत्त्वानिश्चय एव । अनुपदर्शितान्वयानुपदर्शितव्यतिरेकविपरीतोपदर्शितान्वयविपरीतोपदर्शितव्यतिरेकास्तु न्यूना,–प्राप्तकाल–निग्रहस्थानपर्य्यवसन्ना एव आत्माश्रयान्योन्याश्रयचक्रकानवस्थास्तु व्याप्तिनिश्चयं विघटयन्तः सपक्षसत्त्वविपक्षासत्त्वान्यतररूपविकला एव हेत्वाभासतामासादयन्ति । तत्र पक्षे साध्यसदसत्त्वकोटिकसंशयजनको हेत्वाभासः सव्यभिचारः । पक्षे साध्याभावनिश्चयफलको हेत्वाभासो विरुद्धः । व्याप्तिपक्षधर्मताप्रमितिविरहोऽसिद्धः । बाधसत्प्रतिपक्षौ तु काश्यपीये मते न स्वतन्त्रौ । तत्र बाध (२)आश्रयासिद्धावनैकान्तिके वा पर्यवस्यति । तदुक्तं "बाधायामपक्षधर्मो हे-

---

(१) उक्तगमकरूपसत्तया मुख्यगौणहेत्वाभासानाह एवमिति । तेषु विपक्षासत्त्वाद्यनिश्चयेन हेत्वाभासत्वव्यवहार इति भावः । एवं च विपक्षासत्त्वादिप्रमितिविरोधित्वगुणयोगात् व्यभिचारादेरिव सोपाधित्वादीनामपि दोषत्वं गौणमस्त्येवेति प्राञ्चः । सोपाधित्वानुकूलतर्काभावादीनामनुमितिपरामर्शयोः साक्षादप्रतिबन्धकत्वेन व्यभिचारप्रत्यक्षहेत्विन्द्रियसंनिकर्षादेरिव परमुखनिरीक्षकतया न हेत्वाभासतेति चिन्तामणिकाराः ।

(२) आश्रयासिद्धाविति । पक्षे साध्याभावो बाधस्तथा चाश्रय एवासिद्ध इत्यर्थः । एवञ्चात्रापि पक्षसत्त्ववैकल्यमाश्रयासिद्धाविवेति भावः । साध्याभाववति पक्षे हेतोः सत्त्वज्ञाने व्यभिचार इव बाधेपि सपक्षसत्त्ववैकल्यादनैकान्तिको बाध इत्याहानैकान्तिके वेति । तथा च सर्वत्र हेत्वाभासान्तरसङ्कीर्ण एव बाध इत्यभिप्रायः प्राञ्चाम् । नव्यास्तु उत्पातिकालावच्छिन्नो घटो गन्धवान्पृथिवीत्वादित्यादिकमसङ्कीर्णबाधोदाहरणमस्त्येवेति बाधोऽपि हेत्वाभासोऽङ्गीकार्य एवेत्याहुः ।

तुरनैकान्तिको वा" इति। सत्प्रतिपक्षोऽप्यन्यतरत्र व्याप्त्यादिसंशयमापादयन् अनैकान्तिकादावेव पर्यवस्यति।

वृत्तिकारस्तु "अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धाश्चनपदेशः" इति सूत्रस्थचकारस्य बाधसत्प्रतिपक्षसमुच्चयार्थतामाह। तेन "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाः पञ्च हेत्वाभासाः" इति गौतमीयमेव मतमनुधावति। परन्तु "विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्" इत्याद्यभिधानात् सूत्रकारस्वरसो हेत्वाभासत्रित्वे, चकारस्तूक्तसमुच्चयार्थ इति तत्त्वम्। ग्रन्थगौरवभयात् प्रपञ्चो न कृतो मयूखे विस्तरोऽन्वेष्टव्यः॥ १७॥

इदानीं हेत्वाभासविवेचनस्य फलमाह—

(१)आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥१८॥

आत्मेन्द्रियार्थसन्निकर्षात्सावज्ज्ञानमुत्पद्यते तच्चात्मनि लिङ्गम् असिद्धविरुद्धानैकान्तिकेभ्योऽन्यत् अनाभासमित्यर्थः। तथाहि ज्ञानमात्मन्युभयथा लिङ्गम्, ज्ञानं क्वचिदाश्रितं कार्यत्वाद्रूपादिवदिति वा, प्रत्यभिज्ञारूपतया वा योऽहमद्राक्षं सोऽहं स्पृशामीति। तत्र ज्ञानगतं कार्यत्वं नासिद्धं यन्निष्पद्यत इत्यभिधानात्। न विरुद्धं (२)सामान्यतो दृष्टेऽत्र विरोधाभावात्। न चानैकान्तिकम् तत एव। तथाच स्वगतकार्यत्वगुणत्वद्वारा सामान्यतोदृष्टेन ज्ञानमेवात्मनि लिङ्गम्। प्रत्यभिज्ञानन्तु भिन्नकर्तृकेभ्यो व्यावर्त्तमानमेककर्तृकतायां पर्यवस्यति। न च (३)बुद्धिचैतन्येऽपि कार्यकारणभावनिबन्धनमेव

---

(१) आत्मेति। आत्ममूर्तसंयोगस्याप्रत्यक्षस्यानुमितिकारणव्याप्त्याद्यप्रतिपादनादनुमित्या चासिद्धिवारणायेन्द्रियार्थेति। इन्द्रियार्थसंयोगध्वंसे व्यभिचारवारणायात्मेति। तथा चात्मसहितादिन्द्रियार्थसन्निकर्षाद्यदुत्पद्यते तत्प्रत्यक्षात्मकज्ञानमेवेति नासिद्धिव्यभिचाराविति भावः।

(२) सामान्यतो दृष्टेनेति। सामान्यतोदृष्टानुमाने उपस्थितयावद्धेतुसजातीये साध्यसजातीयव्याप्तिज्ञानात्प्रकृतहेतौ पक्षवृत्तित्वज्ञानाच्च प्रकृतसाध्यविरोधिव्याप्त्यात्मकविरोधस्य तदविघटकत्वान्न दोषतेति भावः। तत एवेति = उक्तज्ञानसत्त्वेन प्रकृतसाध्यासामानाधिकरण्यरूपव्यभिचारस्य तदविघटकत्वादेवेत्यर्थः।

(३) बुद्धीति। क्षणिकविज्ञानमेवात्मेति बौद्धमतेनेयमाशङ्का। नन्वेवं तर्हि मैत्रदृष्टस्यानुसन्धानं चैत्रस्य स्यात्तत्राह कार्यकारणेति। तथा च चैत्रमैत्रयोस्तदभावान्नोक्तदोष इति बौद्धाभिप्रायः।

प्रतिसन्धानम्, (१)शिष्यगुरुबुद्ध्योरपि प्रतिसन्धानप्रसङ्गात्। उपादानोपादेयभावस्तत्र नास्ति स च प्रतिसन्धानप्रयोजक इति चेदुपादानत्वस्य द्रव्यधर्मतया बुद्धावसम्भवात्, सम्भवे वा बुद्धीनां क्षणिकतया पूर्वानुभूतप्रतिसन्धानानुपपत्तेः। न हि पूर्वबुद्ध्या उत्तरासु बुद्धिषु कश्चित् संस्कार आधीयते, स्थिरस्य तस्य त्वयाऽनभ्युपगमात्। क्षणिकबुद्धिधारारूपस्य च कालान्तरस्मृतौ प्रतिसन्धाने वाऽसामर्थ्यात्। (२)आलयविज्ञानसन्तानः प्रवृत्तिविज्ञानसन्तानादन्य एव स्मर्त्ता च प्रतिसन्धाता चेति चेत्, स यदि स्थिरः तदा सिद्धं नः समीहितम्। क्षणिकबुद्धिधारारूपश्चेत् तदा पूर्वदोषानतिवृत्तेः, न हि तत्रापि स्थिरः कश्चित् संस्कारः। किञ्च प्रवृत्तिविज्ञानातिरिक्ते तत्र प्रमाणाभावः। अहमिति बुद्धिधारैव प्रमाणमिति चेत् भवतु तत्र यदि प्रवृत्तिविज्ञानान्यालयविज्ञानमेव चेदुपादत्ते तदा प्रवृत्तिविज्ञानानामुपादानताविरहे निमित्तताऽपि न स्यात्, उपादानताव्याप्तत्वान्निमित्ततायाः। माऽस्तु निमित्तताऽपीति चेत् तर्हि सत्त्वमपि गतम्, अर्थक्रियाकारित्वस्य सत्त्वलक्षणत्वात्। प्रवृत्तिसन्तानालयविज्ञानसन्तानाभ्यां सम्भूय सन्तानद्वयमुपादीयत इति चेत् तर्हि किमपराद्धमवयविसंयोगादिभिः, व्यासज्यवृत्तितायास्त्वयाप्यभ्युपगमात्। तस्माज्ज्ञानेनाश्रयतयाऽनुमितमात्मानं प्रतिसन्धानं स्थिरत्वेन साधयतीति न किञ्चिदनुपपन्नम्।

(३)यद्वा नित्या बुद्धिर्नात्मानं कारणत्वेन गमयितुमर्हतीति-साङ्ख्यमतनिरासाय सूत्रमिदमुपतिष्ठते "आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्"। बुद्धितत्त्वं यत्त्वयोच्यते तज्ज्ञानमेव, बुद्धिरुपलब्धिर्ज्ञानमिति हि पर्य्यायाभिधानं तच्चात्मादिसन्निकर्षादुत्पन्नम्, अन्यदेव त्वदभ्युपगतादन्तःकरणादित्यर्थः। तथाच भवति

(१) उत्तरयति शिष्येति। एवञ्च गुरुशिष्यबुद्ध्योः प्रयोज्यप्रयोजकभावाद्गुर्वनुभूतं शिष्योपि स्मरेदित्यर्थः।

(२) आलयेति। ते च विज्ञाने बौद्धकारिकायामुक्ते—

तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम्।
तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत्॥ इति॥

(३) प्रकृतिरेव कर्त्री न त्वकारणमात्मेति सांख्यमतनिरासपरतया वा सूत्रं विवृणोति यद्वेति।

तत् आत्मनो लिङ्गमिति भावः॥ १८॥

आत्मन्यनुमानमभिधाय इदानीं परात्मानुमानमाह—

**प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम्॥१९॥**

प्रत्यगात्मनीति। स्वात्मनीत्यर्थः। इच्छाद्वेषजनिते प्रवृत्तिनिवृत्ती प्रयत्नविशेषौ ताभ्याञ्च हिताहितप्राप्तिपरिहारफलके शरीरकर्मणी चेष्टालक्षणे जन्येते। तथाच परशरीरे चेष्टां दृष्ट्वा इयं चेष्टा प्रयत्नजन्या चेष्टात्वात् मदीयचेष्टावत्। स च प्रयत्न आत्मजन्यः आत्मनिष्ठो वा प्रयत्नत्वात् मदीयप्रयत्नवदिति परात्मानुमानम्॥ १९॥

इति शाङ्करे वैशेषिकसूत्रोपस्कारे तृतीयाध्यायस्याद्यमाह्निकम्।



# तृतीयाध्याये द्वितीयाह्निकम् ।

(१) हेतुहेत्वाभासविवेकः आह्निकार्थः । इदानीमात्मपरीक्षाशेषं वर्त्तयिष्यन् उद्देशक्रमलङ्घनेन मनःपरीक्षामवतारयन्नाह—

**आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥ १ ॥**

मनोगतिमात्मनो लिङ्गं वक्ष्यति । तद् यदि मनो ज्ञानकरणत्वेन मूर्त्तत्वेन च परीक्षितं भवति तदा यत्प्रेरितं मनः इन्द्रियान्तरादभिमतविषयग्राहिणि इन्द्रिये सम्बध्यते स आत्मेति सिद्धं भवतीत्येतदर्थं क्रमलङ्घनम् । आत्मेन्द्रियार्थसन्निकर्षे सति यस्मिन् इन्द्रियसन्निकृष्टे ज्ञानस्य भावः उत्पादः, असन्निकृष्टे ज्ञानस्याभावोऽनुत्पादस्तन्मन इत्यर्थः । ननु मनोवैभवेऽपि (२)करणधर्मत्वादेव ज्ञानायौगपद्यमुपपद्यते, (३)किञ्च मनो विभु विशेषगुणशून्यद्रव्यत्वात् कालवत्, ज्ञानासमवायिकारणसंयोगाधारत्वादात्मवत्, स्पर्शात्यन्ताभाववत्त्वादाकाशवदित्यादि वैभवसाधकं प्रमाणमिति चेत्, मैवम् यदि मनो विभु स्यात्तदा सर्वेन्द्रियसन्निकृष्टात्ततः सर्वेन्द्रियकमेकमेव ज्ञानं स्यात् । कार्य्यविरोधान्नैवमिति चेन्न न हि सामग्री विरोधाविरोधमाकलयति येन चाक्षुषत्वरासनत्वादिविरोधाय बिभ्येत्, चित्ररूपवत् चित्राकारमेव वा स्यात् । भवत्येव दीर्घशष्कुलीभक्षणस्थले इति चेन्न तत्रापि (४)व्यासङ्गदर्शनात् । तर्हि रूपरसगन्धस्पर्शान् युगपत् प्रत्येमीति कथमनुव्यवसाय इति चेन्न

---

(१) हेत्विति । अष्टद्रव्यातिरिक्तद्रव्यरूपात्मसाधकहेतूनामनात्मभूतदेहादावात्मत्वसाधकहेत्वाभासानां च विवेचनमाह्निकार्थ इत्यर्थः ।

(२) करणधर्मत्वादिति । एकं करणमेकदैकत्रैवैकक्रियामेव जनयति नानेकामिति नियमेन ज्ञानायौगपद्यं स्यादिति भावः ।

(३) ननु चक्षुराद्यवच्छेदेन भिन्नदेशीयशब्दवत् परमाणाविव विजातीयाग्निसंयोगवदनेकां क्रियां जनयेदत आह किञ्चेति । स्पर्शात्यन्ताभाववत्त्वादिति । अत्र तृतीयहेतौ द्रव्यत्वे सतीति विशेषणं देयम् नातो गुणादौ व्यभिचार इत्यर्थः । इत्यादीति नित्येन्द्रियत्वादिरादिपदग्राह्यो हेतुः ।

(४) व्यासङ्गदर्शनादिति । प्रत्यक्षान्तरविरोधिप्रत्यक्षोपधायकः संयोगविशेषो व्यासङ्गपदार्थः । स च दीर्घशष्कुलीभक्षणस्थले कस्यचिन्मनसो रसनेन्द्रियेण सह तादृशसंयोगेन रसाऽनुभवे कस्यचिच्च घ्राणेन्द्रियसंयोगान्नवशरावगन्धानुभवे पुरुषकालादिभेदेन निश्चीयत इति भावः ।

शीघ्रसञ्चारिमनोजनितेषु पञ्चसु स्मृत्युपनीतज्ञानेषु यौगपद्याभिमानात्। व्यासङ्गोऽपि करणधर्माधीन इति चेन्न (२)उक्तोत्तरत्वात्। बुभुत्साधीनो व्यासङ्ग इति चेन्न सर्वबुभुत्सायां सर्वविषयकसर्वोदयप्रसङ्गात्। बुभुत्साया अपि अभिमतार्थग्राहीन्द्रियमनःसम्बन्धमात्रफलकत्वात्, तस्माज्ज्ञानायौगपद्यान्यथानुपपत्त्या सिध्यति अणु मनः। ततो धर्मिग्राहकमानबाधिताः(३) वैभवहेतवः। किञ्च मनोवैभवे पादे मे सुखं शिरसि मे वेदनेति प्रादेशिकत्वं सुखादीनां न स्यात् विभुकार्य्याणामसमवायिकारणावच्छिन्नदेशे उत्पादनियमात्। तथापि सुखादीनामणुदेशापत्तिरिति चेन्न असमवायिकारणं विभुकार्य्यं स्वदेशे जनयत्येवेति नियमात्; तथाच निमित्तचन्दनाद्यवच्छेदादधिकदेशेऽपि जननाविरोधात्। ममापि निमित्तसमवधानानुरोध इति चेन्न (४)उक्तनियमभङ्गप्रसङ्गात्। (५)किञ्चात्मना विभुना मनसः संयोगोऽपि कथं स्यात्। अजोऽसाविति चेन्न विभागस्याप्यजत्वप्रसङ्गात्। अवच्छेदभेदेनाभावप्यविरुद्धाविति चेन्न संयोगविभागयोरवच्छेदभेदस्य स्वकारणाधीनत्वात् अजयोस्तु तदभावादिति दिक्॥१॥

ननु सुखाद्युपलब्धिः करणसाध्या क्रियात्वात् रूपोपलब्धिवदित्याद्यनुमानात् युगपज्ज्ञानानुत्पत्त्या वा यन्मनः सिद्धं तत्करणतया तथाच तस्य द्रव्यत्वं नित्यत्वञ्च कुत इत्यत आह—

**तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २ ॥**

यथाऽवयविद्रव्यानुमितो वायुपरमाणुर्गुणवत्त्वात् क्रियावत्त्वाच्च द्रव्यम्, तथा युगपज्ज्ञानानुत्पत्त्याऽनुमितं मनो गुणवत्त्वाद् द्रव्यम्, न हि तस्य इन्द्रियसंयोगमन्तरेण ज्ञानोत्पादकं येन गुणवत्त्वं न

---

(२) उक्तोत्तरत्वादिति। 'नहिसामग्रीत्यादिना' सकलेन्द्रियसंयोगसामग्र्यां सत्यामेकेनैव संयोगो नान्येन, सकलसंयोगसत्त्वेपि एकमेव प्रत्यक्षं नान्यदिति वा न युक्तमित्यस्योक्तत्वादित्यर्थः।

(३) धर्मिग्राहकमानबाधिता इति। चाक्षुषज्ञानवतो भिन्नस्य स्वविषयसम्बद्धं घ्राणं स्वविषयसाक्षात्कारहेतुसंयोगशून्यं चाक्षुषद्रव्यज्ञानकालीनस्वविषयसाक्षात्काराजनकत्वादिन्द्रियसम्बद्धघटादिवदित्याद्यनुमानेन विभुत्वबाधाद्धेतुबाध इत्यर्थः।

(४) उक्तनियमभङ्गप्रसङ्गादिति। असमवायिकारणं विभुसमवेतकार्यं स्वावच्छिन्नप्रदेशे जनयत्येवेति प्रागुक्तनियमभङ्गप्रसङ्गादित्यर्थः।

(५) ननु निमित्तसापेक्षस्यासमवायिनो हेतुत्वाङ्गीकारे नोक्तदोष इत्यत आह किञ्चेति।

स्यात्। किञ्च सुखादिसाक्षात्कारः इन्द्रियकरणकः साक्षात्कारत्वात् रूपादिसाक्षात्कारवदितीन्द्रियत्वेन मनः सिद्धम्। इन्द्रियत्वञ्च ज्ञानकरणमनःसंयोगाश्रयत्वमित्ययत्नसिद्धमेव मनसो द्रव्यत्वम्। नित्यत्वञ्च तस्यानाश्रितत्वात्। तस्यावयवकल्पनायां प्रमाणाभावादनाश्रितत्वमिति ॥ २ ॥

तत् किं प्रतिशरीरमेकमनेकं वेति सन्देहे निर्णायकमाह—

**प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ॥ ३ ॥**

मनः प्रतिशरीरमिति शेषः। यद्येकैकस्मिन्नपि शरीरे बहूनि मनांसि स्युस्तदा ज्ञानप्रयत्नानां यौगपद्यं स्यात्। (१)यत्तु नर्त्तकीकरचरणाङ्गुलीषु युगपत् कर्मदर्शनाद् युगपदेव बहवः प्रयत्ना उत्पद्यन्ते इति मतम्। तदयुक्तम्, मनसः शीघ्रसञ्चारादेव तदुपपत्तेः अविनश्यदवस्थयोग्यात्मविशेषगुणानां यौगपद्यानभ्युपगमात्। एतेनैकस्मिन्नपि शरीरे पञ्च मनांसि तेषां द्वित्रिचतुःपञ्चानां तत्तदिन्द्रियसंयोगे द्वे त्रीणि चत्वारि पञ्च वा ज्ञानानि युगपज्जायन्ते इति मतं निरस्तम् (२)कल्पनागौरवप्रसङ्गात्। यौगपद्याभिमानस्तु समर्थित एव। रसनेन्द्रियावच्छेदेन त्वगिन्द्रियसम्बन्धेन मनसस्तिक्तो गुड इति ज्ञानद्वययौगपद्यापत्तिरपि करणधर्मत्वादेव नास्ति। द्वित्रिच्छिन्नगोधाभुजगादावपि अवयवद्वये कर्म खड्गाद्यभिघाताद्वा मनस आशु सञ्चाराद्वा तदानीमेवादृष्टेन (३)पण्डमनोन्तरग्रहणाद्वा। यत्तु मनोऽवयव्येव जलौकावत् तत्सङ्कोचविकाशाभ्यां ज्ञानयौगपद्यायौगपद्ये इति, तत् तदवयवकल्पनागौरवप्रतिहतमिति दिक् ॥ ३ ॥

इदानीं क्रमलङ्घनप्रयोजनमादर्शयन्नेवात्मपरीक्षाशेषं वर्त्तयिष्यन्नाह—

**प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि॥४॥**

प्रसिद्धिर्ज्ञानमेव केवलमात्मनो लिङ्गमिति न मन्तव्यम् प्राणाद-

---

(१) मणिकारमतं दूषयितुं तद्दर्शयति यत्त्विति।

(२) कल्पनागौरवेति। सकलमनोभिरेकप्रत्यये जनयितव्ये क्रियायौगपद्यं संयोगयौगपद्यं च स्वीकार्यम् ततश्च तत्तत्प्रत्यक्षयौगपद्यवारणाय प्रतिबध्यप्रतिबन्धकभावः कल्पनीयः संख्याधिक्यं चाङ्गीकार्यमिति गौरवादित्यर्थः।

(३) पण्डमनोन्तरग्रहणाद्वेति। मुक्तजीवसङ्गपरिभ्रष्टं संसाराप्रयोजकं मनः पण्डमन इत्यर्थः।

योऽपि सन्ति आत्मनो लिङ्गानि । तथाहि शरीरान्तश्चारिणि समीरणे (१)प्राणापानलक्षणे ऊर्द्धाधोगती उत्क्षेपणावक्षेपणे मुसलादाविव प्रयत्नं विनाऽनुपपद्यमाने यस्य प्रयत्नाद् भवतः स नूनमात्मा । न हि तिर्यग्गमनस्वभावस्य वायोरेवं स्वभावविपर्ययो विना प्रयत्नात् । न च विरुद्धदिक्क्रिययोर्वाय्वोः सलिलयोरिवोर्द्धगतिः स्यादिति वाच्यम् एवं सत्यूर्द्धगमनमेव स्यान्न त्वधोगमनं फूत्कारादौ वा तिर्यग्गमनम् । तथाचास्ति कश्चित्, यः प्रयत्नेन वायुमूर्द्धमधो वा प्रेरयति । सुषुप्तिदशायां कथं प्राणापानयोरुर्द्धाधोगती इति चेन्न तदानीं योग्यप्रयत्नाभावेऽपि प्रयत्नान्तरस्य सद्भावात् । स एव जीवनयोनिः प्रयत्न इत्युच्यते ।

एवं निमेषोन्मेषावपि शरीरस्याधिष्ठातारमनुमापयतः । तथाहि निमेषस्तावत् अक्षिपक्ष्मणोः संयोगजनकं कर्म । उन्मेषस्तयोरेव विभागजनकं कर्म । एते च कर्मणी नोदनाभिघातादिदृष्टकारणमन्तरेण निरन्तरमुत्पद्यमाने प्रयत्नं विना नोत्पद्येते । यथा दारुपुत्रकनर्तनं कस्यचित् प्रयत्नात् तथाऽक्षिपक्ष्मनर्तनमपि, तेन प्रयत्नवाननुमीयते ।

एवं जीवनमप्यात्मलिङ्गम् । तथाहि जीवनपदेन लक्षणया जीवनकार्यं वृद्धिक्षतभग्नसंरोहणादि लक्षयति । तथाच यथा गृहपतिर्भग्नस्य गृहस्य निर्माणं करोति लघीयो वा गृहं वर्द्धयति, तथा देहाधिष्ठाता गृहस्थानीयस्य देहस्याहारादिना वृद्धिमुपचयं करोति क्षतञ्च भेषजादिना प्ररोहयति भग्नञ्च करचरणादि संरोहयति तथाच गृहपतिरिव देहस्याप्यधिष्ठाता सिध्यतीति ।

एवं मनोगतिरप्यात्मलिङ्गम् । तथाहि मनस्तावन्मूर्तमणु चेति पूर्वप्रकरणे साधितम् । तस्य चाभिमतविषयग्राहिणि इन्द्रिये निवेशनम् इच्छाप्रणिधानाधीनम् । तथाच यस्येच्छाप्रणिधाने मनः प्रेरयतः स आत्मेत्यनुमीयते यथा गृहकोणावस्थितो दारकः कन्दुकं लाक्षागुटकं वा गृहाभ्यन्तर एव इतस्ततः प्रेरयति । ननु दारुपुत्रनर्त्तयिता गृहपतिर्दारको वा न शरीरादन्यो यो दृष्टान्तः स्यात्, किञ्च शरीरमेव चैतन्याश्रयः अहङ्कारास्पदत्वात्,

---

(१) प्राणेति । यद्यपि प्राणादीनां प्रयत्नद्वारेणैवात्मलिङ्गत्वम् तथापि परात्मानुमाने प्रयत्नस्यापि कर्मणा साधनीयतया प्रयत्नापेक्षया कर्मणः प्राधान्यतासूचनाय तेषां पृथग्ग्रहणम् ।

भवति हि गौरोऽहं स्थूलोऽहमित्याद्यहङ्कारसामानाधिकरण्येन प्रत्ययः । यत्तु बाल्येऽनुभूतं यौवने वार्द्धक्ये वा स्मरति तत्र चैत्रमैत्रवच्छरीरभेदेऽपि स्मरणं न स्यात् "नान्यदृष्टं स्मरत्यन्यः" इति । तत्र चैत्रमैत्रयोर्भिन्नसन्तानत्वेन प्रतिसन्धानं माऽस्तु बाल्यकौमारभेदेऽपि सन्तानैकत्वात् कार्यकारणभावेन प्रतिसन्धानमुपपत्स्यत इति । तत्र ब्रूमः पित्राऽनुभूतस्य पुत्रेणापि स्मरणप्रसङ्गः । तत्र शरीरभेदग्रहो बाधक इति चेत्, वृद्धेन बालशरीराद्भेदेनैव स्वशरीरस्य ग्रहात् प्रतिसन्धानानुपपत्तेः, अनुपलब्धपितृकस्य बालस्य शरीरभेदाग्रहस्यापि सत्त्वात् । मम शरीरमिति ममकारसामान्येनाहङ्कारस्य भानात् ममात्मेत्यत्रापि तथेति चेन्न तत्र ममकारस्यौपचारिकत्वात् राहोः शिर इति वदभेदेऽपि षष्ठ्युपपत्तेः, (१)हिंसादिफलञ्च कर्त्तरि न स्यात् शरीरस्यान्यान्यत्वात्, पातकमिच्छतो भूतचैतनिकस्य कृतहानमकृताभ्यागमश्च दोष इति दिक् ।

इन्द्रियान्तरविकारात् । खल्वपि दृश्यते हि नागरङ्गस्य चिरबिल्वस्य वा रूपविशेषसहचरितं रसविशेषमनुभूय पुनस्तादृशं फलमुपलभमानस्य रसगर्द्धिप्रवर्त्तिनो दन्तोदकसंप्लवः । स च नाम्लरसानुमितिमन्तरेण, अनुमितिर्न व्याप्तिस्मृतिमन्तरेण, सा च न संस्कारं विना, स च न व्याप्त्यनुभवमन्तरेण, स च न भूयोदर्शनमन्तरेणेति इयं ज्ञानपरम्परा नैकं कर्त्तारमन्तरेण कार्यकारणभूता सम्भवतीति । तथाच गौतमीयं सूत्रम् "इन्द्रियान्तरविकारात्" अ० ३ आ १ सू० १२ इति ।

सुखादयश्च ज्ञानवदेवात्मलिङ्गानि द्रष्टव्याः । तथाहि सुखादिकं क्वचिदाश्रितं द्रव्याश्रितं वा कार्यवस्तुत्वात् गुणत्वाद्वा रूपादिवदितरेतरबाधसहकृतं सामान्यतो दृष्टमेव अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं विषयीकरोति । न हि 'पृथिव्याद्यष्टकानाश्रिता इच्छा द्रव्याश्रितेति' प्रतिज्ञा अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं प्रकारमनादाय पर्य्यवस्यति । यत्र तु प्रथमं न बाधावतारस्तत्राष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं व्यतिरेकिसाध्यमिति विभागः । व्यापकतावच्छेदकप्रकारिकैवानुमितिरिति तु तुच्छम्, येन विना प्रतीतिर्न पर्य्यवस्यति तस्यैव तत्र प्रकारत्वात् । अन्यथा द्व्यणुकं

(१) तर्हि मम शरीरमित्यत्रापि राहोः शिर इति वदभेदे एव षष्ठी स्यादत आह हिंसेति ।

कार्य्यां नाश्रितं सत् क्वचिदाश्रितम् अवयवित्वादित्यादावकार्य्याश्रितत्वप्रकारिकाऽनुमितिर्न स्यात् ॥ ४ ॥

ननु सिध्यतु आत्मा स्थिरः, स तु नित्य इति कुतः, कुतश्च द्रव्यमित्यत आह—

**तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ५ ॥**

यथा वायुपरमाणोरवयवकल्पनायां न प्रमाणमतो नित्यत्वं तथात्मनोऽपि । यथा गुणवत्त्वाद्वायुपरमाणुर्द्रव्यं तथात्माऽपीत्यर्थः ॥ ५ ॥

पूर्वपक्षमाह—

**यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥ ६ ॥**

सन्निकर्षे सति अयं यज्ञदत्त इति चेत् प्रत्यक्षं नास्ति (१)तदा दृष्टं प्रत्यक्षतो गृहीतव्याप्तिकं लिङ्गं नास्ति । यथा वह्निना प्रत्यक्षेण सहचरितो गृहीतो धूमो वह्नौ दृष्टं लिङ्गं तथात्मसाधकं लिङ्गं दृष्टं नास्तीत्यर्थः ॥ ६ ॥

ननु प्रत्यक्षदृष्टव्याप्तिकस्य दृष्टलिङ्गस्याभावेऽपि सामान्यतो दृष्टमेव लिङ्गं भविष्यति, न हि ततो नानुमितिरित्याशङ्क्य पुनः पूर्वपक्षी आह—

**(२)सामान्यतो दृष्टाच्चाविशेषः ॥ ७ ॥**

सामान्यतो दृष्टमपि लिङ्गं भवति न तु तत आत्मत्वेन अष्टद्रव्यातिरिक्तद्रव्यत्वेन वा स्यादात्मसिद्धिः, किन्तु तेनेच्छादीनां क्वचिदाश्रितत्वमात्रं सिध्येत् तच्च नात्ममननौपयिकमित्यर्थः । तदेतदाह अविशेष इति ॥ ७ ॥

तत् किं 'योऽपहतपाप्मा स आत्मा' इत्याद्यागमोऽनर्थक एवेत्याशङ्क्य स एवाह—

---

(१) तदेति । यज्ञदत्तशरीरे चक्षुरादिसन्निकर्षे सत्यपि तदधिष्ठातर्यात्मनि तदभावादित्यर्थः । एतेन साध्यस्य क्वचिदप्यप्रत्यक्षत्वेन पूर्ववदनुमानासम्भवः प्रदर्शितः, प्रत्यक्षगृहीतव्याप्तिकं हि लिङ्गं पूर्ववदुच्यत इति भावः ।

(२) सामान्यत इति । चकारः शेषवदनुमानबोधकः । तथा च क्वचिदाश्रितत्वमात्रसाधकसामान्यतोदृष्टस्यानुमानस्याविशेषत्वे शेषवज्जन्याभावविधेयकानुमानमपि कैमुतिकेनाविशेषमित्यर्थः ।

## तस्मादागमिकः ॥ ८ ॥

आगममात्रसिद्ध एवात्मा नत्वनुमेयः दृष्टसामान्यतोदृष्टयोर्लिङ्गयोरभावात् । तस्मात् सम्यगुपनिषदां श्रवणात् तत्त्वसाक्षात्कार उत्पद्यते न तु मननप्रणालिकया । तथाच मननप्रयोजनकमिदं तन्त्रमतन्त्रम् । दृष्टं हि भूतदशकनदीसन्तरणादावुपदेशमात्रादेव साक्षात्कारि ज्ञानम् ॥ ८ ॥

तदेवं त्रिभिः सूत्रैः पूर्वपक्षे सिद्धान्तवाद्याह—

## अहमितिशब्दस्य व्यतिरेकान्नागमिकम् ॥ ९ ॥

नागममात्रं प्रमाणमात्मनि (१)किन्त्वहमितिपदमात्मपदं वा साभिधेयं पदत्वात् घटादिपदवत् इत्यनुमानादप्यात्मसिद्धिः । ननु पृथिव्याद्येव तदभिधेयं स्यादित्यत आह—व्यतिरेकादिति । पृथिव्यादितोऽहमिति पदस्य व्यतिरेकाद्व्यावृत्तेरित्यर्थः । न हि भवत्यहं पृथिवी अहमापः अहन्तेजः अहं वायुः अहमाकाशम् अहं कालः अहं दिक् अहं मन इति व्यपदेशः प्रत्ययो वा । शरीरे भवतीति चेन्न परशरीरेऽपि तत्प्रसङ्गात् । स्वशरीरे भवतीति चेन्न स्वस्यात्मभिन्नस्यानिरुक्तेः, मम शरीरमिति वैयधिकरण्येन प्रत्ययाच्च । नन्विदमपि सामान्यतोदृष्टमेव तच्च विशेषापर्यवसन्नमिति दूषितमेवेति चेन्न अहम्पदेऽहन्त्वमात्मत्वमेव प्रकारः, तथाच पक्षधर्मताबलादेवाहन्त्वस्य प्रवृत्तिनिमित्तत्वं पर्यवसन्नं तच्चानन्यसाधारणमेवेति विशेषसिद्धेः । एवं सामान्यतो दृष्टादपि बाधसहकृताद्विशेषसिद्धिः । यच्चोक्तं 'श्रवणादेव साक्षात्कारः किमनेनेति' तदयुक्तम्, न हि मननमन्तरेण (२)सङ्कुसुकस्याश्रद्धामलक्षालनम्, न च तदन्तरेण तत्र निदिध्यासनाधिकारः, न च निदिध्यासनमन्तरेण सवासनमिथ्याज्ञानोन्मूलनक्षमस्तत्त्वसाक्षात्कारः । अभ्यासादेव हि का-

---

(१) शब्दस्येति सूत्रस्थशब्दपदस्य वाक्यपरत्वे वाक्ये शक्त्यनङ्गीकर्तृमते बाधः स्यात्तद्वारणाय तदर्थमाहाहमितिपदमिति ।

ननु अस्मच्छब्दस्यात्मसामान्यपरत्वे चैत्रोच्चारितादहंपदान्मैत्रस्यापि बोधः स्यात् इति उच्चारयित्रात्मन्येव तच्छक्तिर्वाच्येति तत्पक्षकानुमितौ नात्मसामान्यसिद्धिरित्याशंक्याहात्मपदं वेति । आत्मत्वप्रकारकबोधजनकसङ्केतवत्पदमित्यर्थः ।

(२) सङ्कुसुकेति । सङ्कुसुकोऽस्थिरप्रकृतिः "सङ्कुसुरोऽस्थिरे" इति कोशात् ।

मातुरस्याकस्मात् कामिनीसाक्षात्कारः। न हि शाब्दमानुमानिकं वा ज्ञानं मिथ्याज्ञानोन्मूलनक्षमं दिङ्मोहादौ दृष्टमिति भावः। ननु तथापि परोक्षे आत्मनि कथं सङ्केतग्रहः ( दृष्टो ह्ययं घटपद वाच्य इति प्रत्यक्षे सङ्केतग्रह ) इति चेत ? क एवमाह नात्मा प्रत्यक्ष इति, किन्तु मनसा संयोगप्रत्यासत्त्यात्मग्रहः । कथमन्यथाऽहं सुखी जानामीच्छामि यते दुःखीत्यादप्रत्ययः(१)। नह्ययमवस्तुकः सन्दिग्धवस्तुको वा, नीलादिप्रत्ययवत् अस्यापि निश्चितवस्तुकत्वात्। न च लैङ्गिकः, लिङ्गज्ञानमन्तरेणापि जायमानत्वात्। नापि शब्दः, तदनुसन्धानाननुविधानात । प्रत्यक्षाभासोऽयमिति चेत, तर्हि क्वचिदनाभासविषयोऽपि नह्यप्रमितमारोप्यते इत्यावेदयिष्यते ॥ ९ ॥

एवञ्चेत् किमनुमानेनेति पूर्वपक्षवादी आह—

**(२)यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति ॥१०॥**

इति शब्दो ज्ञानप्रकारमाह । दृष्टमिति भावे-क्तप्रत्ययान्तम्, अन्वक्षमित्यध्यक्षम् । तेनायमर्थः–अयं देवदत्तः अयं यज्ञदत्त इति प्रकारकं दृष्टं दर्शनं अध्यक्षमेवास्ति यदि किमनुमानप्रयासेन "न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः" ॥ १० ॥

अत्र सिद्धान्त्याह—

**दृष्टयात्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः ॥ ११ ॥**

दृष्टे प्रत्यक्षेण गृहीते आत्मनि लिङ्गे (३)सम्भूतसामग्रीके सति एक एव एकवैषयिक एव प्रत्ययः। प्रत्यय इति निरस्तसमस्तविभ्रमाशङ्कित्वमाह। कुत एवमित्यत आह–दृढत्वात् प्रमाणसंप्लवेनान्यथाभावशङ्कानिवर्तनपटुत्वात् । तत्र दृष्टान्तमाह–प्रत्यक्षवदिति। यथा दूरात्तोयप्रत्यक्षे सत्यपि संवादार्थं बलाकालिङ्गेनापि तदनुमानम्। तदुक्तम् "प्रत्यक्षपरिकलितमप्यनुमानेन बुभुत्सन्ते तर्करसिकाः"

( १ ) द्वेऽम्मीत्यादिप्रत्यय इति पाठान्तरम् ।
( २ ) यदीति सूत्रम् । इति प्रत्यक्षं तर्हि कृतमनुमानेनेति शेषः ।
( ३ ) सम्भूतेति । प्रमान्तरकारणकलापसमवधाने इति सूत्रस्थलिङ्गपदार्थः ।

इति। इदमत्राकूतम्—यद्यात्मा कदाचित् प्रत्यक्षे चेतसे भासत एव तथापि अहं गौरः अहं कृशः इत्यादिविरोधिप्रत्ययान्तरतिरस्कृतो न तथा स्थेमानमासादयति विद्युत्सम्पातसञ्जातज्ञानवत्, तत्र लिङ्गेन अनन्यथासिद्धेन ज्ञानान्तरमुत्पद्यमानं पूर्वज्ञान(विषय)मेव स्थिरीकरोति। (१)किञ्च "श्रोतव्यो मन्तव्यः"इत्यादिविधिबोधितस्यात्ममननस्य इष्टसाधनत्वावगतौ अनुमित्सयाऽवश्यमात्मानुमानप्रवृत्तिः, तद्व्यतिरेके निदिध्यासनासम्भवे साक्षात्काराभावेऽपवर्गासम्भवादिति भावः। अहं देवदत्तोऽहं यज्ञदत्त इति प्रतीतिद्वयाभिधानमात्मनः प्रत्यात्मवेदनीयत्वं सूचयितुम् ॥ ११ ॥

ननु यदि यज्ञदत्तोऽहमिति प्रत्यय आत्मनि तदा यज्ञदत्तो गच्छतीति गमनसामानाधिकरण्यभानमनुपपन्नमित्यत आह—

**देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः॥ १२ ॥**

अस्ति हि अहं गौरः अहं स्थूल इति प्रत्ययः, अस्ति च मम शारीरमिति भेदप्रत्ययः। तत्र देवदत्तो गच्छतीति गतिसामानाधिकरण्यानुभवो व्यवहारश्च भाक्तः, ममेति प्रत्ययस्य यथार्थत्वात्। यद्यपि देवदत्तत्वं शरीरवृत्तिर्जातिस्तेन देवदत्तो गच्छतीति मुख्य एव प्रयोगो यथार्थ एव च प्रत्ययः तथापि देवदत्तपदं तदवच्छिन्नात्मनि प्रयुक्तश्चेत् तदौपचारिको बोद्धव्यः ॥ १२ ॥

अत्र शङ्कते—

**सन्दिग्धस्तूपचारः ॥ १३ ॥**

तुशब्दः पूर्वपक्षद्योतकः। आत्मशरीरयोस्तावदहमितिप्रत्ययः प्रयोगश्च दृश्यते तत्र क मुख्यः क वौपचारिक इति सन्देहः ॥ १३ ॥

समाधत्ते—

**अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः ॥ १४ ॥**

अर्थान्तरमात्मत्वरूपं प्रत्यक्षं यत्र प्रत्यये स प्रत्ययोऽर्थान्तरप्र-

(१) ननु प्रत्यक्षात्मकसिद्धिज्ञानस्यानुमितौ प्रतिबन्धकत्वात्कथमनुमितिरतआह किंचेति। तथा चोत्तेजकसिषाधयिषासत्त्वात्प्रक्षतानिर्वाहेणानुमितिः स्यादेवेति भावः।

त्यक्षः । अयमर्थः–अहमिति प्रत्ययस्य प्रत्यगात्मनि स्वात्मनि भावात् परत्र परात्मनि अभावात् अर्थान्तरे स्वात्मन्येव मुख्यः कल्पयितुमुचितः । यदि तु शरीरे मुख्यः स्यात् तदा बहिरिन्द्रियजः स्यात् । न हि शरीरं मानसप्रत्यक्षं मानसश्चायमहमिति प्रत्ययः बहिरिन्द्रियव्यापारमन्तरेणापि जायमानत्वात्, अहं दुःखी अहं सुखी जाने यते इच्छाम्यहमिति योग्यविशेषगुणोपहितस्यात्मनो मनसा विषयीकरणात् । नायं लैङ्गिको लिङ्गानुसन्धानमन्तरेणापि जायमानत्वात् । न शाब्दः शब्दाकलनमन्तरेणापि जायमानत्वात् । तस्मान्मानस एव, मनसश्च बहिरस्वातन्त्र्येण शरीरादावप्रवृत्तेरिति भावः । (१)किञ्च यदि शरीरे स्यात् परशरीरे स्यात्, स्वात्मनि यदि स्यात् तदापि परात्मनि स्यादिति चेन्न परात्मनः परस्यातीन्द्रियत्वात् तद्विशेषगुणानामयोग्यत्वात्, योग्यविशेषगुणोपग्रहेण तस्य योग्यत्वात् । न केवलमात्मन इदं शीलं किन्तु द्रव्यमात्रस्य, द्रव्यं हि योग्यविशेषगुणोपग्रहेणैव प्रत्यक्षं भवति । आकाशमपि तर्हि शब्दोपग्रहणे प्रत्यक्षं स्यादिति चेत्, स्यादेवं यदि श्रोत्रं द्रव्यग्राहकं भवेत्, आकाशं वा रूपवत् स्यात् । आत्मनोऽपि नीरूपत्वं तुल्यमिति चेत्, बहिर्द्रव्यमात्र एव प्रत्यक्षतां प्रति रूपवत्त्वस्य तन्त्रत्वात् । प्रत्यगित्ययं शब्दोऽन्यव्यावृत्तमाह ॥ १४ ॥

पुनः शङ्कते—

**देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहङ्कारः ॥ १५ ॥**

अहङ्कारोऽहमिति प्रत्ययः । स च शरीरप्रत्यक्षः शरीरं प्रत्यक्षं विषयो यत्र स शरीरप्रत्यक्षः । देवदत्तो गच्छतीत्युपचारात्तावत् प्रयोगः प्रत्ययो वा त्वया समाहितः । स चोपचार (२)आभिमानिकः यतोऽहं गौरः अहं कृशः सौभागिनोऽहं पुनरुक्तजन्मेत्यादयः प्रत्ययाः प्रयोगाश्चोपचारेण समन्वयितुमशक्या इत्यर्थः ॥ १५ ॥

सिद्धान्तमाह—

---

( १ ) शरीरस्याहंप्रत्ययाविषयत्वे बाधकमाह किञ्चेति ।

( २ ) आभिमानिक इति । अवास्तव इत्यर्थः ।

सन्दिग्धस्तूपचारः ॥ १६ ॥

तुशब्दोऽयं सिद्धान्तमभिव्यनक्ति । उपचारोऽयमाभिमानिकः किन्तु शरीर एवायमहम्प्रत्यय इति यदुक्तं तत्रापि सन्देह एवेत्यर्थः । तथाच प्रत्ययस्यो(१)भयत्रापि कूटसाक्षित्वेन विशेषावधारणाय यतितव्यम् तत्र यत्ने क्रियमाणे निमीलिताक्षस्याप्यहमिति-प्रत्ययदर्शनात् शरीरभिन्ने बहिरिन्द्रियागोचरे वस्तुनि स मन्तव्यः । शरीरे भवन् परशरीरेऽपि स्यात, चक्षुर्नैरपेक्ष्येण च न स्यात् । अहं कृशः स्थूलो वा सुखीति कथं सामानाधिकरण्यमिति चेन्न सुखाद्यवच्छेदकत्वेनापि तत्र शरीरभानसम्भवात् सिंहनादवदिदं गहनमितिवत्, अहन्त्वमात्रं शरीरे समारोप्यते मनसोपस्थितम्, त्वगिन्द्रियोपनीतमौष्ण्यम् उष्णं जलम् उष्णं शरीरमितिवत् ॥ १६ ॥

सिद्धान्तमुपबृंहयन्नाह—

न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः ॥ १७ ॥

ज्ञानमिति योग्यं सुखदुःखादिकमात्मगुणमुपलक्षयति । यथा यज्ञदत्तविष्णुमित्रयोः शरीरं परस्परभिन्नं तथा ज्ञानसुखादिकमपि (२)भिन्नमेव । तथाच यथा यज्ञदत्तस्येदं शरीरं तथा यज्ञदत्तस्य ज्ञाने सुखादौ वाऽनुत्पन्ने(३) अहं सुखी जाने यते इच्छामीति ज्ञानादिकं(४)विषयो भवति योग्यशरीरविषयकत्वेन तदीयरूपादिवत्तदीयज्ञानादिनामपि प्रत्यक्षत्वसम्भवात् । न च सम्भवति, तस्मात् ज्ञानसुखादीनां शरीरादन्य एवाश्रयो वक्तव्य इति भावः । शरीरविशेषात् शरीरस्य भेदादित्यर्थः । (५)तथाच शरीरभेदं प्राप्य ज्ञानं न

---

(१) उभयत्रेति । अहं प्रत्ययस्य शरीरे तद्भिन्ने चात्मसाक्षितायास्तुल्यत्वाद्विशेषावधारणमावश्यकमिति भावः ।

(२) भिन्नमेवेति । शरीरगुणाद्भिन्नमेवेत्यर्थः । (३) समुत्पन्न इति पाठान्तरम् ।

(४) विषयो भवतीति । इदं शरीरं यथा विषयो भवति ज्ञानादिकं तथा भवेदिति योजना । अस्मदादिशब्दस्य शरीरवाचकत्वे इदं शरीरमिति प्रत्यक्षस्यात्मविषयकत्वेनात्मप्रत्यक्षज्ञानादिप्रत्यक्षयोस्तुल्यसामग्रीत्वेन इदं शरीरमिति प्रत्यक्षकालेऽहं जाने इत्यादिरूपज्ञानादिप्रत्यक्षापत्तिरिति भावः ।

(५) भावार्थमुक्त्वा सूत्राक्षरार्थमाह तथाचेति । ज्ञानानवच्छेदकं शरीरं विषयीकुर्वतः प्रत्यक्षस्य ज्ञानादिकं न विषय इति भावः ।

तु विषय इति, ल्यब्लोपे पञ्चमी ॥ १७ ॥

नन्वात्मा न प्रत्यक्षः नीरूपद्रव्यत्वात् निरवयवद्रव्यत्वाद्वा आकाशवत्, तथाचाहं कृशो गौर इति बुद्धेः शरीरमेव विषयो वाच्यः, क्वचिदहं सुखीत्यादिधीरपि यद्यप्यस्ति, तथाप्याश्रयमन्तरेण भासमानानां सुखादीनां शरीरे समारोप इत्येव कल्पयितुमुचितम्, यथोष्णं सुरभि जलम् इत्याश्रयमन्तरेण प्रतीयमानयोरौष्ण्यसौरभयोर्जले समारोपः । न त्वेतदनुरोधेन जलप्रत्ययस्यापि प्रसिद्धजलमन्तरेणान्यविषयत्वम्, तथाऽहमित्यप्यहन्त्वं शरीर एव वास्तवम्, सुखादिकन्तु कदाचित्तत्रारोप्यते तेनात्मनि प्रत्यक्षाकारं ज्ञानं नास्त्येव । सुखाद्याधारत्वेन यत् कल्पनीयं तदागमसिद्धं भवतु न तत्रापि ग्रह इत्यत आह—

**अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाऽव्यभिचाराद्विशेषसिद्धेर्नागमिकः ॥ १८ ॥**

अयमर्थः । अहं सुखी अहं दुःखीति प्रत्ययो नागमिको न शाब्दो नापि लैङ्गिकः शब्दलिङ्गयोरनुसन्धानमन्तरेणापि जायमानत्वात् । प्रत्यक्षत्वे च नीरूपत्वं निरवयवत्वञ्च यद्बाधकमुक्तं तद्बहिरिन्द्रियप्रत्यक्षतायां भवति तत्र हि रूपवत्त्वानेकद्रव्यवत्त्वयोः प्रयोजकत्वात्, मानसप्रत्यक्षता च तदन्तरेणापि । ननु स्यादेवं यद्यात्मनि प्रमाणं स्यात् तदेव तु नास्तीत्यत आह-शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेरिति । यथा क्षित्यादिषु द्रव्येषु शब्दस्य (१)व्यतिरेकोऽव्यभिचारी नियतस्तेन तदाश्रयस्याष्टद्रव्यातिरिक्तस्याकाशरूप(स्य) विशेषस्य सिद्धिः एवमिच्छायाः पृथिव्यादिषु व्यतिरेकस्याव्यभिचारात् तदाश्रयेणापि अष्टद्रव्यातिरिक्तेन भवितव्यम् । नन्वेतावताऽप्यानुमानिक एव आत्मा न तु प्रत्यक्ष इत्यत आह-अहमिति । मुख्ययोग्याभ्यामिति । अहमितीतिकारेण ज्ञानाकारमाह, तेनाहमिति ज्ञानं शब्दलिङ्गानुसन्धानमन्तरेण निमीलिताक्षस्य यदुत्पद्यते तन्मुख्येन (२)अहन्त्ववता योग्येन प्रमाणसिद्धेन उपपादनीयम्, न तु शरीरा-

(१) व्यतिरेक इति । अभाव इत्यर्थः ।

(२) अहन्त्ववतेति । तथा च सूत्रस्थाहमितिपदं भावप्रधाननिर्देशपरम् । प्रमाणसिद्धाहन्त्वेनेत्यर्थः ।

दिना, तत्रेच्छाया व्यतिरेकाव्यभिचारात्। मुख्ययोग्याभ्यामित्यनन्तरम् उपपादनीयमिति पूरणीयम् । आत्मनि प्रमाणानि बहूनि ग्रन्थगौरवभिया त्यक्तानि मयूखेऽन्वेष्टव्यानि ॥ १८ ॥

आत्मपरीक्षाप्रकरणं समाप्य इदानीमात्मनानात्वप्रकरणमारभते तत्र पूर्वपक्षसूत्रम्—

**सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ १९ ॥**

एक एव आत्मा चैत्रमैत्रादिदेहभेदेऽपि। कुतः ? सुखदुःखज्ञानानां निष्पत्तेरुत्पत्ते(१)रविशेषात्, सर्वशरीरावच्छेदेन सुखदुःखज्ञानानामुत्पत्तिरविशिष्टैव यतः । यद्यात्मभेदसाधकं लिङ्गान्तरं भवेत्तदा सिध्येदात्मभेदः । न च तदस्ति. (२)यथा तत्तत्प्रदेशावच्छेदेन शब्दनिष्पत्तावपि शब्दलिङ्गाविशेषादेकमेवाकाशम्, यौगपद्यादिप्रत्ययलिङ्गाविशेषादेक एव कालः, पूर्वापरादिप्रत्ययलिङ्गाविशेषादेकैव दिक् ॥ १९ ॥

सिद्धान्तमाह—

**व्यवस्थातो नाना ॥ २० ॥**

नाना आत्मानः। कुतः ? (३)व्यवस्थातः। व्यवस्था प्रतिनियमः यथा कश्चिदाढ्यः, कश्चित् रङ्कः, कश्चित् सुखी, कश्चिद् दुःखी, कश्चिदुच्चाभिजनः, कश्चिन्नीचाभिजनः, कश्चिद्विद्वान्, कश्चित् जाल्म इतीयं व्यवस्था आत्मभेदमन्तरेणानुपपद्यमाना साधयत्यात्मनां भेदम्। न च जन्मभेदेन बाल्यकौमारवार्द्धक्यभेदेन वा, एकस्याप्यात्म-

---

(१) अविशेषादिति । आत्मत्वमेकमात्रवृत्ति सुखाश्रयमात्रवृत्तित्वात् इत्यनेनैकात्मसिद्धिरिति भावः। नन्वयं हेतुरात्मत्वस्य जीवपरमात्मसाधारण्ये व्यभिचारी परमात्मनि सुखानङ्गीकारात्। तदसाधारण्ये सुखस्य परमात्मगुणत्वाङ्गीकारमते जीवपरमात्मगतद्वित्वसंख्यायां व्यभिचारीत्यत आह दुःखेति । तथा चात्मत्वं न परमात्मसाधारणमिति भावः । ननु जीवैक्यसिद्धावपि जीवपरमात्मनोरैक्यासिद्धिरेवेति कुत आत्मैक्यमित्यत आह ज्ञानेति । तथा च जीवपरमात्मगतमात्मत्वं पक्षः ज्ञानाश्रयमात्रवृत्तित्वादिति हेतुरिति च न व्यभिचारादिदोष इति भावः। तत्पुरुषीयसुखादिर्दृष्टान्तः।

(२) लिङ्गाविशेषादित्यपि हेतुरिति पूर्वोक्तं स्मारयन्नाह यथेति ।

(३) आढ्यशरीराधिष्ठित आत्मा तत्कालिकप्रतीतिविषयरङ्काधिष्ठितात्माभिन्नः तत्कालीनरङ्कताजनकादृष्टवद्भिन्नत्वात् घटवत् जीवः परमात्मभिन्नः असर्वज्ञत्वात् घटवदित्यनुमानप्रयोगोऽत्र बोध्यः।

नो यथा व्यवस्था तथा चैत्रमैत्रादिदेहभेदेऽपि स्यादिति वाच्यम् (१)कालभेदेन विरुद्धधर्माध्याससम्भवात् ॥ २० ॥

(२)प्रमाणान्तरमाह—

**शास्त्रसामर्थ्याच्च ॥ २१ ॥**

शास्त्रं श्रुतिः, तयाऽप्यात्मनो भेदप्रतिपादनात् । श्रूयते हि "द्वे-ब्रह्मणी वेदितव्ये" इत्यादि । तथा "द्वा सुपर्णा सयुजा सखाया स-मानं वृक्षं परिषस्वजाते" इत्यादि च(३) ॥ २१ ॥

इति श्रीशाङ्करे कणादसूत्रोपस्कारे तृतीयाध्यायस्य द्वितीयाह्निकम् ।
समाप्तश्चायं तृतीयोऽध्यायः ।



---

(१) कालभेदेनेति । देशवृत्तौ कालस्यावच्छेदकत्वादित्यर्थः ।

(२) एकं विज्ञानमानन्दमित्यादिश्रुतावात्मैक्यं प्रतिपादितं तथा च नरशिरःकपालं शुचि प्रा-ण्यङ्गत्वादित्याद्यनुमानवदागमविरोधादात्मभेदकमनुमानमप्रमाणमित्यतः शास्त्रप्रामाण्यदर्शकं सूत्र-मवतारयन्नाह प्रमाणान्तरमिति ।

(३) नच "तत्त्वमसि श्वेतकेतो, ब्रह्मविद्ब्रह्मैव भवतीत्यादिश्रुतिविरोधः स्यादिति वाच्यम् तत्त्वमसीत्यस्या अभेदेन तदीयत्वप्रतिपादने, ब्रह्मविदित्यस्याश्च निर्दुःखत्वेन साम्यप्रतिपादने तात्पर्यात् अन्यथा "निरञ्जन"इति श्रुतिरसङ्गता स्यादित्यनवद्यम् ।

# चतुर्थाध्याये प्रथमाह्निकम् ।

पृथिव्यादीनां नवानामुद्देशं लक्षणपरीक्षां निर्वर्त्य प्रकृतेर्मूलकारणतां साङ्ख्याभिमतां निराचिकीर्षुः परमाणूनां मूलकारणत्वं पृथिव्याद्यन्तर्भावञ्च सिषाधयिषुर्नित्यत्वसामान्यलक्षणं तावदाह—

## सदकारणवन्नित्यम् ॥ १ ॥

न कारणवदकारणवत् पदसंस्कारात् । तदेवं घटादीनां व्यवच्छेदः । तथापि प्रागभावेऽतिव्याप्तिरित्यत आह-सदिति । (१)सत्तायोगीत्यर्थः । समवायविशेषपदार्थयोः सत्तैकार्थसमवाय एव सत्तायोगः, सामान्यान्तरस्य सत्तायाश्च सत्प्रत्ययविषयतैव सत्तायोगः, स च प्रत्ययो वस्तुस्वरूपमात्रनिबन्धन इत्यन्यदेतत् । (२)न चान्यत्रापि तथैवास्तु किं सत्तयेति वाच्यम् अनुगतमतेस्तत्सिद्धेरुक्तत्वात् ॥ १ ॥

नित्यसामान्यमभिधायेदानीं परमाणुमधिकृत्याह—

## तस्य कार्यं लिङ्गम् ॥ २ ॥

तस्य परमाणोः कार्यं घटादि लिङ्गम् । तथाच गौतमीयं सूत्रम्-"व्यक्तात् व्यक्तस्य निष्पत्तिः प्रत्यक्षप्रामाण्यात्" अ० ४ आ० १ सू० ११ इति । अवयवावयविप्रसङ्गस्तावदनुभूयते स यदि निरवधिः स्यात् तदा मेरुसर्षपयोः परिमाणभेदो न स्यात्, अनन्तावयवारब्धत्वाविशेषात् । न च परिमाणप्रचयाविशेषाधीनो विशेषः स्यादिति वाच्यम् सङ्ख्याविशेषाभावा(३)त्तयोरप्यनुपपत्तेः । प्रलयावधिः स्यादिति चेत् अन्त्यस्य कस्यचिन्निरवयवत्वे प्रलयस्यैवानुपपत्तेः, अवयवविभागविनाशयोरेव

---

(१) सत्तायोगीति । सत्तासम्बन्धीत्यर्थः । स च सबन्धस्समवायसामानाधिकरण्यान्यतररूपो वाच्यः । प्रत्येकं तथात्वे सामान्यादावव्याप्तेः । सामानाधिकरण्यं च समवायघटितमेव बोध्यं नातः प्रागभावे यथाकथंचित्समानाधिकरणेऽतिव्याप्तिः । समवायस्यापि स्वात्मकस्वरूपसम्बन्धेन वृत्तित्वात्समवायघटितसामानाधिकरण्यम् अव्याहतमित्याह समवायेत्यादिना ।

(२) शङ्कते न चेति । अन्यत्र द्रव्यादावपि वस्तुस्वरूपनिबन्धन एव सत्प्रत्ययोऽस्त्वित्यर्थः ।

(३) तयोरिति । परिमाणविशेषप्रचयविशेषयोरित्यर्थः ।

द्रव्यनाशकत्वात् । विभागश्च नावधिः तस्यैकाश्रयत्वानुपपत्तेः । तस्मान्निरवयवं द्रव्यमवधिः स एव परमाणुः । न च त्रसरेणुरेवावधिः, (१)तस्य चाक्षुषद्रव्यत्वेन महत्त्वादनेकद्रव्यवत्त्वाच्च, महत्त्वस्य चाक्षुषप्रत्यक्षत्वे कारणत्वम् अनेकद्रव्यवत्त्वमादायैव, अन्यथा महत्त्वमेव न स्यात् कस्य कारणत्वम्भवेत् । न च त्रसरेणोरवयवा एव परमाणवः, महद्द्रव्यारम्भकत्वेन तेषामपि सावयवत्वानुमानात् तन्तुवत् कपालवच्च । तस्मात् यत् कार्य्यद्रव्यं तत् सावयवम्, यच्च सावयवं तत् कार्य्यं द्रव्यम् । तथाच यतोऽवयवात् कार्य्यत्वं निवर्त्तते तत्र सावयवत्वमपीति निरवयवपरमाणुसिद्धिः । तदुक्तं प्रशस्तदेवाचार्य्यैः "सा च द्विविधा नित्या चानित्या च" इति ॥ २ ॥

इदानीं परमाणौ रूपादिसिद्धये प्रमाणमाह—

**कारणभावात् कार्य्यभावः ॥ ३ ॥**

रूपादीनां कारणे सद्भावात् कार्य्ये सद्भावः, कारणगुणपूर्वका हि कार्य्यगुणा भवन्ति घटपटादौ तथा दर्शनादित्यर्थः ॥ ३ ॥

इदानीं सर्वानित्यतावादिनिराकरणायाह—

**अनित्य इति विशेषतः प्रतिषेधभावः ॥ ४ ॥**

विशेषत इति षष्ठ्यन्तात्तसिः । (तथाच) विशेषस्य नित्यस्य प्रतिषेधस्तदा स्यात् यद्यनित्य इति प्रत्ययः शब्दप्रयोगश्च न स्यात् नञ उत्तरपदार्थनिषेधार्थत्वात् तत् कथं नित्याभावेऽनित्य इति स्यात्, भवति च ततो नित्यमस्तीति सिद्धम् । (२)यद्वा अनित्य इति न नित्यः परमाणुरित्यनेन प्रकारेण नित्यस्य त्वया प्रतिषेधः कर्तव्यः । अनेन च प्रकारेण प्रतिषेधो न सिध्यति सिद्ध्यसिद्धिप्रतिहतत्वात् । सूत्रञ्चैवं योजनीयम्—अकारः स्वतन्त्र एव प्रतिषेधवचनः "अमानोनाः प्रतिषेधवचनाः" इति तथाचानित्य इति न नित्य इत्यर्थः । प्रतिषेधभावः प्रतिषेधस्वरूपं तेन न नित्य इति विशेषस्य नित्यस्य प्रतिषेधस्वरूपम्, तच्च न सम्भवतीति शेषः ॥ ४ ॥

---

(१) तस्येति । तथ च चाक्षुषद्रव्यत्वेन त्रसरेणोः सावयवत्वासिद्धिरित्यर्थः अनुमानप्रयोगस्तु वायुपरमाणुसिद्धौ प्रदर्शितः ।

(२) यदातदेत्यध्याहारेण गौरवादर्थान्तरं सूत्रस्याह यद्वेति ।

ननु परमाणुर्न नित्यः मूर्तत्वात् घटवत्, एवं रूपवत्त्वरसवत्त्वादयः प्रत्येकं हेतव उन्नेयाः, एवं षट्केन युगपद्योगात् परमाणोः (१)षडंशता तथाच सावयवत्वात् अव्याप्यवृत्तिसंयोगाश्रयत्वात् । किञ्च परमाणोर्मध्ये यद्याकाशमस्ति तदा सच्छिद्रत्वेनैव सावयवत्वम्, अथ नास्ति, तदाकाशस्यासर्वगतत्वप्रसङ्गः । किञ्च छायावत्त्वात् (२)आवृत्तिमत्त्वात् । अपिच यत् सत् तत् क्षणिकमित्यादिक्षणिकत्वसाधकानुमानादपि परमाणोरनित्यता, तथा चैतावती चेदनुमितिपरम्परा तदा कथमुच्यते परमाणुर्नित्य इत्यत आह—

**अविद्या ॥ ५ ॥**

परमाणोरनित्यत्वविषया सर्वाप्यनुमितिः अविद्या भ्रमरूपा आभासप्रभवत्वात् । आपाततो (३)धर्मिग्राहकमानबाधः सर्वत्र विपक्षबाधकप्रमाणशून्यत्वाद्याप्यत्वासिद्धिः क्वचित् स्वरूपासिद्धिरित्यादि समानतन्त्रेऽन्वेष्टव्यम् ॥ ५ ॥

ननु यदि परमाणुरस्ति कथमिन्द्रियेण न गृह्यते रूपवत्त्वस्पर्शवत्त्वादयश्चैन्द्रियकत्वप्रयोजकास्त्वयैवोपपादिता इत्यत आह—

**महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः ॥ ६ ॥**

महति महत्त्ववति द्रव्ये महच्छब्दात् परिमाणवाचकात् (४)गुणवाचकानां मतुपो लोपात् । अनेकद्रव्यवत्त्वादिति । अनेकं द्रव्यमाश्रयो यस्य तदनेकद्रव्यम्, तद् यस्यास्ति तदनेकद्रव्यवत् तद्भा-

(१) षडंशतेति । मध्यस्य परमाणोरुपर्यधःपार्श्वस्थितैः परमाणुभिर्यः संयोगस्तत्र मध्यस्य पूर्वेण यः संयोगो नासौ मध्यपश्चिमपरमाण्वाश्रितः । एवं मध्यपश्चिमपरमाणुसंयोगो नैव मध्यमपूर्वपरमाण्वाश्रय एवमन्यत्रापीति षडंशता न्यायवार्तिकादौ द्रष्टव्या ।

(२) आवृत्तिमत्त्वादिति । आवृत्तिः स्पन्दनविशेष इत्यर्थः । तथा चैतैर्न्यायसूत्रपूर्वपक्षग्रंथोक्तैर्हेतुभिरनित्यत्वसिद्धौ कथं नित्यत्वं परमाणाविस्यर्थः ।

(३) धर्मिग्राहकेति । तद्ग्राहकमानं च 'तस्य कार्यं लिङ्गम्' इति सूत्रोक्तोपस्कारोक्तं 'निरवयवं द्रव्यमवधि'रित्यादिनोक्तं, तेन बाधः व्यापकस्य निवृत्त्या निरवयवत्वेन अनित्यत्वस्य व्याप्यस्य बाध इत्यर्थः । विपक्षेति । विपक्षबाधकप्रमाणमनुकूलतर्कादिरूपम् । क्वचित् सावयवत्वादिहेतौ । स्वरूपासिद्धिरिति । निरवयवत्वेनाभ्युपगते सावयवत्वाभावात् । मूर्तत्वादिहेतौ मनोऽन्तर्भावेण व्यभिचारादिरादिपदार्थः । समानतन्त्रे गौतमीयेऽन्वेष्टव्यम् तत्रैव दोषविस्तारो द्रष्टव्य इत्यर्थः ।

(४) महच्छब्दः कथं परिमाणवाचको महत्त्वशब्दस्य तथात्वादत आह गुणवाचकानामिति । शुक्लादिशब्दानामिवेति भावः ।

तादात्म्यं (१)प्रतियोगितावच्छेदकम्। प्रतियोगिसमानाधिकरणश्चायमभावः, भवति हि घटो न भूतलमिति प्रतीतिः। नित्यश्च, कदाचिदपि घटपटयोस्तादात्म्यासम्भवात्॥ ४॥

इदानीं चतुर्थमभावमत्यन्ताभावाख्यमाह—

यच्चान्यदसदतस्तदसत्॥ ५॥

अतः पूर्वोक्तादभावत्रयात्, यदन्यदसत् तदसत् तदन्यन्तासत्त्वम्। असदित्युभयत्र भावप्रधानो निर्देशः। तत्रैकमसदुद्देश्यमपरमसद्विधेयम्, तथाचोक्ताभावत्रयभिन्नो योऽभावः सोऽत्यन्ताभाव इति पर्य्यवसन्नोऽर्थः। तत्र प्रागभावस्य उत्तरावधिकत्वम्, प्रध्वंसस्य पूर्वावधिकत्वम्, अन्योन्याभावस्य प्रतियोगिसमानाधिकरणत्वमत्यन्ताभावस्य तु त्रितयवैधर्म्यमतश्चतुर्थोऽयमभावः॥ ५॥

इदानीं प्रकरणान्तरमारभते, तत्र प्रध्वंसे तावत् प्रत्यक्षसामग्रीमाह—

असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधिप्रत्यक्षवत्॥ ६॥

असदितीतिकारेण प्रत्यक्षाकारं ज्ञानमाह, तेनासन् घटः—नष्टो घटः—ध्वस्त इदानीं घट—इति प्रत्यक्षप्रतीतिरस्ति। तत्र दृष्टान्तो—विरोधिप्रत्यक्षवदिति। विरोधिनो घटादेर्यथा स्पष्टं प्रत्यक्षं तथा तत्प्रध्वंसस्यापि। तत्र कारणमाह-भूतप्रत्यक्षाभावादिति। भूतस्य उत्पद्य विनष्टस्य घटादेः प्रत्यक्षाभावात्। एतेन (२)योग्यानुपलब्धिमाह। तत्र चायं तर्कः सहकारी—यद्यत्र घटोऽभविष्यत् भूतलमिवाद्रक्ष्यत न च दृश्यते तस्मान्नास्तीति। सहकार्य्यन्तरमाह—भूतस्मृतेरिति। भूतस्य प्रतियोगिनो घटादेः स्मृतेरिति प्रतियोगि(३)स्मरणमुक्तम्॥ ६॥

---

(१) प्रतियोगितावच्छेदकमिति। प्रतियोगितावच्छेदकसम्बन्ध इत्यर्थः।

(२) योग्यानुपलब्धिमिति। सा चाभावप्रत्यक्षे हेतुरित्यर्थः। योग्यत्वमनुपलब्धौ विशेषणम्। योग्यता च प्रतियोगिसत्त्वप्रसञ्जनप्रतियोगिकत्वरूपा ग्राह्या।

(३) स्मरणमिति। इदमपि कारणकथनम्। अभावप्रत्यक्षे प्रतियोगिज्ञानं कारणमित्यर्थः। स्मरणपदं सम्भवाभिप्रायकम्।

प्रागभावे प्रध्वंसप्रत्यक्षताकारमतिदिशन्नाह—

**तथाऽभावे भावप्रत्यक्षत्वाच्च ॥ ७ ॥**

सामान्यवाच्यप्ययमभावशब्दः प्रकरणात् प्रागभावपरः । यथा प्रध्वंसे प्रत्यक्षज्ञानं तथा प्रागभावेऽपि । कुतः? भावप्रत्यक्षत्वात् । भावस्य व्यूह्यमानवीरणादेः प्रत्यक्षत्वात् प्रत्यक्षेण विषयीक्रियमाणत्वात् ।

यद्वा भावस्याधिकरणस्य प्रतियोगिनश्च प्रत्यक्षत्वात् योग्यत्वादित्यर्थः । संसर्गाभावग्रहेऽधिकरणयोग्यतायाः प्रतियोगियोग्यतायाश्च तन्त्रत्वात् । चकारात् प्रतियोगिस्मरणमुक्तञ्च तर्कं समुच्चिनोति । अनादेरपि प्रागभावस्यानन्तस्यापि प्रध्वंसस्याविशेषमात्र प्रत्यक्षत्वम् ॥ ७ ॥

अन्योन्याभावस्य प्रत्यक्षतामाह—

**एतेनाघटोऽगौरधर्मश्च व्याख्यातः ॥ ८ ॥**

एतेनेति प्रतियोगिस्मरणाधिकरणग्रहणप्रागुक्ततर्कानतिदिशति । योग्यानुपलम्भः सर्वत्र समानः । चकार उक्तसमुच्चयार्थः । अधर्म इत्यतीन्द्रियस्यापि धर्मस्य सुखज्ञानादावधिकरणेऽन्योन्याभावस्य प्रत्यक्षतां वदन् अन्योन्याभावग्रहे प्रतियोगियोग्यता न तन्त्रं किन्त्वधिकरणयोग्यतामात्रं तन्त्रमित्युपदर्शयति । कथमन्यथा स्तम्भः पिशाचो न भवतीति पिशाचान्योन्याभावः स्तम्भे गृह्येत स्तम्भात्मतया पिशाचानुपलम्भस्य तदन्योन्याभावग्राहकत्वात्, तस्याप्यनुपलम्भस्य प्रतियोगिसत्त्वविरोधित्वात् स्तम्भे पिशाचतादात्म्ये सत्यनुपलम्भानुपपत्तेः । (१)ननु पिशाचतादात्म्यमिह न प्रतियोगि, किन्तर्हि ? पिशाचः, स च स्तम्भे वर्त्तमानोऽपि गुरुत्ववन्नोपलभ्यते इति तदनुपलम्भः प्रतियोगिसत्त्वविरोधी न भवतीति चेन्न प्रतियोग्यनुपलम्भवत् (२)प्रतियोगितावच्छेदकानुपलम्भस्याप्यभावग्रहकारणत्वात् । ननु प्रतियोगित्वग्रहाधीनोऽन्यो-

(१) पिशाचतादात्म्यानुपलम्भः प्रतियोग्यनुपलब्धिरूपः पिशाचानुपलब्धिस्तु न पिशाचसत्त्वं विरुणद्धि तथासति प्रतियोग्यविरोधिन्यपि अनुपलब्धिरभावं ग्राहयेदित्याशयेनाशङ्कते नन्विति ।

(२) उत्तरमाह प्रतियोगीति । प्रतियोगितावच्छेदकानुपलम्भस्य प्रतियोगितावच्छेदकसम्बन्धानुपलम्भस्येत्यर्थः ।

न्याभावग्रहः,प्रतियोगित्वञ्चा(१)न्योन्याभावविरहात्मत्वं तच्चान्योन्याभावग्रहाधीन एवान्योन्याभावग्रह इति चेन्नाधिकरणावृत्तित्वेन ज्ञायमानो धर्म एव प्रतियोगितावच्छेदको न तु प्रतियोगितावच्छेदकत्वेनापि तद्ग्रहस्तन्त्रमित्युक्तत्वात् ॥ ८ ॥

अथेदानीमत्यन्ताभावप्रत्यक्षतामाह--

अभूतं नास्तीत्यनर्थान्तरम् ॥ ९ ॥

भूतमिदानीं नास्तीतिप्रतीतिर्ध्वंसमालम्बते भूतत्वं नोल्लिखति किन्त्विदं नास्तीतिमात्रोल्लेखिनी प्रत्यक्षप्रतीतिरत्यन्ताभावमालम्बते अभूतमित्युत्पादविनाशालम्बनत्वं द्योतयति, अनर्थान्तरत्वमपि (२)तदाभप्रायकमेव यथा जले पृथिवीत्वं नास्ति पृथिव्यां न जलत्वमिति। यदि हि जलावयविनि पृथिवीत्वं स्यात् उपलभ्येत न चोपलभ्यते तस्मान्नास्तीति-तर्कपुरस्कारोऽत्रापि द्रष्टव्यः। एवञ्च यद्वस्तु यत्र न कदाऽपि भविष्यति न च कदाचिद्भूतं तस्य वस्तुनस्तत्रात्यन्ताभावो मन्तव्यः। भूतभविष्यतोश्च तत्र प्रध्वंसप्रागभावालम्बन एव तत्राधिकरणे नास्तीतिप्रत्ययः। अतएवायमात्यन्तिकस्त्रैकालिक इत्यभिधीयते ॥ ९ ॥

ननु गेहे घटाभावो नात्यन्ताभावः कदाचित्तत्र घटसत्त्वात्, नापि प्रागभावप्रध्वंसौ तयोः समवायिकारणमात्रवृत्तित्वात्, नाप्युत्पादविनाशशीलोऽत्यन्ताभाव एव आत्यन्तिकश्चोत्पादविनाशशीलश्चेति विरोधात्, नापि चतुर्थ एवायं संसर्गाभावः तस्य त्रैविध्यविभागव्याघातादित्यत आह—

(१) अन्योन्याभावविरहात्मत्वमिति। अभावविरहात्मत्वं वस्तुनः प्रतियोगितेत्युक्तेः।

(२) तदभिप्रायकमेवेति। उत्पादविनाशाश्रयातिरिक्ताभावान्तराविषयकत्वमेवेत्यर्थः। अत्र 'भूतमिदानीं नास्ती'ति' प्रतीतिर्ध्वंसमवलम्बते। अभूतमिति अभविष्यत उपलक्षकम् तथाच यदत्र न भूतं नापि भविष्यत् तदत्र नास्तीति प्रत्यक्षप्रतीतिर्भवति तत्प्रत्यक्षमनर्थान्तरम्। अनर्थान्तरमित्यस्य नास्ति विषयतयाऽर्थान्तरमत्यन्ताभावभिन्नं यस्येत्यर्थः। यथाऽवयविन्यां पृथिव्यां जलत्वं नास्तीत्यादिप्रत्यक्षं न ध्वंसप्रागभावविषयत्वेनोपपद्यतेऽतोऽत्यन्ताभाव एव तस्य विषयो तत्प्रत्यक्ष एवेन्द्रियसंयुक्तविशेषणतासंनिकर्षतर्कसहकृतः प्रतियोग्युपलम्भाभावः प्रतियोगिज्ञानं च कारणमिति अस्मद्गुरुचरणाः।

**नास्ति घटो गेहे इति(१) सतो घटस्य गेहसंसर्ग-प्रतिषेधः ॥ १० ॥**

गेहे घटस्य यः संसर्गः संयोगस्तस्य प्रतिषेधः, स च यदि कदाचिदपि न घटस्तदात्यन्ताभाव एव, (२)भविष्यतः प्रागभावो भूतस्य प्रध्वंसाभावः। तर्हि घटसंसर्गो गेहे नास्तीति—प्रतीत्या भवितव्यमिति चेत् प्रतीत्या भवितव्यमिति कोऽर्थः ? यदि (३)तद्विषयया प्रतीत्या भवितव्यमित्यापादनार्थस्तदेष्टापत्तिः। अथ तदुल्लेखिन्येति, (४)तदा गेहे इत्यधिकरणोल्लेखस्यैव संसर्गोल्लेखपर्य्यवसानमाधारत्वस्यैव धर्मसम्बन्धाकारत्वात्। तत् (५)किं घटस्तत्रास्त्येव। (६)अस्त्येवेति कोऽर्थस्तत्र समवेतः संयुक्तो वा ? नाद्यः समवेतघटस्य तत्राभावात्। न द्वितीयः संयोगस्य निषेधात्। नन्वेवं घटादीनां केवलान्वयित्वप्रसङ्गः, तत्संयोगसमवायान्तरस्यैव सर्वत्र निषेधादिति चेन्न तदुभयनिषेधस्यैव (७)घटनिषेधात्मकत्वात्। (८)तत् किं घटस्तत्संयोगश्चेत्येकं तत्त्वं, येन घटसंयोगनिषेधो घटनिषेधः स्यात्, (९)तत किं घटस्तत्संयोगसमवायावेकं तत्त्वं, येन तद्विधरेव घटविधिः स्यात्, न हि तौ यत्र निषेध्येते तत्र घटान्वयो येन केवलान्वयित्वं तस्य स्यात्, तथाच यस्य यो विधिस्तन्निषेध एव त-

---

(१) सत इति। असत्ख्यात्यभ्युपगममते गगनपुष्पाभाववदत्यन्तासतोऽभाव एवात्यन्ताभाव इति भ्रमो माभूदतः सत इति सूत्रे घटस्य विशेषणम्।

(२) भविष्यत इति। संयोगस्येति शेषः।

(३) तद्विषययेति। प्रत्यक्षरूपयेत्यर्थः। तदुल्लेखिन्येति। शाब्दरूपयेत्यर्थः।

(४) प्रथमे इष्टापत्तिमुक्त्वाऽन्यत्र दोषमाह तदेति। तथा च गेहे घटो नास्तीत्यत्र अधिकरणार्थया सप्तम्या संसर्गरूपयैव गृहवृत्तिघटसंयोगाभावः प्रतीयते गेहे घटसंसर्गो नास्तीति प्रतीत्या तु घटसंसर्गनिष्ठसंसर्गाभाव इति न कश्चिद्दोष इति भावः।

(५) उक्तप्रतीतेः संसर्गनिषेधपरत्वे शङ्कते किन्तत्रेति।

(६) विकल्प्य समाधत्ते अस्त्येवेतीति।

(७) घटनिषेधात्मकत्वादिति। समनियताभावैक्यादिति भावः।

(८) शङ्कते तदिति।

(९) प्रतिबन्द्युत्तरमाह तत्किमिति-घटविधिः स्यादित्यन्तम्। ननु सम्बन्धसत्तानियतसत्ताकत्वं सम्बन्धिन इति नियमेन घटतत्सम्बन्धयोरेकतत्त्वताविरहेपि न क्षतिरिति चेत्प्रकृतेपि समानमित्यभिप्रायः।

न्निषेध इति। (१)यद्वा घटस्य समवायितया गेहेऽत्यन्ताभाव एव, स एव गेहे घटो नास्तीति प्रतीतिविषयः, कपाले संयोगितयेव। (२)एवं सति केवलान्वय्यत्यन्ताभावप्रतियोगितया घटोऽसन् स्यादिति चेत् (३)भवेदेवं यदि संयोगित्वसमवायित्वाभ्यां सर्वत्रासन् स्यादिति भावः॥ १०॥

तदेवं भावाभावविषयकं लौकिकप्रत्यक्षं निरूप्य योगिप्रत्यक्षं निरूपयितुं प्रकरणान्तरमारभते—

**आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम्॥ ११॥**

ज्ञानमुत्पद्यते इति शेषः। द्विविधास्तावद्योगिनः समाहितान्तःकरणा ये युक्ता इत्यभिधीयन्ते, असमाहितान्तःकरणाश्च ये वियुक्ता इत्यभिधीयन्ते। तत्र युक्ताः—साक्षात्कर्त्तव्ये वस्तुन्यादरेण मनो निधाय निदिध्यासनवन्तः, तेषामात्मनि स्वात्मनि परमात्मनि च ज्ञानमुत्पद्यते। आत्मप्रत्यक्षमिति। आत्मा प्रत्यक्षः साक्षात्कारविषयो यत्र ज्ञाने तत्तथा। यद्यप्यस्मदादीनामपि कदाचिदात्मज्ञानमस्ति तथाप्यविद्यातिरस्कृतत्वात् तदसत्कल्पमित्युक्तमात्ममनसोः सन्निकर्षविशेषादिति। योगजधर्मानुग्रह आत्ममनसोः सन्निकर्षे विशेषस्तस्मादित्यर्थः॥ ११॥

तत् किमात्मन्येव युक्तानां ज्ञानं तत् कुतः सार्वज्ञ्यमित्यत आह—

**तथा द्रव्यान्तरेषु प्रत्यक्षम्॥ १२॥**

ज्ञानमुत्पद्यत इति प्रकरणायातम्। तथेति योगजधर्मानुगृहीतेनैव मनसा, द्रव्यान्तरेषु चतुर्ष्वणुषु मनसि वायुदिक्कालाकाशेषु, द्रव्यपदेन तद्गतगुणकर्मसामान्यानां विशेषपदार्थस्य समवायस्य प्रत्यक्षगतस्यापि गुरुत्वस्थितिस्थापकादेरात्मगतस्यापि जीवनयोनियत्नानिर्वि-

---

(१) असत्ख्यात्यनभ्युपगमे गेहवृत्तिघटसंयोगाभावः प्रतियोगिनः सिद्ध्यसिद्धिभ्यां व्याहत इत्यतः कल्पान्तरमाह यद्वेति। घटस्येति। तथाच सूत्रे गेहसंसर्गप्रतिषेध इत्यस्य संसर्गेण समवायेन प्रतिषेधः गेहे संसर्गप्रतिषेधः गेहसंसर्गप्रतिषेध इति समासोऽभिप्रेत इत्यर्थः।

(२) सत्पदस्य व्यर्थतामाविष्कर्तुं शङ्कते एवमिति। असन् अवृत्तिः गगनवदिति भावः।

(३) उत्तरयति भवेदेवमिति। एवं=केवलान्वय्यत्यन्ताभावप्रतियोगिहेतुकासत्त्वम्। केवलान्वय्यत्यन्ताभावप्रतियोगित्वमसत्त्वव्यभिचारीति भावः। एकेन सम्बन्धेन वृत्तिमत्यपि गुणादौ संयोगादिरूपसम्बन्धान्तरावच्छिन्नप्रतियोगिताककेवलान्वय्यत्यन्ताभावप्रतियोगित्वादित्याशयः।

कल्पकभावनाधर्माधर्मादेः सङ्ग्रहः सामग्र्या योगजधर्मोपग्रहस्य तुल्यत्वात् अन्यथा सार्वज्ञ्यमुक्तं न भवेत् ॥ १२ ॥

युक्तानां प्रत्यक्षं ज्ञानमभिधायेदानीं वियुक्तानामाह—

**असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषाञ्च ॥ १३ ॥**

असमाहितान्तःकरणा इत्यस्यैव व्याख्यानमुपसंहृतसमाधय इति । यद्वा कथमसमाहितान्तःकरणा इत्यत आह-उपसंहृतसमाधय इति । उपसंहृतो दूरीकृतः समाधिर्निदिध्यासनात्मको यैस्ते तथा । ते हि समाधिप्रभावाद्विकरण(१)धर्माः अणिमाद्याः शरीरसिद्धीर्दूरश्रवणाद्याश्चेन्द्रियसिद्धीराप्तवन्तः समाधावप्यलंप्रत्ययमासादयन्तः "तावदेवास्य चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य" इत्यादि श्रुतिसमधिगतकृत्यान्तराभावाः भोगमात्रस्य कर्त्तव्यतामाकलय्य तेषु तेषु प्रदेशेषु द्वीपोपद्वीपादिषु तेन तेन जन्मना तुरङ्गमातङ्गविहङ्गभुजङ्गादिना (यावदेव-चिरं यावत्) देवर्षिमानुषभावेन च पूर्वोपात्तान् कर्माशयानुपभुञ्ज्महे तावत् प्राप्तैव निरपाया भूमिरित्याकलयन्तः सकलमर्थजातं योगजधर्मबलोपबृंहितेन्द्रियशक्तयो व्यवहितं विप्रकृष्टञ्च प्रत्यक्षीकुर्वन्ति ॥ १३ ॥

ननु न तावत्तेषु मानसं ज्ञानं मनसो बहिरस्वातन्त्र्यात्, नापि बहिरिन्द्रियजन्यम् तेषां सम्बद्धवर्त्तमानार्थग्राहित्वात् यथायोगं रूपोद्भवादिसापेक्षत्वात् आलोकादिसव्यपेक्षत्वाच्चेत्याशङ्क्य केषुचित् पदार्थेषु प्रत्यासत्तिमुपपादयन्नाह—

**तत्समवायात् कर्मगुणेषु ॥ १४ ॥**

प्रत्यक्षज्ञानं जायते इति शेषः । भौतिकानीन्द्रियाणि यदि सन्निकर्षमपेक्षन्ते तदा परमाण्वाकाशदिक्कालसमवेतेषु स्वमनःसंयोगिसमवायात् इतरद्रव्येषु च कायव्यूहोपभोगार्थोपगृहीतनानापण्डमनःसंयोगात् तत्संयुक्तसमवायात् तत्तद्द्रव्यगुणादिषु ज्ञानमुत्पद्यते । एतच्चोपपत्तिसौकर्यमनुरुध्योक्तम् ।

वस्तुतो बाह्येन्द्रियेषु मनसि च योगज एव धर्मः प्रत्यासत्तिस्तत एव सर्वानुपपत्तिशान्तेः, अगस्त्यसमुद्रपानं दण्डकारण्यनिर्माणञ्चेति दृष्टान्तः ॥ १४ ॥

(१) विकरणधर्मा इति । इन्द्रियव्यापाररहिता इत्यर्थः ।

तत् किं स्वकीयबुद्ध्यादिष्वपि मनसो द्रव्यान्तरसंयुक्तसमवाय एव प्रत्यासत्तिः, नेत्याह—

आत्मसमवायादात्मगुणेषु ॥ १५ ॥

योगिनां प्रत्यक्षं ज्ञानमुत्पद्यते इति प्रकृतम्। आत्मसमवेतानान्तु बुद्ध्यादीनां संयुक्तसमवायादेव प्रत्यक्षं ज्ञानमुत्पद्यतेऽस्मदादीनामिवेति न तत्र सन्निकर्षान्तरापेक्षेत्यर्थः। तत्रेन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारिज्ञानं लौकिकालौकिकप्रत्यक्षम्, अर्थजं वा। साक्षात्त्वयोगिज्ञानं प्रत्यक्षमिति लौकिकालौकिकसाधारणम्॥ १५ ॥

इतिश्रीशाङ्करे वैशेषिकसूत्रोपस्कारे नवमाध्यायस्य प्रथमाह्निकम्।

# नवमाध्याये द्वितीयाह्निकम् ।

तदेवं पूर्वाह्निके योगिप्रत्यक्षमयोगिप्रत्यक्षञ्च कारणतः स्वरूपतो लक्षणतश्च निरूपितम् । प्रमाणं द्विविधं प्रत्यक्षं लैङ्गिकञ्चेति यद्विभक्तं तत्र लैङ्गिकमिदानीं निरूपयितुमुपक्रमते—

**अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥ १ ॥**

ज्ञानमिति प्रकृतम् । लिङ्गाज्जातं लैङ्गिकं व्याप्तिविशिष्टः पक्षधर्मो लिङ्गम् । तत्र व्याप्तिरुक्ता(१), (२)यत्सिषाधयिषाविरोधिप्रमाणाभावो यत्र स तं प्रति पक्षः । तादृशं प्रमाणं साधकं बाधकञ्च, तदुभयाभाववतः पक्षत्वात् । (३)न हि साधके बाधके वा प्रमाणे सति कस्यचित् संशयः सिषाधयिषा वा । अत एव (४)सन्दिग्धसाध्यधर्मा धर्मी सिषाधयिषितसाध्यधर्मा धर्मी वा पक्ष इति प्राञ्चः ।

(५)उत्पाद्यसाध्यवत्तानिर्णयनिवर्त्यसंशयोत्पत्तिप्रतिबन्धकमान-

---

(१) उक्तेति । प्रसिद्धिपूर्वकत्वादपदेशस्येति सूत्रे इत्यर्थः ।

(२) सिषाधयिषेति । प्रकृतपक्षविशेष्यकसाध्यप्रकारकनिश्चयेच्छानुत्पादप्रयोजकेति विरोध्यन्तार्थः । प्रमाणेति । प्रात्यक्षिकनिश्चयाव्यवहितप्राक्क्षणवृत्तितत्समानाधिकरणज्ञानेत्यर्थः । तथा च यत्पुरुषीययत्पक्षसाध्यकनिश्चयेच्छानुत्पादप्रयोजकं . तत्पुरुषीयप्रत्यक्षाव्यवहितप्राक्क्षणवृत्तित्वे सति तत्समानाधिकरणं यज्ज्ञानं तस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभाववान् यः स तत्पुरुषीयानुमितौ पक्ष इति भावः । परम्परया निश्चयनिष्ठा या प्रतियोगितावच्छेदकता तन्निरूपकविशेष्यत्वसम्बन्धावच्छिन्नावच्छेदकत्वसम्बन्धेन तदभाववत्त्वमत्र बोध्यम् ।

(३) नहीति । सिषाधयिषायां प्रकृतपक्षविशेष्यकसाध्यनिश्चयरूपासिद्धिज्ञानस्य प्रतिबन्धकत्वम् , साधकप्रमाणं हि सिद्धिमुत्पादयत् सिषाधयिषायाः सिद्ध्यभावरूपकरणविघटनद्वाराऽनुत्पादप्रयोजकम्, एवं बाधकमपि प्रमाणं सिद्धिधर्मिकेष्टसाधनताज्ञानात्मकं सिषाधयिषायाः कारणान्तरं बाधनिश्चयद्वारा प्रतिबध्नदनुत्पादप्रयोजकं भवतीति । बाधनिश्चयस्य सिद्धाविव तद्विषयकेष्टसाधनताज्ञानेपि प्रतिबन्धकत्वस्य प्राचीनैः स्वीकारात् तद्विषयविषयकस्य तद्विषयकत्वनियमेनोक्तेष्टसाधनताज्ञानस्यापि पक्षसाध्यविषयकत्वात् एवञ्चोक्तसाधकबाधकसत्त्वे न पक्षतेति गूढाभिप्रायः ।

(४) सन्दिग्धेति । तथाचैतन्मते साध्यनिश्चयनिवर्त्यसंशयरूपा पक्षता तस्याश्च विशेष्यतासम्बन्धेन पर्वतादिवृत्तित्वम् । सिषाधयिषितेति । इदं प्रशस्तपादाचार्यमतम् अस्मिन्मते सिषाधयिषारूपपक्षतायाः विषयतासम्बन्धेन पक्षनिष्ठत्वमिति भावः ।

(५) उत्पाद्येति । प्रकृतपक्षकप्रकृतसाध्यकाप्रामाण्यज्ञानानास्कन्दितानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिसंशयोत्पत्तिप्रतिबन्धकप्रमाणाभाव इत्यर्थः । व्यापककोटावनाहा-

त्वावच्छिन्नाभावो यत्र स पक्ष इति जीवनाथमिश्राः। (१)सिषाधयिषाविरहसहकृतसाधकमानाभावो यत्र स पक्ष इति केचित्। (२)एतन्मते तु बाधस्थलेऽपि पक्षता। तदेतदनुमानमयूखे द्रष्टव्यम्। तदेतस्य (३)पक्षस्य धर्मो लिङ्गमित्युक्तं भवति। लिङ्गञ्च दृष्टमनुमितं श्रुतं वा यदनुभवरूपं ज्ञानं जनयति तल्लैङ्गिकम्। (४)तदुक्तम्—

अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते।
तदभावे तु नास्त्येव तल्लिङ्गमनुमापकम्॥ इति।

एतेन लिङ्गमेवानुमितिकरणं न तु तस्य परामर्शः तस्य निर्व्यापारत्वेनाकरणत्वात्, लिङ्गस्य तु स एव व्यापारः। यत्र धूमादेरतीतत्वमनागतत्वं वा तत्र कथमनुमितिरिति चेन्न साध्यस्याप्यतीतानागतत्वयोस्तत्रानुमानात्, (५)तत्रैव प्रतिबन्धात्। अतीतत्वमनागतत्वं वर्त्तमानत्वञ्च धूमादेर्यत्र न निश्चितं तत्र कथमनुमितिरिति चेत्, न कथ(६)ञ्चित् तत्र साध्यस्यापि सन्देहात्। पू-

---

र्यत्वप्रवेशनिबन्धनगौरवव्युदासायोत्पाद्येति निर्णयविशेषणमनुमितिलाभाय। पर्वतो वह्निमान् घटो रूपवान्नवेतिसमूहालम्बनसंशयव्युदासाय निवर्त्यान्तं संशयविशेषणम्। एवं च तादृशसंशयप्रतिबन्धकपरं यन्मानं मितिः सिद्धिबाधनिश्चययोरन्यतरत् तत्सामान्याभावो यत्र स पक्षस्तथा च न सिद्धिबाधनिश्चयोत्तरकाले पक्षतेति भावः।

(१) चिन्तामणिकारमतमाह सिषाधयिषेति। तथा च सिषाधयिषाविरहविशिष्टसिद्ध्यभाव एवैतन्मते पक्षता सा च स्वप्रतियोगिविशेष्यत्वसम्बन्धेन पर्वतादिवृत्तिः, अनुमितिहेतुता तु तस्याः आत्मनिष्ठप्रत्यासत्त्येति ध्येयम्।

(२) दूषयति एतन्मते इति। तदनुयायिनस्तु अनुमितिहेतुभूतपक्षताया निर्वचनपरो मणिकारग्रन्थः नतु पक्षपदशक्यतावच्छेदकपरो येन बाधनिश्चयविशेषस्य पक्षपदव्यवहारापत्तिरिति, पक्षपदशक्यतावच्छेदकन्त्वनुमित्युद्देश्यत्वमिति वदन्ति।

(३) पक्षस्य धर्म इति। व्याप्तिविशिष्ट इति शेषः। ज्ञायमानलिङ्गजन्यानुभवो लैङ्गिकमनुमितिश्चेत्याख्यायते। सन्निकर्षस्य ज्ञायमानत्वेपि क्वचित् लिङ्गत्वेपि वा न तेन रूपेण तस्य प्रत्यक्षं प्रति कारणतेति नातिव्याप्तिः। स्मरणविशेषे उद्बोधकादिशा ज्ञायमानलिङ्गस्य कारणत्वात्तत्रातिव्याप्तिवारणायानुभवपदम्।

(४) लिङ्गज्ञानस्यानुमितिकारणत्वे प्राचां संवादं दर्शयति तदुक्तमिति। सम्बद्धान्तेन पक्षवृत्तित्वं तदन्विते इत्यन्तेन सपक्षसत्वं नास्त्येवेत्यनेन विपक्षावृत्तित्वं चेति त्रयं लिङ्गस्यानुमापकत्वे हेतुरित्यर्थः।

(५) तत्रैवेति। यत्र धूमोऽतीतो ध्वस्तस्तत्र वह्निवर्तमानत्वं नानुमीयते किन्तु अतीत एव वह्निस्तथाचातीतहेतुस्थले तत्रैवातीनसाध्य एव प्रतिबन्धात् व्याप्तेरिति अक्षरार्थः।

(६) न कथञ्चिदिति। ध्वंसादिरूपव्याप्यसन्देहात्साध्यसन्देह एव नानुमितिरित्यर्थः।

र्वापरदिनयोः सत्त्वनिश्चये मध्यान्दिने तु सन्देहे कथमनुमितिरिति चेत् (१)तद्दिनावच्छिन्नधूमादिना तद्दिनावच्छिन्नवह्न्यादेरनुमानात्, तथैव व्याप्तेः कारणत्वावधारणात् । धूलीपटलात् कथं धूमभ्रमादनुमितिरिति चेत् (२)व्याप्तत्वेन ज्ञातस्यैव लिङ्गत्वात् ज्ञानस्य च याथार्थ्यायाथार्थ्याभ्यामनुमितेस्ताद्रूप्यात्, अन्यथा तवापि कथं तत्र परामर्शः करणं स्यात् । अतीन्द्रियलिङ्गस्थले परामर्शस्य तदजन्यतया कथं तद्व्यापारत्वमिति चेत् (३)तत्सत्तानिर्वाहकत्वरूपक्षैमिकसाधनतायास्तत्र व्यापारत्वघटकत्वात् अन्यथा समवायस्य श्रवणादेर्व्यापारत्वानुपपत्तेरिति । कार्य्याल्लिङ्गात् धूमालोकादेरग्न्याद्यनुमानम् । कारणादपि यथा बधिरस्य भेरीदण्डसंयोगविशेषात् शब्दानुमानम्, यथा वा धार्मिकस्य यथाविधियागस्नानाद्यनुष्ठानाद्धर्मस्वर्गाद्यनुमानम्, यथाविधि कारीर्य्याद्यनुष्ठानाद्वा वर्षानुमानम्, पयःपूर्णनद्यादौ खन्यमानप्रवाहाद्वा जलनिःसरणानुमानम्, उपरिवृष्टिदर्शनाद्वा नदीवृद्ध्यनुमानम् । स चायं कार्य्यकारणभावलक्षण एकसम्बन्धः (४)प्रकारद्वयेनोक्तः । संयोगिनः शरीरस्य दर्शनात्त्वगिन्द्रियानुमानम् । विरोधिनो विस्फूर्जतोऽहेर्दर्शनाज्झाटाद्यन्तरितनकुलानुमानम् । समवायिना जलौष्ण्येन तत्सम्बद्धतेजोऽनुमानम् ॥ १ ॥

नन्वव्यापकमिदं परिसङ्ख्यानम् । न हि चन्द्रोदयेन समुद्रजलवृद्धेः–जलप्रसादेनागस्त्योदयस्य–कुमुदप्रकाशेन चन्द्रोदयस्य–चतुर्दशनक्षत्रोदयेनापरचतुर्दशनक्षत्रास्तमयस्य–रसेन रूपस्य–रूप-

---

(१) तद्दिनेति । तथाच यत्र तद्दिनावच्छिन्नो धूमस्तत्र तत्पूर्वमुत्तरं वा वह्निरिति तत्स्थलीयकालविशेषघटितव्याप्तिग्रहादेवातीतवह्न्याद्यनुमानमिति न कापि क्षतिः ।

(२) व्याप्तत्वेनेति । तथा च न ब्रूमो धूमः-करणमिति, अपि तु व्याप्यत्वेन परामृश्यमानमेव करणमिति उक्तस्थले धूलीपटलमेव ताद्रूप्येण परामृश्यमाणमिति न दोषः ।

(३) तत्सत्तेति । सत्ता सम्बन्धः । विषयिणो ज्ञानस्य विषयाधीनस्वरूपतया विषय्यधीनसम्बन्धस्यापि विषयाधीनत्वादिति भावः । एवं चाचार्यमते न कोपि दोषः । चिन्तामणिकारास्त्वेवमपि लिङ्गस्य करणत्वे भैत्रपरामृश्यमाणाल्लिङ्गाच्चैत्रस्यानुमित्यापत्तिर्दुर्वारैव । तत्पुरुषीयत्वनिवेशे च लिङ्गज्ञानकारणत्वापेक्षया महागौरवमिति प्राहुः ।

(४) प्रकारद्वयेनेति । कार्यत्वेन कारणत्वेन चेत्यर्थः । एतेन सम्बन्धचातुर्विध्यं वैशेषिकोक्तं न व्याहतमिति प्रदर्शितम् ।

विशेषेण वा रसविशेषस्यानुमानमनेन (१)संगृह्यते इत्यत आह--

अस्येदं कार्य्यकारणसम्बन्धश्चावयवाद्भवति ॥ २ ॥

अस्येदमित्येतावदेव प्रयोजकं भवतीति, अस्य साधनस्य धूमादेरिदं साध्यं वह्न्यादि । यद्वाऽस्य वह्न्यादेरिदं व्याप्यं धूमादि । तथाच व्याप्यत्वग्रहमात्रं तन्त्रं न तु कार्य्यकारणभावादिरपि । ननु पूर्वसूत्रे तर्हि परिसङ्ख्यानमतन्त्रमत आह—कार्य्यकारणसम्बन्ध इति । अनेन चोक्तं सम्बन्धान्तरमप्युपलक्षयति । सम्बन्धपदे च विषयिलक्षणा, तेन सम्बन्ध इति सम्बन्धोपन्यास इत्यर्थः । कुतस्तदुपन्यास इत्यत आह-अवयवात् एकदेशात् उदाहरणमात्रात् ल्यब्लोपे पञ्चमी । तेनोदाहरणमनुरुध्य कार्य्यकारणभावादेः सम्बन्धस्योपन्यास इह दर्शने (२)साङ्ख्यादिदर्शने च भवतीत्यर्थः ।

एवञ्च स्वाभाविकसम्बन्धशालित्वं व्याप्यत्वम् । स्वाभाविकत्वञ्चानौपाधिकत्वम् । तच्च (३)प्रत्यक्षाणां केषाञ्चित् साध्याव्यापकत्वनिश्चयात्, केषाञ्चित् साधनव्यापकत्वनिश्चयादेवानुपाधित्वं ज्ञेयम् । अतीन्द्रियाणाञ्च प्रमाणसिद्धानां केषाञ्चिदुभयव्यापकत्वम् उभयाव्यापकत्वं साधनमात्रव्यापकत्वं साध्यमात्राव्यापकत्वं वा । तत्राद्ये साधनव्यापकत्वात् द्वितीये साध्याव्यापकत्वात् चतुर्थेऽपि साधनव्यापकत्वादेवानुपाधित्वं निश्चेयम् । तृतीयेऽपि व्यापकस्य तन्मात्रव्यापकत्वानुपपत्तिरितरस्य तु कथं तन्मात्रव्यापकत्वमित्यत्र तर्कोऽनुसन्धेय इति तुल्ययोगक्षेमत्वादिनाऽनुपाधित्वमध्यवसेयम् । भविष्यति कश्चिदत्रोपाधिरिति-शङ्कापिशाची सकलविधिनिषेध-

---

(१) संगृह्यत इति । तथा चोक्तचतुर्विधसम्बन्धेषूक्तस्थले कस्याप्यभावात्कथमनुमानमिति भावः ।

(२) साख्यादिदर्शन इति । एवं च वैशेषिकदर्शने उक्तसम्बन्धचातुर्विध्यम् । सांख्यमते च—"मात्रानिमित्तसंयोगिविरोधिसहचारिभिः । स्वस्वामिवध्यघातार्द्यैः साख्यानां सप्तधाऽनुमा ॥" इत्युक्तसम्बन्धसाप्तविध्यं चोदाहरणमात्रं नतु परिगणनामिति भावः ।

(३) प्रत्यक्षाणां केषाञ्चिदिति । पर्वतो वह्निमान् धूमादित्यादौ अयःपिण्डादीनामित्यर्थः । साधनव्यापकत्वनिश्चयादिति । रूपवान् रसादित्यादौ स्नेहादीनां साध्यव्यापकत्वेऽपि साधनाव्यापकत्वाभावादनौपाधिकत्वमित्यर्थः । अतीन्द्रियाणामिति । उक्तस्थलेषु प्रमाणसिद्धानां गुरुत्वादीनामुपाधीनामपि चतुर्ष्वपि कल्पेषु अनौपाधिकत्वमेव, किन्तु साधनमात्रव्यापकत्वरूपतृतीयपक्षे यद्ययमितरव्यापकः स्यात्कथं साधनमात्रव्यापकः स्यात् व्याप्यस्तु कथं तन्मात्रस्य व्यापक इति तर्कसहकारेण योगक्षेमयोरुभयत्र समानतयाऽनुपाधित्वमिति भावः ।

ऽयवहारानास्कन्दतीत्यनादेयेत्यनौपाधिकत्वनिश्चयसम्भवात् । उपाधिलक्षणं व्याप्तिलक्षणञ्चोक्तम् ।

तच्चानुमानं द्विविधं—स्वार्थं परार्थञ्च । तत्र स्वार्थं स्वयमेव व्याप्तिपक्षधर्मतयोरनुसन्धानात् । परार्थञ्च परोदीरितन्यायजन्यव्याप्तिपक्षधर्मताज्ञानात् । न्यायश्च (१)तृतीयलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यम् । तदवयवाश्च पञ्च । तत्रावयवत्वं(२) तृतीयलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकवाक्यत्वम् । तानि च वाक्यानि प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि ।

तत्र प्रतिज्ञा- (३)उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं न्यायावयववाक्यम् । (४)हेतुश्च प्रकृतसाधनगतप-

---

(१) तृतीयलिङ्गपरामर्शेति । प्रथमं हेतुस्वरूपलिङ्गदर्शनं, तस्य लिङ्गनिश्चयरूपत्वेन लिङ्गपरामर्शत्वेऽपि न विवक्षा किन्तु ततो व्याप्तिस्मरणं ततश्च यो लिङ्गपरामर्शस्तृतीयक्षणे स एव तृतीयलिङ्गपरामर्श इत्युच्यते स च व्याप्तिपक्षधर्मताविशिष्टहेतुनिश्चयरूपो ग्राह्यः तज्जनकशाब्दबोधजनकवाक्यत्वं न्यायत्वमित्यर्थः । अत्र वाक्यपदं तादृशशाब्दज्ञाननिष्ठकार्यतानिरूपितकारणताया विषयविधया अवच्छेदकत्वपर्याप्त्यधिकरणतालाभायाऽन्यथा न्यायैकदेशेऽतिव्याप्तिः स्यात् । उपनयादिजन्यशाब्दज्ञानस्यान्यदीयपरामर्शं प्रति न शाब्दत्वेन कारणता किन्तु विशेषणज्ञानत्वादिना, तादृशपरामर्शे तु न्यायजन्यशाब्दत्वेनैव हेतुताऽन्वयव्यतिरेकानुविधानादिति भावः । यथाश्रुते उपनयवाक्यादावतिव्याप्तिस्तद्वारणाय प्रयोजकान्तम् प्रतिज्ञाद्यखिलावयवार्थबोधपरिचायकमात्रम् नतु लक्षणनिविष्टम् । एवं च तादृशयत्किञ्चिच्छाब्दबोधनिरूपिता शब्दज्ञाननिष्ठा या यां कारणता तत्तदवच्छेदककोटिप्रविष्टयत्किञ्चिज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वं न्यायत्वमिति नव्याः ।

(२) अवयवत्वमिति । जनकान्तं शाब्दज्ञानविशेषणम् । द्वितीयशाब्दज्ञानजनकपदानुपादाने न्यायेऽतिव्याप्तिः । न्यायजन्यशाब्दबोधं प्रत्यवान्तरवाक्यार्थज्ञानस्य हेतुत्वेन तज्ज्ञानस्य च प्रतिज्ञादिरूपन्यायावान्तरवाक्यजन्यतया च प्रतिज्ञादिषु प्रत्येकं लक्षणसमन्वयः । न्यायजन्यशाब्दबोधे प्रतिज्ञाद्येकैकावयवजन्यशाब्दबोधस्य शाब्दत्वेन जनकता तथाऽन्वयव्यतिरेकानुविधानात्, प्रतिज्ञाद्येकदेशार्थज्ञानस्य तु अवयवार्थज्ञानजननक्रमेण प्रयोजकत्वं नतु साक्षाज्जनकतेति तद्व्युदासः । अत्रापि वाक्यपदं पूर्ववत् एकैकावयवजन्यशाब्दज्ञाननिष्ठकार्यतानिरूपितकारणतावच्छेदकतापर्याप्त्यधिकरणतालाभाय बोध्यम् । नव्यास्तु तत्तच्छाब्दबुद्धित्वावच्छिन्नजन्यतान्यतमनिरूपितजनकतावच्छेदकीभूतयत्किञ्चिज्ज्ञानीयविषयितानिरूपकवर्णसमुदायत्वमवयवत्वमित्याहुः । अधिकन्त्ववयवग्रन्थे द्रष्टव्यम् ।

(३) उद्देश्येति । प्रकृतपक्षकप्रकृतसाध्यकानुमित्यन्यूनेत्यर्थः । पर्वतो वह्निमानिति प्रतिज्ञावाक्यजन्यबोधस्य प्रकृतपक्षसाध्यकानुमितिसमानाकारकत्वमिति लक्षणसंगतिः । हेतुघटितपक्षसाध्यकानुमित्यनतिरिक्तविषयकबोधजनके हेत्ववयवेऽतिव्याप्तिनिरासायान्यूनेति । निगमने तद्वारणायानतिरिक्तेति । उदासीनेऽतिव्याप्तिवारणाय न्यायावयवेति विशेष्यदलम् ।

(४) हेतुरिति । प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकस्वार्थविशेष्यबोधजनकपञ्चमीव-

श्चस्यन्तो न्यायावयवः । उदाहरणन्तु (१)प्रकृतसाध्यसाधनाविनाभावप्रतिपादको न्यायावयवः । उपनयश्चाविनाभाव(२)विशिष्टस्य हेतोः पक्षवैशिष्ट्यप्रतिपादको न्यायावयवः । (३)निगमनन्तु पक्षे प्रकृतसाध्यवैशिष्ट्यप्रतिपादको न्यायावयवः । एवञ्च प्रवर्त्तते न्यायः-शब्दोऽनित्यः कृतकत्वात्, यद् यत् कृतकं तदनित्यम्, अनित्यत्वव्याप्यकृतकत्ववांश्चायम्, तस्मादनित्यः ।

एतेषामेव प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नाया इत्यन्वर्था वैशेषिकाणां संज्ञाः । (४)अत्र च वादजल्पवितण्डानां प्रवृत्तिप्रकारश्छलजातिनिग्रहस्थानलक्षणानि च वादिविनोदेऽन्वेष्टव्यानि ॥ २ ॥

प्रमाणान्तराणि लैङ्गिकेऽन्तर्भावयितुं प्रकरणान्तरमारभते —

एतेन शाब्दं व्याख्यातम् ॥ ३ ॥

शाब्दं शब्दकरणकं ज्ञानमिदमिति यन्नैयायिकादीनामभिमतं तदप्येतेन लैङ्गिकत्वेन लिङ्गप्रभवत्वेनैव व्याख्यातम् । यथा व्याप्तिपक्षधर्मताप्रतिसन्धानापेक्षं लैङ्गिकं तथा शाब्दमपि । तथाहि (५)एते पदार्थाः मिथः संसर्गवन्तः आकाङ्क्षादिमद्भिः स्मारितत्वात् गामभ्याजेति पदार्थसार्थवत् । तत्र हि आकाङ्क्षादिमत्पद-

---

न्यायावयवत्वमित्यर्थः । अवयववत्ता च स्वाश्रयत्वस्वाश्रयवृत्तिध्वंसाप्रतियोगिपञ्चमीत्वत्वोभयसम्बन्धेन । वह्निर्धूमादित्यादिप्रतिज्ञायां धूमादित्यादिसाध्यनिर्देशेऽतिव्याप्तिवारणाय हेतुतावच्छेदकावच्छिन्नहेतुप्रकारकेति बोधविशेषणम् । विस्तरस्तु दीधितिरहस्ये द्रष्टव्यः ।

(१) प्रकृतसाध्येति । प्रकृतसाध्यतावच्छिदकावच्छिन्ननिरूपितहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठव्याप्तिबोधको न्यायावयव उदाहरणमित्यर्थः ।

(२) अविनाभावेति । प्रकृतहेतुकप्रकृतसाध्यकानुमित्यौपयिकव्याप्तिविशिष्टहेतुमत्तया पक्षप्रतिपादको न्यायावयव उपनय इत्यर्थः । न चैवं निगमनेऽतिव्याप्तिः प्रतिपादकपदस्य तत्प्रतिपादनेच्छया प्रयुक्तेत्यर्थकत्वात् निगमनस्य चाबाधितादिसाध्यप्रतिपादनेच्छया प्रयुक्तत्वात् ।

(३) निगमनमिति । पक्षतावच्छेदकावच्छिन्नेऽबाधितसाध्यतावच्छेदकावच्छिन्नप्रकारकबोधजनकन्यायावयवत्वं निगमनत्वमित्यर्थः ।

(४) अत्रेति । परार्थानुमानस्थल इत्यर्थः । वीतरागकथा वादः । विजिगीषुकथा वितण्डा । वक्तृतात्पर्याविषयकल्पनया दूषणाभिधानं छलं । स्वव्याघातकमुत्तरं जातिः । प्रतिज्ञाहान्याद्यन्यतमत्वं निग्रहस्थानत्वम् । वादिविनोद इति । तदाख्यस्वकृतग्रन्थे इत्यर्थः ।

(५) एत इति । इदं रजतं पश्यामीत्यादौ इदन्त्वाश्रयरजतादय इत्यर्थः । आकांक्षादीति । रजतपदाकांक्षादिमत्पदस्मारितत्वादित्यर्थः । योग्यता आदिपदग्राह्या । अत्र स्मारितत्वमात्रं घटपटयोरपीति रजतपदयोग्यतावत्पदस्मारितत्वमुक्तम् ।

कदम्बस्मारितत्वं पदार्थानां मिथः संसर्गवत्त्वव्याप्यं गृहीत्वैव संसर्गवत्त्वमनुमिनोति किं कल्पनीयप्रमाणभावेन शब्देन। ननु नदीतीरे पञ्च फलानि सन्तीत्यनाप्तवाक्ये व्यभिचारान्नेदमनुमानमिति चेन्न आप्तोक्तत्वेनापि विशेषणात्, आप्तत्वं हि प्रकृतवाक्यार्थगोचरयथार्थवाक्यार्थज्ञानवत्त्वं न त्वप्रतारकत्वमात्रं तच्च वाक्यार्थप्रतीतेः पूर्वं दुर्ग्रहमिति चेन्न शब्दप्रामाण्यवादिभिरपि व्यभिचारिशब्दव्यावर्त्तकस्याप्तोक्तत्वस्य ग्राह्यत्वेनाभिमतत्वात्। (१)तेषां प्रामाण्यग्रहणार्थं तदपेक्षा, शाब्दन्तु ज्ञानं तद्ग्रहमन्तरेणाप्युपपद्यते तव तु यादृशं लिङ्गं तादृशग्रहणमावश्यकम् व्याप्यन्त्वाप्तोक्तत्वविशिष्टमिति चेन्न अयमत्राभ्रान्त इति सामान्यतो ग्रहणसम्भवात्। नन्वत्रेति प्रकृतसंसर्गे इत्येव पर्य्यवस्यति तथाच पूर्वमशक्यमेव (२)तद्ग्रहणमिति चेन्न (३)प्रकरणसमभिव्याहारादिमाहात्म्यात् सामान्यत आप्तत्वनिश्चयसम्भवेन लिङ्गनिश्चयसम्भवात्, कदाचित्तत्र विसंवादेऽपि वाष्पादौ धूमधर्मेणेवानुमानप्रवृत्तेः।

नन्वेते पदार्थाः संसृष्टा एवेति वा साध्यम् सम्भावितसंसर्गा इति वा? नाद्यः अनाप्तोक्ते व्यभिचारात्, न द्वितीयः योग्यतामात्रसिद्धावपि संसर्गानिश्चयान्निष्कम्पप्रवृत्त्यनुपपत्तेः, (४)योग्यतायाश्च पूर्वमेव हेतुविशेषणत्वेन ज्ञातत्वात् किमनुमानेनेति चेन्न नियमस्यैव साध्यत्वात् आप्तोक्तत्वेन विशेषणाच्च न व्यभिचार इत्युक्तत्वात्।

नन्वाकाङ्क्षा (५)श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावः स च

---

(१) शब्दप्रामाण्यवादे आप्तोक्तत्वस्य ग्राह्यत्वेपि शाब्दज्ञाने तस्यानपेक्षितत्वान्न दोष इत्याशयेनाशङ्कते तेषामिति। शब्दानामित्यर्थः।

(२) तदिति। वाक्यार्थप्रतीतिपूर्वं प्रकृतसंसर्गे मम त्वाभ्रान्त इति ग्रहणमित्यर्थः।

(३) प्रकरणेति। गमनभोजनादिप्रकरणपूर्वापरोच्चरितवाक्यमाहात्म्यादित्यर्थः। आदिपदाच्चेष्टापरिग्रहः। सामान्यत इति सामान्यतोदृष्टानुमानेनेत्यर्थः। तत्प्रकारश्च पूर्वं यत्र यज्ज्ञानजन्यवाक्यं तत् तद्भ्रमादिविशिष्टज्ञानान्यतरजन्यं घटमानयेतिवाक्यवदिति व्याप्तिं गृहीत्वा ततो यस्तादृशवाक्यप्रयोक्ता स तद्धर्मविशेष्यकतत्प्रकारकज्ञानवान् गच्छामीति.वाक्यप्रयोक्तृगन्तृपुरुषवत् इति सामान्यतो व्याप्तिं गृह्णाति तत्प्रयोक्तुर्गमनरूपप्रकरणज्ञानाच्च सामान्यव्याप्त्या वाक्यार्थयथार्थज्ञानसिद्धिरिति भावः। कदाचिदिति। उत्कलिङ्गभ्रमदशायामित्यर्थः। विसम्वादेऽपि—आप्तत्वभ्रमेण संसर्गानुमापकहेतुभागेपि।

(४) ननु सामान्यतः संसर्गनिश्चयादेव प्रवृत्तिः स्यादत आह योग्यतायाश्चेति।

(५) जिज्ञासायोग्यतारूपाकाङ्क्षाया मणिकारोक्तमर्थमाह. श्रोतरि तदुत्पाद्येति। तथाच श्रो-

स्वरूपसन्नेव हेतुस्तज्ज्ञाने च संसर्गज्ञानस्य पूर्वमेव भावादनुमानवैयर्थ्यमिति चेन्न न हि संसर्गावगमप्रागभावमात्रमाकाङ्क्षां ब्रूमः। किं तर्हि ? स्मारिततदाक्षिप्ताविनाभावविशिष्टम्, तथा च (१)विशेषणांशज्ञानादेवाकाङ्क्षाया ज्ञानात्। तर्हि तावदेवाकाङ्क्षाऽस्त्विति चेन्न विमलं जलं नद्याः कच्छे महिषश्चरतीत्यत्रापि नदीकच्छयोरविनाभावसत्त्वेनान्वयबोधापत्तेः नीलमुत्पलमित्यत्र नीलोत्पलयोरविनाभावाभावेऽपि तदाक्षिप्तयो(२)र्द्रव्यगुणयोरविनाभावसम्भवात्।

(३)यद्वा पदस्मारितगोचरा जिज्ञासैवाकाङ्क्षा (४)अभिधानापर्य्यवसानं वा। तथापि तज्ज्ञानमावश्यकं ज्ञायमानकारणे ज्ञानोपयुक्तव्यभिचारिवैलक्षण्यात् (५)व्याप्तिवत्। अत एवा(६)नन्वयंनि-

---

तृनिष्ठतद्वाक्यज्ञानजन्यतादृशशाब्दबोधप्रागभावस्तद्वाक्यज्ञानजन्यतादृशशाब्दबोधे आकांक्षेत्यर्थः। एकस्य तादृशप्रागभावेपि अन्यस्य तादृशशाब्दबोधानुदयात्समवायेन शाब्दबोधं प्रति स्वरूपेणाकाङ्क्षायाः कारणत्वलाभाय श्रोतृनिष्ठेति प्रागभावविशेषणम्। घटः कर्मत्वमित्यादौ घटवत्कर्मत्वमिति भेदान्वयबुद्ध्यभावसम्पत्तये तद्वाक्यज्ञानजन्येति।

(१) विशेषणांशज्ञानादेवेति। तथाचोक्ताविनाभावरूपविशेषणज्ञानस्यानुमानेनैव सम्भवान्न तद्वैयर्थ्यमिति भावः।

(२) द्रव्यगुणयोरिति। नीलत्वावच्छेदेनोत्पलत्वस्योत्पलत्वावच्छेदेन नीलत्वस्याभावेपि नीलवृत्तिनो गुणत्वस्योत्पलवृत्तिद्रव्यत्वेनाविनाभावो वर्तत एव गुणाभाववति द्रव्यभेदादिति भावः।

(३) उक्ताविनाभावविशिष्टप्रागभावविशेषस्याकाङ्क्षात्वे गौरवादाह यद्वेति। पदस्मारितेति। समभिव्याहृतपदस्मारितपदार्थजिज्ञासेत्यर्थः। चाक्षुषादिना संस्कारवशादुपस्थिते घटादौ तथोपस्थितनीलादेः शाब्दबोधेच्छायामपि नीलो घट इति वाक्यात् घटादौ नीलाद्यन्वयबोधवारणाय पदस्मारितेति न दोषः।

(४) ननु तथापि घटः कर्मत्वमानयनं कृतिरित्यादौ जिज्ञासितस्यानयनादेराकाङ्क्षितत्वापत्तिरत आह अभिधानेति। तथाच यत्पदनिष्ठयत्पदव्यतिरेकप्रयुक्तो यादृशान्वयबोधाभावस्तत्पदस्य तत्पदवत्त्वं तादृशबोधेऽभिधानापर्यवसानमित्यर्थः। प्रयुक्तत्वं चात्र कारणाभावात्कार्याभाव इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः भवति चाव्यवहितपूर्ववर्तितारूपसमभिव्याहारसम्बन्धेन घटपदनिष्ठानुस्वारपदस्य व्यतिरेकप्रयुक्तो घटवत्कर्मत्वमिति भेदान्वयबोधाभाव इति तादृशबोधेऽनुस्वारपदवत्त्वं घटपदस्याकाङ्क्षेति।

(५) व्याप्तिवदिति। उक्तानुमानेनाकाङ्क्षादौ ज्ञानोपयोगित्वसाधनादित्यर्थः।

(६)योग्यतामाहानन्वयेति। तद्धर्मेऽन्वयितावच्छेदकसम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावप्रकारकनिश्चयस्य विशेष्यतावच्छेदकत्वाभावो तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नस्य योग्यतेत्यर्थः। नन्वेवं वह्निना सिंचतीत्यत्र शाब्दभ्रमानुपपत्तिरत आह बाधकेति। तत्र तत्संसर्गाभावप्रमाविशेष्यत्वाभावस्तत्र तद्योग्यतेत्यर्थः एतज्ज्ञानं शाब्दबोधे हेतुरिति न शाब्दभ्रमानुपपत्तिः। बाधनिश्चयदशायां नैतज्ज्ञानसम्भव इति न तत्काले शाब्दबोधातिप्रसङ्ग इति। ननु तथाप्यन्यनिष्ठं यद्ग्राह्यकरणकत्वादिसंसर्गा-

श्रयविरहो वा, बाधकप्रमाणाभावो वा, सजातीये दर्शनं वा, इतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावाप्रतियोगित्वप्रमाविशेष्यत्वं वा योग्यताऽस्तु, तज्ज्ञानमावश्यकम्। आसत्तेरप्यव्यवधानेन स्मरणरूपाया ज्ञानं तन्त्रम्। संसर्गे च संसृज्यमानविशेषादेव विशेष इति नानभिमतविशेषसिद्धिः।

यद्वा एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बत्वात् गामभ्याजेतिपदकदम्बवदित्यनुमानात् ज्ञानावच्छेदकतयाऽभि(१)मतविशेषसिद्धिः।

यत्तु एतानि पदानि स्मारितार्थसंसर्गवन्तीति साध्यम्, तत् पदानां पदार्थसंसर्गवत्त्वं बाधितमित्युपेक्षणीयम्। न च लिङ्गतया संसर्गज्ञापकत्वमेव पदानां संसर्गवत्त्वम्, तस्यानुमानात् पूर्वमसिद्धत्वेन व्याप्तेरग्रहात्।

केचिच्चेष्टा प्रमाणान्तरमिति वदन्ति।

तत्रोच्यते—चेष्टा द्विविधा (२)कृतसमयाऽकृतसमया च। तत्र कृतसमया अभिप्रायस्थं शब्दं स्मारयति न तु संसर्गप्रमामपि

---

भावप्रमाविशेष्यत्वं तदभावस्य सेकादौ सत्त्वादयोग्येऽपि वह्निना सिञ्चतीत्यादौ योग्यतापत्तिरत आह सजातीय इति। तत्सजातीये तत्सजातीयस्यान्वयदर्शनं संसर्गनिश्चयस्तत्र योग्यतेति भावः। पयसा सिञ्चतीत्यादौ प्रकृतसेकसजातीये पयोन्तरकरणकसेके प्रकृतपयःकरणकत्वसजातीयस्य पयोन्तरकरणकत्वस्य संसर्गनिश्चय इति तत्र शाब्दबोधः। वह्निना सिञ्चतीत्यादौ तु सेकसजातीये क्वापि सेके वह्निकरणकत्वसजातीयस्य कस्यापि वह्निकरणकत्वस्य संसर्गनिश्चयो नास्तीति न योग्यता इति तात्पर्यम्। ननु येन केनचिद्रूपेण साजात्यमव्यावर्तकं, पदार्थतावच्छेदकरूपेण च तदद्य जातः पयः पिबतीत्याद्यसंग्राहकमत आह इतरेति। इतरत्वमपरत्वञ्चात्राविवक्षितम् तद्बुद्धेरहेतुत्वात्किन्तु तदीयान्वयितावच्छेदकसम्बन्धे तन्निष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वाभावस्तत्र तद्योग्यतेत्यर्थः। वह्निना सिञ्चतीत्यादौ वह्निनिष्ठकरणताया निरूपकत्वरूपान्वयितावच्छेदकसम्बन्धे सेकनिष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वस्य सत्त्वान्नातिव्याप्तिः। पयसा सिञ्चतीत्यत्र पयोनिष्ठकरणताया उक्तविधसम्बन्धे सेकनिष्ठात्यन्ताभावप्रतियोगित्वभ्रमविशेष्यत्वसत्त्वादसम्भववारणाय प्रमापदम्।

(१) अभिमतविशेषेति। संसर्ग इत्यर्थः। नहि संसर्गाप्रतीत्या वाक्यरचना सम्भवति। न च वक्तृज्ञानं संसर्गाविषयमनुमीयमानं संसर्गमविषयीकृत्य भवति न च संसर्गे संसृज्यमानादन्यो विशेषः किन्तु पूर्वानुमाने साक्षात्संसर्गसिद्धिः उत्तरत्र वक्तृज्ञानावच्छेदकतयेति भावः।

(२) कृतसमयेति। एकाङ्गुल्या ककारः अङ्गुलिद्वयेन खकार इति शब्दबोधाय कृतसङ्केता कृतसमया तदन्याऽकृतसमयेत्यर्थः। अकृतसमया द्विविधा—कृत्यन्वयिनी ज्ञप्त्यन्वयिनी च। तत्राद्या ज्ञानविषयककृतिविषयकशाब्दज्ञानप्रयोज्या, ज्ञानविषयकशाब्दबोधप्रयोज्या चान्येति। अन्यत्सुगमम्।

जनयति लिपिवत्, स्मृत्यारूढः शब्द एव तत्र प्रमाणं शब्दस्य च लिङ्गत्वमुक्तम् । न च शब्दस्मरणं चेष्टाया अवान्तरव्यापारः, चेष्टामन्तरेणापि शब्दादर्थप्रत्ययात् व्यापारत्वे तु चेष्टानैयत्यापत्तेः । नन्वेवं कथमेडमूकस्य चेष्टाधीनो व्यवहारस्तस्य तत्र समयग्रहाभावादिति चेन्न तस्य चेष्टातः कथमर्थेऽपि संप्रत्यय इति चिन्तनीयत्वात् तस्यार्थेऽपि सङ्गतिग्रहाभावात् । व्यवहारस्तु तस्याविनाभावग्रहात् करितुरगयोरिव कशाङ्कुशाभिघातात्तद्व्यवहारपाटवोपपत्तेः ।

अकृतसमया तु या कृत्यान्वयिनी सा प्रयोजकाभिप्रायं स्मारयन्ती प्रयोज्यं प्रवर्त्तयति, न तु कुत्रचित् प्रमां जनयति । यथा शङ्खध्वनौ त्वया गन्तव्यमिति श्रुतशङ्खध्वनिः प्रतिष्ठते, तथा यदा मया तर्जन्यूर्द्धीक्रियते तदा त्वयाऽसौ ताडनीय इति तदा ताडयति, न तु किञ्चित् प्रमिणोति । ज्ञप्त्यन्वयिनी त्वकृतसमया यथा–दशानामङ्गुलीनामूर्द्धकरणेन दश सङ्ख्या मुद्राणां पुराणानां वा त्वया ज्ञातव्येति–कारकप्रधाना । हस्ताकुञ्चनदर्शनात्त्वया समागन्तव्यमिति क्रियाप्रधाना । तथाचानया चेष्टया पदार्था एव स्वतन्त्राः परं स्मार्य्यन्ते न तु तेषां परस्परमन्वयोऽपि बोध्यते, तद्बोधककर्तृकर्मादिविभक्तिवत् प्रकृते चेष्टैकदेशानां नियतानामभावात् । तर्हि संसर्गबोधमन्तरेण चेष्टातः कथं प्रवृत्तिनिवृत्ती इति चेत् संशयप्रतिभयोरन्यतरस्मादिति गृहाण । तस्मान्न चेष्टाऽपि प्रमाणमिति ॥ ३ ॥

ननु शब्दः कथं लिङ्गं शब्दस्यापदेशस्वभावत्वेन(१) लिङ्गभिन्नत्वादित्याशङ्क्याह—

## हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ॥४॥

अपदिश्यते कथ्यतेऽनेनार्थ इत्यपदेशः (२)शब्दः, स च हेतुलिङ्गपर्य्याय एव प्रमाणमिति । लिङ्गविधया प्रमाकरणमित्यर्थः ।

---

(१) अपदेशस्वभावत्वेनेति । स्वरूपाच्छादकरूपतयेत्यर्थः ।

(२) शब्द इति । तथाचेदृशव्युत्पत्त्या शब्देऽप्यपदेशशब्दो वर्तते, स च लिङ्गविधया लैङ्गिकज्ञान एव हेतुरिति, अनुमितिप्रमितिकरणं च शब्दोपि, एवं लिङ्गविधया करणत्वमपि शब्दे वर्तते तथाच हेतुरपदेशो लिङ्गं प्रमाणं करणमिति पर्याया इति सूत्रार्थः ।

एवं करणशब्दोऽपि लैङ्गिकज्ञानकरणे लिङ्ग एव वर्त्तते । द्वयी हि करणगतिः, किञ्चित् सन्निकर्षाधीनप्रवृत्ति किञ्चिदविनाभावबलप्रवृत्ति। शब्दस्य तु अर्थेन न सन्निकर्षो नाप्यविनाभाव इति कथमर्थं गमयेत । सङ्केताद्गमयतीति चेत् सङ्केतो हि पदार्थे न तु तत्संसर्गे । तत्रापि सङ्केत इति चेन्न तस्यानेकविधत्वेन सङ्केतविषयभावानुपपत्तेः । पदार्थसङ्केतबलादेव (१)वाक्यार्थोऽपि भासते इति चेन्न (२)अन्यसङ्केतेनान्योपस्थितावतिप्रसङ्गात् । शब्दस्मारितसंसर्गत्वेन नियम इति चेत् (३)तथाचैतन्नियमबलेनानुमानस्यैव लब्धावसरत्वात् । सङ्केतस्यापि इच्छामात्रत्वेनातिप्रसक्तत्वात्। (४)ईश्वरेच्छा नातिप्रसक्तेति चेन्न तदिच्छामन्तरेणापि गङ्गादिपदात्तीराद्युपस्थितेरित्यलं नैयायिकेषु धृष्टतयेति ॥ ४ ॥

उपमानादीनामपि पराभिमतानाम् अविनाभावबलप्रवृत्तिकानां लैङ्गिक एवान्तर्भाव इति प्रतिपादयितुमाह—

अस्येदमिति बुद्ध्यपेक्षितत्वात् ॥ ५ ॥

उपमानार्थापत्तिसम्भवा(५)भावानामिति शेषः । अस्य व्यापकस्य इदं व्याप्यमित्याकारा या बुद्धिः सा जनकत्वेनापेक्षिता येषां ते तदपेक्षितास्तस्य भावस्तदपेक्षितत्वं तस्मादित्यर्थः । आहिताग्निपाठात् क्तान्तेन बहुव्रीहिः, (६)तारकादिपाठादितो वा ।

तत्रोपमानं तावदनुमानमेव (७)शब्दद्वारा । तथाहि-

---

(१) वाक्यार्थ इति । एकपदार्थनिरूपितसंसर्गवदपरपदार्थरूप इत्यर्थः ।

(२) वैशेषिको दूषयति अन्येति । वाक्यार्थपदार्थयोर्भेदादिति पूरणीयम् । अतिप्रसङ्गादिति । घटपदार्थसङ्केतात्पटपदार्थोपस्थितिः स्यादन्यत्वाविशेषादित्यर्थः ।

(३) यो हि यदर्थनिष्ठः सङ्केतः स तदर्थसंसर्गोपस्थितिहेतुरिति नियमस्वीकारेणातिप्रसङ्गवारणेपि वैशेषिकाभिमतसिद्धिरेवेत्याशयेनाह तथाचेति । त्वदुक्तव्याप्तिबलेन संसर्गोपस्थितिजनकत्वानुमाने तत्पदार्थसंसर्गस्यापि विषयत्वात् संसर्गबोधमात्रजनकतया शब्दस्य प्रमाणान्तरत्वं भवदुक्तमसङ्गतमित्यभिप्रायः । दोषान्तरमाह संकेतस्यापीति । इच्छामात्रं ईश्वरेच्छा वा सङ्केत इति विकल्पाद्ये दोषमाहातिप्रसक्तत्वादिति । भ्रान्तस्य घटशब्दात्पटो बोद्धव्य इतीच्छया पटबोधः स्यादिति भावः ।

(४) द्वितीयमनूद्य दूषयति ईश्वरेच्छेति ।

(५) अत्र सम्भवपदं ऐतिह्यस्याप्युपलक्षकम् ।

(६) तारकादीति । अस्येदमिति बुद्धेर्याऽपेक्षा सा संजाता येषामिति विग्रहादितच्प्रत्यय इत्यर्थः ।

(७) शब्दद्वारेति । शब्देनैव तत्र संज्ञासंज्ञिपरिच्छेदात् शब्दस्य चानुमानान्तर्भूतत्वादिति भावः ।

गोसदृशो गवय इति वाक्यन्तावत् आरण्यकेन कीदृक् गवय इति नागरिकजिज्ञासायामभिधीयते तत्र यो गोसदृशः स गवयशब्दवाच्य इति सामानाधिकरण्यबलात् अतिदेशवाक्यश्रवणानन्तरमेव परिच्छिनत्ति, वनं गतस्तु तादृशं पिण्डमुपलभ्यायमसौ गवयशब्दवाच्य इति प्रतिसन्धत्ते । अतिदेशवाक्यश्रवणसमये गवयत्वं प्रवृत्तिनिमित्तं (१)न ज्ञातमतः कथं संज्ञापरिच्छेद इति चेत् लक्षणया तत्प्रतीतिसम्भवात् । गोसदृशो गवय इति वाक्येऽन्वयानुपपत्तिविरहात् कथं लक्षणेति चेत् (२)तात्पर्य्यानुपपत्तेः सत्त्वात्, न हि व्युत्पित्सुं प्रति गोसादृश्यस्य सखण्डस्य प्रवृत्तिनिमित्तत्वेनोपदर्शनमनुचितं तस्मादखण्डजातिविशेषे तात्पर्यमस्येति लक्षणासम्भवात् ।

(३)यद्वा गवयशब्दो गवयवाचकः असति वृत्त्यन्तरे शिष्टैस्तत्र प्रयुज्यमानत्वात्, असति वृत्त्यन्तरे यः शब्दो यत्र शिष्टैः प्रयुज्यते स तस्य वाचको यथा गोशब्दो गोरित्यनुमानादेव गवयसंज्ञां परिच्छिनत्ति। (४)तर्कश्च यस्त्वयोपमानसहकारी वाच्यः स वरमनुमाने क्लृप्तप्रमाणभावेऽस्तु किं कल्पनीयप्रमाणभावेनोपमानेनेति, अनुमानमयूखे विस्तरोऽत्रान्वेष्टव्यः ।

अर्थापत्तिरप्यनुमानमेव तथाहि दृष्टार्थापत्तिस्तावज्जीवतश्चैत्रस्य गृहासत्त्वेन दृढतरप्रमाणावधृतेन बहिःसत्त्वं कल्पयति । तत्रोपपाद्योपपादकयोर्व्याप्यव्यापकभावावधारणाधीनैव बहिःसत्त्वप्रतीतिः, भवति हि जीवतो गृहासत्त्वं बहिःसत्त्वेन सहचरितं, बहिःसत्त्वं विना जीवतो गृहासत्त्वमनुपप-

---

(१) न ज्ञातमिति । नोपस्थितमित्यर्थः । गवयत्वेन प्रवृत्तिनिमित्तेन गवयपदवाच्योऽयं पिण्ड इति प्रमात्वप्रमितिः सा च न वाक्यमात्रजन्या तदानीं तस्यानुपस्थितेः कथं शक्यतावच्छेदकप्रकारेण शक्तिनिश्चय इति शङ्कार्थः ।

(२) तात्पर्यानुपपत्तेरिति । सैव च लक्षणाबीजमन्यथा यष्टीः प्रवेशयेत्यादावन्वयानुपपत्त्यभावाल्लक्षणा न स्यात् इति सैव लक्षणाबीजमिति भावः । तां प्रकृते प्रदर्शयन्नाह नहीति । सखण्डगोसादृश्यापेक्षयाऽखण्डगवयत्वजातिरूपे तात्पर्यस्य लाघवेनौचित्यादिति तात्पर्यम् ।

(३) ननु यत्र प्रवृत्तिनिमित्तविशेषबोधे न तात्पर्यं किन्तु यो गोसदृशः स गवयपदवाच्य इति स्वरूपाख्यानमात्रम् तत्राप्युक्तसामग्रीतः प्रवृत्तिनिमित्तविशेषबोधो भवत्येव तत्र तात्पर्याभावाल्लक्षणा कथं स्यादत आह यद्वेति । एतदनुमाने पिण्डमात्रे सिद्धसाधनं प्रवृत्तिनिमित्ते चासिद्धिर्दोषो द्रष्टव्यः ।

(४) तर्कश्चेति । गोसादृश्यापेक्षया गवयत्वरूपाखण्डजातौ तात्पर्यमिति लाघवरूपस्तर्क इत्यर्थः।

ज्ञमिति वा ज्ञानम् । तत्राद्येऽन्वयव्याप्तिरेवान्त्ये तु व्यतिरेकव्याप्तेरेव ग्रह इति । व्याप्तिरस्ति न तस्य ग्रहणमिहोपयुज्यत इति चेत् (१)व्याप्तिग्रहमन्तरेणार्थापत्त्याभासानवकाशात्, स्वरूपसत्या व्याप्त्या वस्तुतो यदुपपादकं तस्यैव कल्पना स्यादिति दिक् । (२)संशयकरणिकाया विरोधकरणिकायाश्चानुमानान्तर्भाव ऊहनीयः । विरोधस्यापि सहानवस्थाननियमलक्षणस्य व्याप्तिघटितत्वात् । (३)श्रुतार्थापत्तिरप्यनुमितानुमानं-पीनो देवदत्तो दिवा न भुङ्क्ते इत्यनेन वाक्येन पीनत्वमनुमितं तेन च पीनत्वेन रात्रिभोजनानुमानम्-,देवदत्तो रात्रौ भुङ्क्ते दिवाऽभोजित्वे सति पीनत्वासम्भवादिति ।

(४)सम्भवोऽप्यनुमानमेव, तदुदाहरणं हि—सम्भवति खार्यां द्रोणः सम्भवति द्रोणे आढकम् सम्भवति सहस्रे शतमित्यादि । तत्रेयं खारी द्रोणवती तद्घटितत्वात् यद्येन घटितं तत्तेन तद्वत् यथाऽवयववान् घटः । एवमन्यदप्यूह्यम् । यत्तु सम्भवति ब्राह्मणे विद्या-सम्भवति क्षत्रिये शौर्यमित्यादि, तत्प्रमाणमेव न भवति अनिश्चायकत्वात् ।

---

(१) स्वरूपसत्त्या व्याप्तेर्भ्रमविषयावृत्तित्वादित्याह व्याप्तिग्रहमिति ।

(२) संशयकरणिकाया इति । अर्थापत्तेरिति शेषः । देवदत्तस्य शतवर्षजीवित्वगृहवृत्तित्वनियमनिश्चयानन्तरं कथंचित् गृहावृत्तित्वे निश्चिते जीवित्वनिश्चयगृहान्यावृत्तित्वनिश्चययोः प्रामाण्याप्रामाण्यनिश्चयविरहेण जीवति देवदत्तो न वेति संशयस्ततस्तदपनोदार्थं बहिस्सत्त्वकल्पनमर्थापत्तिरिति एकं मतम् । प्रमाणयोर्विरोधनिश्चयजनितप्रमाणद्वयनिष्ठाप्रामाण्यद्वारकतदविरोधोपपादकज्ञानमर्थापत्तिरत्र च प्रमाणयोर्विरोधनिश्चयः करणम् तथाहि देवदत्ते. शतवर्षजीवित्वगृहान्यावृत्तित्वरूपप्रमाणयोः शतवर्षमध्ये गृहावृत्तिदेवदत्ते विरुद्धार्थविषयकत्वनिश्चयो जातस्तेन प्रमाणयोरप्रामाण्यसंशयस्तत एकप्रमाणस्य बलवत्ताप्रतिसन्धानेन बहिःसत्त्वकल्पनम्, तेन दुर्बलबलीयसोः प्रमाणयोरविरोध उपपादितो भवति अर्थापत्त्येति च मतान्तरम् । अनुमानान्तर्भाव इति । गृहमात्रवृत्तित्वाभावव्याप्यशतवर्षजीवित्ववानयं देवदत्त इति विरोधनिश्चयात्मकपरामर्शाद्बहिःसत्त्वसिद्धिरनुमानमेवाति भावः ।

(३) अर्थान्वयिन्या दृष्टार्थापत्तेरनुमानान्तर्भावं प्रदर्श्य शब्दान्वयिन्या श्रुतार्थापत्तेस्तदाह श्रुतार्थापत्तिरिति । अत्र शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यत इति न्यायाद्रात्रौ भुंक्त इति शब्दकल्पना श्रुतार्थापत्तिरिति भावः । तस्या अनुमानेऽन्तर्भावं प्रदर्शयन्नाहानुमितानुमानमित्यादिना ।

(४) व्याप्तिनिरपेक्षं सम्भवज्ञानं प्रमाणान्तरमिति सम्भवप्रामाण्यवादिनः । व्याप्तिसापेक्षतया सम्भवोऽप्यनुमानमिति वैशेषिकाः ।

(१)अभावोऽपि न मानान्तरं कार्य्येण कारणानुमानवत् कार्य्याभावेन कारणाभावानुमानस्य व्याप्तिमूलकत्वेनानुमान एवान्तर्भावात्।

(२)भट्टमते तु भूतलादावभावग्राहकं प्रमाणमनुपलम्भाख्यम्। तत् क्वचित् प्रत्यक्षे क्वचिच्चानुमानेऽन्तर्भूतं चक्षुरादिनैवाभावग्रहात्। न चेन्द्रियमधिकरणग्रह एवोपक्षीणम्, अभावग्रहपर्य्यन्तं तद्व्यापारसत्त्वात्।

ऐतिह्यमविज्ञातप्रवक्तृकं प्रवादपारम्पर्य्यम्। इति हेति निपातसमुदायः पुरावृत्ते वर्त्तते, तस्य भाव ऐतिह्यम्। तत् यदि बाधितार्थं न भवति तदा शब्दान्तर्निवेशादनुमानम्। यदिह वटे यक्षो मधूकतरौ गौरीत्यादि,तद् यद्याप्तोक्तं तदा पूर्ववत्(३)। नाप्तोक्तश्चेत्तदा न प्रमाणम्। तदेवं प्रत्यक्षमनुमानञ्चेति सिद्धं द्वयमेव प्रमाणमिति ॥ ५ ॥

लैङ्गिकं व्याख्याय इदानीं प्रकरणान्तरमारभते—

**आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः॥६॥**

उत्पद्यत इति शेषः। संयोगविशेषः प्रणिधानादिसन्निधानम्। एतस्मादसमवायिकारणादात्मनि समवायिनि स्मृतिर्विद्याविशेष उत्पद्यते। निमित्तकारणमाह–संस्कारादिति। चकारेण व्यापारी पूर्वानुभवः समुच्चीयते। अनुभवयाथार्थ्यायाथार्थ्ये ह्यियमनुविधत्ते, रज्जुं भुजङ्गतयोपलभ्य पलायितस्य (४)तथैव स्मृतेः। न च सततं स्मृतिप्रसङ्गः, संस्कारोद्बोधाधीनत्वात्, तदुक्तं प्रशस्तदेवपादैः- "लिङ्गदर्शनेच्छानुस्मरणा(५)द्यपेक्षादात्ममनसोः संयोगविशेषात् पट्वभ्यासादरप्रत्ययजनिताच्च संस्काराद् दृष्टश्रुतानुभूतेषु शेषानुव्यवसायस्मरणेच्छाद्वेषहेतुरतीतविषया स्मृतिः" इति।

आर्षं ज्ञानं सूत्रकृता पृथङ् न लक्षितं योगिप्रत्यक्षान्तर्भावितम्।

---

(१) भावनिष्ठव्याप्तेरेवानुमानाङ्गत्वामिति अभावप्रामाण्यवादिनामाशयः। भावनिष्ठव्याप्तिवत् अभावनिष्ठाप्यनुमानाङ्गमविशेषादिति आचार्याशयः।

(२) भट्टमतमिति। अधिकरणप्रत्यक्षेणैवेन्द्रियव्यापारे विरते कथमभावग्रहः, किञ्चालीकस्वभावस्याभावस्येन्द्रियसम्बन्धाभावादप्रत्यक्षतया, शब्दाद्यनुच्चारणदशायामपि अभावज्ञानेन च तद्ग्राहकमनुपलम्भाख्यं प्रमाणमङ्गीकार्यमिति भट्टमताभिप्रायः।

(३) पूर्ववदिति। शब्देऽन्तर्भाव इत्यर्थः।

(४) तथैवेति। अयथार्थेत्यर्थः।

(५) स्मरणादीति। प्रणिधानादिरादिपदार्थः।

पदार्थप्रदेशाख्ये तु प्रकरणे तदुक्तं तद्यथा-"आम्नायविधातॄणामृषीणामतीतनागतवर्त्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेषु लिङ्गाद्यनपेक्षादात्ममनसोः संयोगाद्धर्मविशेषाच्च(१) प्रातिभं ज्ञानं यदुत्पद्यते तदार्षम्" इति। तच्च कदाचिल्लौकिकानामपि भवति यथा 'कन्यका वदति श्वो मे भ्राताऽऽगन्तेति हृदयं मे कथयतीति' ॥ ६ ॥

तदेवं चतुर्विधां विद्यां व्युत्पाद्य इदानीमविद्यां व्युत्पादयितुमर्हति। तत्र (२)संशयविपर्य्ययौ प्रसङ्गात् पूर्वमेव निरूपितौ, स्वप्नं निरूपयितुमाह—

## तथा स्वप्नः ॥ ७ ॥

यथाऽऽत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिस्तथा स्वप्नज्ञानमपीत्यर्थः। उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्य इन्द्रियद्वारेण यदनुभवनं मानसम्, तत् स्वप्नज्ञानम् ।

तच्च त्रिविधम् । किञ्चित् संस्कारपाटवात् कामी क्रुद्धो वा यमर्थमादृतश्चिन्तयन् स्वपिति तस्य तस्यामवस्थायां प्रत्यक्षाकारं ज्ञानं पुराणादिश्रवणजनितसंस्कारवशाज्जायते कर्णार्जुनीयं युद्धमिदमित्याकारम् । किञ्चिद्धातूनां वातपित्तश्लेष्मणां दोषात् । तत्र वातदोषादाकाशगमन-वसुन्धरापर्य्यटन-व्याघ्रादिभयपलायनादीनि पश्यति । पित्तोपचयदोषमहिम्ना वह्निप्रवेश-वह्निज्वालालिङ्गन-कनकपर्वत-विद्युल्लताविस्फुरण-दिग्दाहादिकं पश्यति । श्लेष्मदोषप्राबल्यात्तु समुद्रसन्तरण-नदीमज्जन-धारासारवर्षण-रजतपर्वतादि पश्यति । अदृष्टवशादपि तज्जन्मानुभूतेषु जन्मान्तरानुभूते वा सिद्धोपप्लुतान्तःकरणस्य यज्ज्ञानमुत्पद्यते, तत्र शुभावेदकं धर्मात् गजारोहण-पर्वतारोहण-छत्रलाभ-पायसभक्षण-राजसन्दर्शनादिविषयकम् । अधर्मात्तु तैलाभ्यञ्जनान्धकूपपतनोष्ट्रारोहण-पङ्कमज्जन-स्वविवाहदर्शनादिविषयकं

---

(१) धर्मविशेषात् इति कारणनिर्देशः। सच विद्यातपःसमाधिजो प्रकृष्टधर्मः।

(२) संशयविपर्ययाविति। संशयानध्यवसायावित्यर्थः। निरूपिताविति । साक्षात्प्रकारान्तरेण वा कथितावित्यर्थः। साधारणधर्मवद्धर्मिज्ञानस्य संशयकारणतयोल्लेखात् साक्षात्, असाधारणधर्मवद्धर्मिज्ञानस्य तत्कारणतयाऽनुल्लेखात् तस्यानध्यवसायकारणत्वेन सूचनमिति परम्परया चैतौ निरूपिताविति भावः।

स्वप्नज्ञानमुत्पद्यते। (१)त्रयाणां मिलितानामेवात्र कारणत्वं गुणप्रधानभावमाश्रित्यायं विभागो द्रष्टव्यः ॥ ७ ॥

ननु यज्ज्ञानं स्वप्नमध्ये स्वप्नज्ञानानुभूतस्यैवार्थस्य स्मृतिरूपं जायते तत्र स्वप्नत्वं न वर्त्तते स्वप्नस्यानुभवरूपत्वात् तथा च कस्मात् कारणात्तदुत्पत्तिरित्यत आह—

**स्वप्नान्तिकम् ॥ ८ ॥**

तथेति पूर्वसूत्रादनुवर्त्तते। तेनात्ममनसोः संयोगविशेषात् संस्काराच्च यथा स्वप्नस्तथा स्वप्नान्तिकमपीत्यर्थः। एतावानेव विशेषो यत् स्वप्नज्ञानं पूर्वानुभवजनितात् संस्कारात, स्वप्नान्तिकन्तु तत्कालोत्पन्नानुभवजनितसंस्कारादेवं। तदुक्तं प्रशस्तदेवाचार्य्यैः—(२)"अतीतज्ञानप्रत्यवेक्षणात् स्मृतिरेव" इति। उक्तञ्च वृत्तिकारैः—"अनुभूतवस्तुस्फुरणार्थतया न स्मरणादर्थान्तरं स्वप्नज्ञानम्" इति।

स्वप्नमध्ये प्रमाभूतं यज्ज्ञानं तत् स्वप्नान्तिकमिति केचित्। यथा शय्यायां शयानोऽस्मीत्यादि ॥ ८ ॥

स्वप्नस्वप्नान्तिकयोः कारणं समुच्चिनोति—

**धर्माच्च ॥ ९ ॥**

अधर्मसमुच्चयार्थश्चकारः। (३)कृतव्याख्यानमेतत् ॥ ९ ॥

इदानीं (४)पर्य्यायमधिकृत्याह—

**इन्द्रियदोषात् संस्कारदोषाच्चाविद्या ॥ १० ॥**

अविद्येति सामान्यवाच्यपि पदं विपर्य्यये वर्त्तते प्रकरणात् संशयस्वप्नानध्यवसायानामुक्तत्वात्। तत्रेन्द्रियदोषो वातपित्ताद्यभिभवकृतमपाटवम्। संस्कारदोषो विशेषादर्शनसाहित्यं तदधीनं हि मिथ्याज्ञानं जायते ॥ १० ॥

---

(१) त्रयाणामिति। संस्कारपाटवधातुदोषादृष्टानामित्यर्थः।

(२) अतीतेति। स्वप्नान्तिकं यद्यप्युपरतेन्द्रियग्रामस्य भवति तथापीत्यादिः। तथा चाविद्या चतुर्विधैवेति भावः।

(३) कृतव्याख्यानमिति। सप्तमसूत्रे इत्यर्थः।

(४) पर्यायमिति। साक्षाद्विपर्ययमविद्यामाहेत्यर्थः।

अविद्यासामान्यलक्षणमाह—

तद्दुष्टज्ञानम् ॥ ११ ॥

तदित्यव्ययपदं सर्वनामसमानार्थकमविद्यां परामृशति। साऽविद्या दुष्टज्ञानं—व्यभिचारिज्ञानमतस्मिंस्तदिति ज्ञानं-व्यधिकरणप्रकारावच्छिन्नं—विशेष्यावृत्तिप्रकारकमिति यावत्। दोषश्च ज्ञानस्यानिश्चयरूपत्वमपि। तेनैककोटिकत्वेऽपि संशयो दुष्ट एवानवधारणात्मकत्वात्। तदनेन संशयविपर्य्ययस्वप्नानध्यवसायानाञ्चतुर्णामप्युपग्रहः॥ ११ ॥

अदुष्टं विद्या ॥ १२ ॥

ज्ञानमित्यनुवर्त्तते। अदुष्टमदुष्टेन्द्रियजन्यं यत्र यदस्ति तत्र तदनुभवो वा (१)समानाधिकरणप्रकारानुभवो वा विशेष्यावृत्त्यप्रकारकानुभवो वा विद्येत्यर्थः। तच्चाध्यक्षं लैङ्गिकञ्च द्वयमेव॥ १२॥

नन्वार्षमपि ज्ञानं समानाधिकरणप्रकारकमेव तच्च नेन्द्रियजन्यमसन्निकृष्टार्थगोचरत्वात्। न लैङ्गिकं लिङ्गानुसन्धानमन्तरेण जायमानत्वात्। तथा चैतत्करणं तृतीयं प्रमाणमायातमत आह—

आर्षं सिद्धदर्शनञ्च धर्मेभ्यः॥ १३ ॥

ऋषीणां गालवप्रभृतीनां यदतीतानागतविषयकं ज्ञानं तदार्षम्। यच्च सिद्धानां मन्त्रौषधिगुटिकाञ्जनादिना व्यवहितविप्रकृष्टार्थगोचरज्ञानं प्रतिसिद्धिगतानां यद्दर्शनं तदुभयं धर्मेभ्यो यथार्थसाक्षात्कारि ज्ञानं जायते। तद्योगिप्रत्यक्षेऽन्तर्भावान्न विद्यान्तरमिति वृत्तिकृतः। आर्षं ज्ञानं चतुर्थी (२)विद्यैव, सा च ऋषीणां लौकिकानाञ्च भवति। तच्च मानसं प्रत्यक्षमेव उत्प्रेक्षासहकृतेन मनसा जनितं नियमसन्दर्शनादि-लिङ्गजनितं वा। प्राग्भवीयसंस्काराधीनैवात्र व्याप्तिधीः, स्तनपानेष्टसाधनताव्याप्तिग्रहवत्। प्रशस्ताचार्य्यास्तु सिद्धदर्शनं न ज्ञानान्तरमित्याहुः। तथा हि

---

(१) समानाधिकरणेति। तद्वति तत्प्रकारकज्ञानमित्यर्थः। स्मृतिकरणस्य प्रमाणत्ववारणायानुभवपदम्। विशेष्येति। निर्विकल्पकज्ञानस्य प्रमात्वरक्षार्थमन्त्यकल्पानुसरणम्।

(२) विद्यैवेति। तथाचार्षमपि भाष्यकारश्चतुर्थी विद्यार्थान्तरमित्याह। तद्दूषयति साचेति। तच्चोपस्कारमते द्विविधैव विद्येत्यभिप्रायः।

यदि सिद्धानां गुटिकाञ्जनादिसिद्धिनिमित्तप्रभवं व्यवहितविप्रकृष्टविषयं तदुच्यते तदा प्रत्यक्षमेव । यदि तु दिव्यान्तरीक्षभौमानां ग्रहनक्षत्रसञ्चारादिनिमित्ताधीनं तदा तल्लैङ्गिकमेव तथा सहचारदर्शनेन व्याप्तिपरिच्छेदादिति ॥ १३ ॥

इतिश्रीशाङ्करे वैशेषिकसूत्रोपस्कारे नवमाध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायं नवमोऽध्यायः ।



# दशमाध्याये प्रथमाह्निकम् ।

आत्मगुणानां कारणतो भेदव्युत्पादनं दशमाध्यायार्थः । तत्र "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" अ०१ आ०१ सू०९ इति गौतमीये प्रमेयविभागसूत्रे सुखस्यानभिधानात् दुःखाभिन्नमेव सुखमिति भ्रमनिरासार्थं सुखदुःखयोरेव प्रथमं भेदमाह—

**इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः ॥ १ ॥**

सुखदुःखयोर्मिथः परस्परमर्थान्तरभावो भेदो वैजात्यमिति यावत् । कुत इत्यत आह-इष्टानिष्टकारणविशेषात् इष्टं इष्यमाणं स्रक्चन्दनवनितादि अनिष्टमनिष्यमाणमहिकण्टकादि तद्रूपं यत् कारणं तस्य विशेषाद्भेदात्, कारणवैजात्याधीनं कार्य्यवैजात्यमावश्यकं यतः । भेदकान्तरमाह—विरोधात् सहानवस्थानलक्षणात् न ह्येकस्मिन्नात्मन्येकदा सुखदुःखयोरनुभवः । चकारादनयोः कार्य्यभेदे भेदकं समुच्चिनोति । तथाहि—अनुग्रहाभिष्वङ्गनयनप्रसादादि सुखस्य, दैन्यमुखमालिन्यादि दुःखस्य कार्य्यमिति ततोऽप्यनयोर्भेदः । तदुक्तं प्रशस्ताचार्य्यैः-"अनुग्रहलक्षणं सुखं स्रगाद्यभिप्रेतविषयसान्निध्ये सति इष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगाद् यदनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत् सुखम्" इति । तदिदमतीतेषु स्रक्चन्दनादिषु स्मृतिजमनागतेषु सङ्कल्पजम् । (१)गौतमीये सूत्रे सुखापरिगणनं वैराग्याय सुखमपि दुःखत्वेन भावयतो वैराग्यं स्यादेतदर्थमिति ॥ १ ॥

नन्वास्तां सुखदुःखे परस्परं भिन्ने ज्ञानादभिन्ने स्यातां स्मृत्यनुभववदित्यत आह—

**संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥२॥**

सुखदुःखयोर्ज्ञानान्तरत्वे ज्ञानभिन्नत्वे संशयनिर्णयाभ्यन्तर-

(१) ननु तर्हि गौतमीयोक्तसूत्रपरिगणितप्रमेये सुखं कुतो नोक्तमत आह गौतमीय इति ।

